# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

दशमाध्यायस्य पञ्चमपादमारभ्य द्वादशाध्यायान्तः षष्ठो भागः ।

श्रीकुमारिलभट्टविरचितटुप्टीकाख्यव्याख्यासहितशाबरभाष्योपेतः ।

सोऽयं पुण्यपत्तनीयमीमांसाविद्यालयाध्यापकपदाधिष्ठितैः
'मीमांसाविद्वान्' पदभाग्भिर्गुरुवर्यवैद्यनाथशास्त्रिचर-
णान्तेवासिभिस्तीर्थहळ्ळीग्रामाभिजनसुब्बाशास्त्रिभिः
संशोधितष्टिप्पण्यादिना समलंकृतश्च ।

एतत्पुस्तकं
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
श्रीमन् 'महादेव चिमणाजी आपटे' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।
शालिवाहनशकाब्दाः १८५६ ।
खिस्ताब्दाः १९३४ ।



मूल्यं रूपकचतुष्टयम् (४) ।

# मीमांसादर्शने पञ्चम–षष्ठभागस्थाधिकरणानां वर्णानुक्रमसूचीपत्रम् ।


| अधिकरणम् । | अ. | पृष्ठसंख्या । |
|---|---|---|
| अग्न्यतिग्राह्ययोर्विकृतावतिदेशाधिकरणम् । | | २०७७ |
| अग्न्याधेयप्रभृति पात्राणां धारणनियमाधिकरणम् । | | २१८४ |
| अग्न्याधेये दक्षिणानां विकल्पाधिकरणम् । | | २२७४ |
| अग्निचयनप्रकरणे श्रुतानां दीक्षाहुतिमन्त्राणां सौमिकदीक्षाहुतिमन्त्रैः समुच्चयाधिकरणम् । | | १८७१ |
| अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वाधिकरणम् । | | १९९६ |
| अग्निष्टुद्यागे स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेवाविकारेण प्रयोगाधिकरणम् । | | १९४२ |
| अग्नीषोमीयपशौ पशुपुरोडाशाङ्गस्विष्टकृद्यागीयत्यागकाले निगमेषु च निर्गुणस्यैवाग्नेरभिधानाधिकरणम् । | | १९३६ |
| अग्नीषोमीयप्राग्भागवर्तिपदार्थधर्मस्योपांशुत्वस्य तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तत्वाधिकरणम् । | | ११६२ |
| अग्नीषोमीयपशोः सांनाय्यविकारत्वाधिकरणम् । | | ११०७ |
| अग्नीषोमीयस्य पशोः पयोविकारत्वाधिकरणम् । | | ११०८ |
| अग्नीषोमीये पश्वावनिज्याशेषैस्त्रिभिरङ्गैः स्विष्टकृद्यागानुष्ठानाधिकरणम् । | | २०२६ |
| अग्नीषोमीये पशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् । | | १९९१ |
| अग्नीषोमीये पशौ हृदयाद्यङ्गेष्वपि पञ्चावदानाधिकरणम् । | | २०५४ |
| अग्नीषोमीये पशौ हृदयाद्यङ्गानामेव हविष्ट्वाधिकरणम् । | | २०२१ |
| अग्नौ प्रोक्षणादेः सकृदनुष्ठानाधिकरणम् । | | ११६८ |
| अङ्गप्रधानयोर्धर्मविरोधे प्रधानस्यैव धर्मानुग्रहाधिकरणम् । | | २२४८ |
| अङ्गानां प्रधानैः सहैकदेशकालकर्तृकत्वाधिकरणम् । | | २१६६ |
| अङ्गानां प्रधानोपकाररूपैककार्यार्थत्वाधिकरणम् । | | २१०३ |
| आङ्गिरसा द्विरात्रे षोडशिग्रहणोपसंहाराधिकरणम् । | | १९६९ |

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|
| अञ्जनाभ्यञ्जनाख्ये सत्रे समाम्नातेन गौग्गुलवाभ्यञ्जनादिना प्राकृतनवनीताभ्यञ्जनस्य समुच्चयाधिकरणम् । | १९१८ |
| अतिरात्रे षोडशिग्रहणप्रतिषेधाधिकरणम् । | २०११ |
| अथवा-जगत्साम शब्दार्थनिर्वचनाधिकरणम् । | १९६८ |
| अदोषनिर्घातार्थानां प्रायश्चित्तानां समुच्चयाधिकरणम् । | २२६१ |
| अध्रिगुप्रैषगतमेधपतिशब्दस्य देवतापरत्वाधिकरणम् । | १७६० |
| अध्रिगुप्रैषगतश्येनशलाकश्यवादिशब्दानां कात्स्न्येनोद्धरणप्रकाशकत्वाधिकरणम् । | १७७९ |
| अध्रिगुप्रैषगतोरूकशब्देन वपाभिधानाधिकरणम् । | १७७८ |
| अध्वरकल्पायां प्रातरादिकालभेदेनानुष्ठीयमानानां त्रयाणां त्रयाणामर्थभेदेनाङ्गानामनुष्ठानाधिकरणम् । | २१४२ |
| अध्यूध्न्या होतुः प्राकृतकृत्स्नेडाभक्षनिवृत्त्यधिकरणम् । | २०२९ |
| अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगाधिकरणम् । | २२६१ |
| अनुष्टुब्गायत्रीद्वयप्रग्रथनेन संपादिते, आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानाधिकरणम् । | १७१८ |
| अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गाधिकरणम् । | २२९६ |
| अनुयाज—महापितृयज्ञयोर्यजमानहोतृवरणपर्युदासाधिकरणम् । | २०९६ |
| अभिषेचनीयदशपेययोर्भिन्नतन्त्रताधिकरणम् । | २११० |
| अभ्युदयेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानाधिकरणम् । | १७३३ |
| अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् । | १७८९ |
| अवभृथेऽप्सु साङ्गप्रधानानुष्ठानाधिकरणम् । | २१४७ |
| अवभृथस्यापूर्वताधिकरणम् । | २०४७ |
| अवभृथे स्विष्टकृदाशीर्निगमादिषु स्विष्टकृद्गुणकयोरग्निवरुणयोरभिधानाधिकरणम् । | १९३१ |
| अवेष्टेर्भिन्नतन्त्रताधिकरणम् । | २१९४ |
| अव्यक्तयागेषूद्भिदादिषु सौमिकधर्मातिदेशाधिकरणम् । | १५९३ |
| अस्थियज्ञस्य जीवदधिकारिकत्वाधिकरणम् । | १८४६ |
| अस्थियज्ञस्य मृताधिकारिकत्वपक्षे क्रत्वर्थानामनुष्ठानाधिकरणम् । | १८४९ |
| अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानामननुष्ठानाधिकरणम् । | १८९० |
| अस्थियज्ञस्य मृताधिकारित्वपक्षे जपसंस्कारेष्टीनां लोपाधिकरणम् । | १८४८ |

| अधिकरणम् । | पृष्ठसंख्या। |
| --- | --- |
| अस्थियज्ञस्य मृताधिकारिकत्वपक्षे सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागाननुष्ठानाधिकरणम् । | १८९० |
| अस्थियज्ञे मृताधिकारपक्षे होतृकामनयाऽनुष्ठीयमानानां गुणकामानामननुष्ठानाधिकरणम् । | १८९२ |
| अश्वमेधे विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रस्य बाधाधिकरणम् । | १८९७ |
| अश्वमेधेऽश्वविषये बह्वक्रीयत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे त्रयाणां पशूनामर्थे, षडशीतिरेषां बह्वक्रय इति समासवचनाधिकरणम् । | १७७४ |
| अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशं कपालभेदाधिकरणम् । | २२०७ |
| अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम् । | २२११ |
| अहर्गणे, उपसत्कालीनसुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् । | २१७८ |
| अहर्गणे, उपावहरणार्थं वासोन्तरोत्पादनाधिकरणम् । | २०१९ |
| अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाल एव वासोन्तरोत्पादनाधिकरणम् । | २०१९ |
| अहर्गणे सुत्याकालीनसुब्रह्मण्याह्वानस्याऽऽवृत्त्यधिकरणम् । | २१७८ |
| अहर्गणे द्वादशाहिकधर्मातिदेशाधिकरणम् । | १९९४ |
| अहीने शुक्लान्वारम्भादीनामनियतयजमानर्तृकत्वाधिकरणम् । | २२८४ |
| **आ.** | |
| आग्नावैष्णवादौ देवतासामान्यादग्नीषोमीयादिधर्मातिदेशाधिकरणम् । | ११९३ |
| आग्रयणादेव षोडशिग्रहणाधिकरणम् । | १९९१ |
| आग्रयणेऽन्वाहार्यस्थानापन्नेऽपि वत्से पाकाननुष्ठानाधिकरणम् । | १८८० |
| आग्रयणेऽन्वाहार्यस्थानापन्ने वासासि पाकाननुष्ठानाधिकरणम् । | १८८० |
| आग्रयणे, उपदिष्टवासोवत्सदक्षिणया प्राकृतान्वाहार्यदक्षिणाया बाधाधिकरणम् । | १८७९ |
| आग्रयणे, ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रनियमाभावाधिकरणम् । | २२९४ |
| आग्रयणे जघन्यद्यावापृथिव्यानुरोधेन मुख्यस्यैन्द्राग्नादेरपि विरोधाभावे प्रसूनमयबर्हिर्नियमाधिकरणम् । | २२९४ |

| अधिकरणम् । | पृष्टसंख्या । |
|---|---|
| आग्रयणे वासोवत्सयोः प्राकृतान्वाहार्यधर्मानुष्ठानाधिकरणम् । | १८७९ |
| आग्रयणे वासोवत्सयोरभिधारणाननुष्ठानाधिकरणम् । | १८८१ |
| आग्निमारुतादूर्ध्वमनुयाजोत्कर्षेणोत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतापदानामप्युत्कर्षाधिकरणम् । | २१८८ |
| आग्नेयद्वयस्याऽऽवृत्त्या प्रदानानुष्ठानाधिकरणम् । | २१११ |
| आग्नेयाज्यभागस्याऽऽरादुपकारकत्वाधिकरणम् । | १८११ |
| आग्नेयादिप्रधानानामेकदेशकालकर्तृकत्वाधिकरणम् । | २११२ |
| आज्येन शेषं संस्थापयतीति वाक्ये कर्मान्तरविधानाधिकरणम् । | १७९६ |
| आतिथ्याबर्हिःप्रोक्षणादेरुपसदग्नीषोमीययोः प्रसङ्गाधिकरणम् । | २२३६ |
| आतिथ्याबर्हिषोऽग्नीषोमीयार्थं स्तरणकाले स्तरणमन्त्रावृत्त्याधिकरणम् । | २२३७ |
| आतिथ्याबर्हिष्यग्नीषोमीयदेशे स्तरणार्थं संनह्याऽऽह्रियमाणे संनहनाहरणमन्त्रयोरनावृत्त्यधिकरणम् । | २२३८ |
| आधानस्य तन्त्रताधिकरणम् । | २११७ |
| आधाने निन्दावादेन विहितसामगानप्रतिषेधात्सामविकल्पाधिकरणम् । | २०६७ |
| आघारे मन्त्रान्तेन कर्मादिसंनिपाताधिकरणम् । | २२६९ |
| आनुबन्ध्य—वनस्पतियागयोर्निगमेषु विधिगतोस्राववनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोरभिधानाधिकरणम् । | १९३३ |
| आमिक्षायागे पयोयागधर्मातिदेशाधिकरणम् । | ११०८ |
| आरम्भणीयायामारम्भणीयाया अननुष्ठानाधिकरणम् । | १८०६ |

इ.

| | |
|---|---|
| इडानिगदे यज्ञपतिशब्दस्यासमवेतार्थकस्य विकृतावनूहाधिकरणम् । | ११८९ |

उ.

| | |
|---|---|
| उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां वैरूपादिसाम्नां होतुः पृष्ठ एव निवेशाधिकरणम् । | १९९४ |
| उत्तमप्रयाजस्य संस्कारकर्मत्वाधिकरणम् । | १८०९ |
| उत्तरयोः स्तोमातिदेशाधिकरणम् । | १७२७ |
| उत्तरागोदोहाधिकरणम् । | २११४ |

| अधिकरणम् । | पृष्ठसंख्या । |
| --- | --- |
| उत्तराशब्देनोत्तराग्रन्थपठितानामेव, ऋचामुपादानाधिकरणम् । | १७११ |
| उदवसानीयस्य सत्राङ्गत्वाद्दक्षिणादानस्य ऋत्विक्परिक्रयार्थत्वाधिकरणम् । | १८३९ |
| उपसदामपूर्वत्वाधिकरणम् । | २०४१ |
| उपस्तरणाभिघारणाभ्यां सह चतुरवत्तसंपत्त्यधिकरणम् । | २०७९ |
| उपहव्ये ऋतावौपदेशिकाश्वदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधाधिकरणम् । | १९०० |
| उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतानियमाधिकरणम् । | २०८७ |
| उपांशुयाजे–उपस्तरणाभिघारणयोर्लोपेऽपि हविष एव चतुरवत्तसंपत्त्यधिकरणम् । | २०८१ |
| उपांशुयाजे ध्रौवाज्यविधानाधिकरणम् । | २०८७ |
| उपांशुयाजे वैकल्पिकविष्ण्वादिदेवता–पौर्णमासीमात्रकालिकत्वोभयप्रतिपादनाधिकरणम् । | २०८८ |
| उभयसामके संसवादिक्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्र एव समुच्चित्य निवेशाधिकरणम् । | १९९७ |
| ऊ. | |
| ऊहग्रन्थस्य पौरुषेयत्वाधिकरणम् । | १७०१ |
| ऋ. | |
| ऋग्यजुर्मन्त्राणां तानस्वरेण कर्मणि प्रयोगाधिकरणम् । | १७२४ |
| ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणायाः पुरुषान्तरस्य च निवृत्त्यधिकरणम्। | १९०४ |
| ऋतपेये विहितसोमचमसदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधाकरणम् । | १९०२ |
| ए. | |
| एककार्याणां विकल्पाधिकरणम् । | २२९८ |
| एकत्रिके ऋतावेकस्या एव ऋचस्त्रिरभ्यासेन त्रिकस्तोमकपूर्गानानुष्ठानाधिकरणम् । | १९९१ |
| एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे, आद्य एव तृचे गानाधिकरणम् । | १९४९ |
| एकदेवताकपशुगणे वसाहोमस्य तन्त्रताधिकरणम् । | २१४४ |

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|
| एकपुरोडाशायामपि पौर्णमास्यामुपांशुयाजविधानाधिकरणम् । | २०९१ |
| एकस्मिन्कर्मणि भिन्नकार्याणां गुणानां समुच्चयाधिकरणम् । | २२९८ |
| एकस्मिन् प्रयोगे प्रयाजाद्यङ्गस्य सकृदनुष्ठानाधिकरणम् । | २११६ |
| एकार्थानां करणमन्त्राणां विकल्पाधिकरणम् । | २२१९ |
| **ऐ.** | |
| ऐकादशिनेषु पशुषु सवनीयपशुधर्मातिदेशाधिकरणम् । | १९२२ |
| ऐन्द्रवायवस्य मैत्रावरुणादिग्रहापेक्षया प्रथममनुष्ठानाधिकरणम् । | १९७० |
| ऐन्द्राग्नादिषु दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् । | १९९१ |
| ऐन्द्राबार्हस्पत्ये कर्मणि याज्यानुवाक्यायुगलद्वयस्य विकल्पाधिकरणम् । | २२७१ |
| **क.** | |
| कण्वरथंतरेऽविरुद्धानां बृहद्रथंतरधर्माणां समुच्चयाधिकरणम् । | १७३६ |
| कपिञ्जलाधिकरणम् । | २१२० |
| करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भाधिकरणम् । | २२१४ |
| क्वचिद्दर्विहोमे स्वाहाकारपुनःश्रवणस्यानारभ्याधीतस्वाहाकारानुपसंहारकत्वाधिकरणम् । | २०७९ |
| कामसंयोगेऽप्यैन्द्रवायवस्य पाठप्राप्तस्वस्थान एवानुष्ठानाधिकरणम् । | १९७१ |
| काम्यस्याग्नेराहवनीयत्वाभावाधिकरणम् । | २२८२ |
| काम्यगुणानां विकृतावनतिदेशाधिकरणम् । | १९९७ |
| काम्याग्रताविधौ शुक्रादिग्रहस्यैन्द्रवायवग्रहापेक्षया पूर्वं प्रतिकर्षाधिकरणम् । | १९७३ |
| काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षाधिकरणम् । | १९७२ |
| काम्यानां कर्मणां कामनानुरोधेन पुनः पुनरभ्यासाधिकरणम् । | २११२ |
| कामेष्टौ दानस्यादृष्टार्थत्वाधिकरणम् । | १८४४ |
| काम्येन भ्राष्ट्राद्यग्निना नित्यस्योख्याग्नेर्विकाराधिकरणम् । | २२७९ |
| काम्येऽग्नावाधानादिसंस्कारलोपाधिकरणम् । | २२८२ |
| कृष्णलचरावबघातबाधाधिकरणम् । | १८०१ |
| कृष्णलचरावाग्नेयधर्मातिदेशाधिकरणम् । | ११०२ |
| कृष्णलचरावुपस्तरणाभिघारणयोर्लोपाधिकरणम् । | १८२७ |
| कृष्णलचरौ चतुर्धाकरणादीनामननुष्ठानाधिकरणम् । | १८३४ |

अधिकरणम् । पृष्ठसंख्या ।

कृष्णलचरौ पाकानुष्ठानाधिकरणम् । १८१७
कृष्णलचरौ भक्षणकर्तव्यताधिकरणम् । १८३०
कृष्णलचरौ ब्रह्मभक्षाणां युगपत्परिहरणीयत्वाधिकरणम् । १८३१
कृष्णलचरौ युगपदुपहृतानां सर्वेषां भक्षाणां स्वस्वकाले भक्षणाधिकरणम् । १८३४
कृष्णलचरौ सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय ब्रह्मणः परिहाराधिकरणम् । १८३५
कौण्डपायिनामयने प्राजहितेऽग्नौ मासाग्निहोत्रश्रपणानुष्ठानाधिकरणम् । २२२७

ख.

खलेवाल्यां तक्षणादीनामननुष्ठानाधिकरणम् । १८९२
खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् । १८९२
खलेवाल्यां यूपाहुतेरननुष्ठानाधिकरणम् । १८०७

ग.

ग्रहणप्रतिकर्षेण सादनस्यापि प्रतिकर्षाधिकरणम् । १९७४
ग्रहणप्रतिकर्षेऽपि प्रदानानपकर्षाधिकरणम् । १९७४
गृहमेधीयस्याऽऽज्यभागपुनःश्रवणेनापूर्वत्वप्रतिपादनाधिकरणम् । २०१३
गृहमेधीये—आज्यभागपुनःश्रवणस्य परिसंख्यार्थत्वमिति पञ्चमपक्षे स्विष्टकृच्छ्रवणमपि स्वसजातीयप्रतिपत्त्यन्तराणां शेषकार्याणां निवर्तकमिति प्रयोजनप्रतिपादनाधिकरणम् । २०४१
गृहमेधीये प्रत्यक्षश्रुतस्विष्टकृदादेरप्यनुष्ठानाधिकरणम् । २०४०
गवामयनान्तर्गते महाव्रते—उपगानान्तरकर्त्रीभिः पत्नीभिरातिदेशिकोपगानकर्तॄणामृत्विजामबाधाधिकरणम् । १९१७
गवामयने त्र्यनीकायाः स्वस्थानविवृद्ध्याऽभ्यासाधिकरणम् । १९७८
गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन ब्रह्मसामगानाधिकरणम् । १७१९
गवामयनेऽहरन्तरव्यवधानेन पृष्ठ्यषडहावृत्त्या मध्वशनादेरप्यावृत्त्यधिकरणम् । २००१
गार्हपत्याद्यग्निषु लौकिककर्मानुष्ठानाधिकरणम् । २२१९
गावामयनिके पृष्ठ्यषडहे बृहद्रथंतरयोः प्रत्यहमेकैकस्यैवानुष्ठानाधिकरणम् । १९८८

अधिकरणम् । पृष्ठसंख्या ।
गीस्त्वुपायानां शाखाभेदेन समाम्नातानां विकल्पाधिकरणम् । १७२१

च.

चयनेऽदृष्टार्थस्य सर्वौषधावघातस्यानभ्यासाधिकरणम् । २११९
चयनप्रकरणे पठ्यमानानां वपनार्थानामाभूननार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तयेऽनियमेनोपादानाधिकरणम् । ३९१९
चयने प्रधानानन्तरमेवाग्निविमोकाधिकरणम् । २१७९
चातुर्मास्येषु—अनुयाजीयदेवताप्रकाशनार्थं प्राकृतावाहनमन्त्रस्याविकारेणैव प्रयोगाधिकरणम् । १९४३

ज.

जनकसप्तरात्रे द्वादशाहिकानां सप्तानामह्नां क्रमेण धर्मातिदेशाधिकरणम् । १६१४
जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयाधिकरणम् । २२६९
जपादिमन्त्रेषु मन्त्रसमाम्नायसिद्धस्वरनियमाधिकरणम् । २२६२
जर्तिलयवाग्वादिनिषेधस्य पयोहोमविध्यर्थवादत्वाधिकरणम् । २०६३
ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयादिविकृतावन्वारम्भणीयाया बाधाधिकरणम् । १८०३
ज्योतिष्टोमादौ दक्षिणादानस्य ऋत्विगानत्यर्थत्वाधिकरणम् । १८९९
ज्योतिष्टोमादौ विशेषविहितवर्त्मादिना सामान्यविहिताहवनीयबाधाधिकरणम् । २०६९
ज्योतिष्टोमे—उपरवमन्त्रस्य प्रत्युपरवखननमावृत्त्यधिकरणम् । २२१२
ज्योतिष्टोमे कण्डूयनाङ्गमन्त्रस्य सकृत्प्रयोगाधिकरणम् । २३११
ज्योतिष्टोमे त्रयाणां पशूनामर्थे यूपतन्त्रताधिकरणम् । २११८
ज्योतिष्टोमे दक्षिणान्तर्गतगोष्वेव द्वादशशतसंख्यानिवेशाधिकरणम् । १८८१
ज्योतिष्टोमे द्वादशशतदक्षिणाया अर्ध्यादिसमाख्यानुरोधेन विभागाधिकरणम् । १८९०
ज्योतिष्टोमे द्वादशोत्तरशतगोदक्षिणाया विभज्य दानाधिकरणम् । १८८९
ज्योतिष्टोमे नैमित्तिकैकादिगोदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्यामात्रबाधाधिकरणम् । १८९१

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|

ज्योतिष्टोमे वाससि सोममानोपावहरणयोरनुष्ठानाधिकरणम् । २०१९
ज्योतिष्टोमे सवनीयपुरोडाशादिषु सौमिकपात्रैर्ग्रहचमसैर्दार्शिकपात्राणां जुह्वादीनां प्रसङ्गाभावाधिकरणम् । २२२९
ज्योतिष्टोमे श्रयणार्थेषु पयआदिषु प्रदेयधर्माननुष्ठानाधिकरणम् । १७९१
ज्योतिष्टोमे स्वप्नार्थमन्त्राणामनावृत्त्यधिकरणम् । २२११
ज्योतिष्टोमे हविर्धानशकटभिन्नशकटान्तरे पशुपुरोडाशादीनां हविर्निर्वापानुष्ठानाधिकरणम् । २२२७

त.

तार्तीयसवनिकपुरोडाशादिषु भेदेन हविष्कृतदाह्वानाभावाधिकरणम् । २२४२
तृचे गेयस्य साम्नः प्रत्यृचं परिसमापनाधिकरणम् । १७०९
तृतीयसवन एव षोडशिग्रहणाधिकरणम् । १९६१
त्रैशोकसाम्न उत्तराग्रन्थपठितयोर्बृहत्योरेव गानाधिकरणम् । १७१२
त्र्यनीकायां प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणस्यानैमित्तिकत्वार्थताधिकरणम् । १९७९
त्र्यम्बकहोमादिषु–अभिघारणानभिघारणादीनामर्थवादार्थत्वाधिकरणम् । २०६६
त्यागादौ विधिगतस्यैव देवताशब्दस्योच्चारणनियमाधिकरणम् । १९२९

द.

दर्विहोमशब्दस्य कर्मनामधेयत्वाधिकरणम् । २१२६
दर्विहोमशब्दस्य गुणविधित्वनिराकरणाधिकरणम् । २१२७
दर्विहोमशब्दस्य होमनामधेयत्वाधिकरणम् । २१२७
दर्विहोमानामपूर्वताधिकरणम् । ११२८
दर्विहोमशब्दस्य स्मार्तानां वैदिकानां च कर्मणां नामधेयताधिकरणम् । ११११
दर्विहोमानामपूर्वताधिकरणम् । १६२८
दर्शपूर्णमासचातुर्मास्यादिषु तत्तद्धर्मान्यप्रयोगानुरोधेनाङ्गानामावृत्त्यधिकरणम् । २१४०
दर्शपूर्णमासयोर्द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहाधिकरणम् । १७९४
दर्शपूर्णमासयोरग्निस्विष्टकृद्देवत्यस्य तृतीयानुयाजस्य शेषसंस्काराधर्वाधिकारिष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वाधिकरणम् । १९१७

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|
| दर्शपूर्णमासयोरन्वारम्भणीयायाः सकृदनुष्ठानाधिकरणम् । | ११७६ |
| दर्शपूर्णमासयोरवघातमन्त्रस्य सकृदनुष्ठानाधिकरणम् । | २२०८ |
| दर्शपूर्णमासयोरसोमयाजिनः पुरोडाशद्वयश्रवणस्यानुवादत्वाधिकरणम् । | २०८२ |
| दर्शपूर्णमासविकृतिषु सौर्यादिष्वन्वारम्भणीयानुष्ठानाधिकरणम् । | २२४९ |
| दर्शपूर्णमासादिषु तन्त्रेणाऽऽघाराद्यङ्गानुष्ठानाधिकरणम् । | २१२६ |
| दर्शपूर्णमासादिष्वाग्नेयादीनां समुच्चितानामेकस्वर्गफलत्वाधिकरणम् । | २०९६ |
| दर्शपूर्णमासार्थोद्धरणकालेऽग्निहोत्रार्थोद्धरणाङ्गमन्त्राननुष्ठानाधिकरणम् । | १७८४ |
| दर्शपूर्णमासार्थोद्धृताग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् । | १७८० |
| द्वादशाहे—उत्तमाहवर्जं पत्नीसंयाजान्तत्वाधिकरणम् । | ११७१ |
| द्वादशाहे—उपसत्कालीनसुब्रह्मण्याह्वाने विवृद्धसुत्याहानुपलक्षणाधिकरणम् । | २२०२ |
| द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वाधिकरणम् । | २१९० |
| द्वादशाहे सुत्याकालीनाङ्गानामावृत्त्यधिकरणम् । | २२०१ |
| द्यावापृथिव्यादौ प्रत्यक्षधेन्वादिशब्दोपादिष्टगोद्रव्येण आकृताजद्रव्यस्य बाधाधिकरणम् । | १८९८ |
| दीक्षणीयावाङ्नियमाधिकरणम् । | ११४९ |
| द्विपाशिकायां विकृतावेकवचनान्तबहुवचनान्तपाशमन्त्रयोर्द्विवचनान्ते नोहाधिकरणम् । | १७४९ |
| द्विरात्राद्यहर्गणेषु द्वादशाहिकदशाहधर्माणामनुष्ठानाधिकरणम् । | १९९१ |
| दृष्टार्थानामवघातादिक्रियाणां प्रयोजननिष्पत्तिपर्यन्तमभ्यासाधिकरणम् । | २११९ |
| देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यस्य बलीयस्त्वाधिकरकरणम् । | ११०१ |
| देशकर्तृविषयेऽनियमाधिकरणम् । | २१८१ |
| दोषनिर्घातार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् । | २२६० |

ध.

| | |
|---|---|
| धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् । | ११३९ |
| धर्माणां देवताप्रयुक्तत्वाभावाधिकरणम् । | ११४९ |

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|
| धार्याग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् । | १७८३ |

न.

| | |
|---|---|
| नक्षत्रेष्ट्यादावुपदिष्टैरुपहोमादिभिरातिदेशिकानां नारिष्ठहोमादीनां बाधाभावाधिकरणम् । | १९०६ |
| नानाबीजेष्टावन्त्यबीजसंबन्धिहविष्कृदाह्वानकाल एव वाग्विसर्गनियमाधिकरणम् । | २१७४ |
| नानाबीजेष्टाववघातमन्त्रस्याऽऽवृत्त्यधिकरणम् । | २२०९ |
| नानाजातीयेषु पशुषु पाकभेदात्कुम्भ्यादीनां भेदाधिकरणम् । | २२०७ |
| नानाहीनेषु चतुर्थे दिवसे षोडशिग्रहणाधिकरणम् । | १९१७ |
| निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् । | १९०४ |
| नित्यस्योख्यस्याग्नेर्नित्यं धारणाभावाधिकरणम् । | २२८३ |
| निर्वापमन्त्रे सवित्रादिपदानामसमवेतार्थानां विकृतावनूहाधिकरणम् । | ११८० |
| निर्वापमन्त्रे श्रुतस्याग्निशब्दस्य समवेतार्थस्य विकृतावूहाधिकरणम् । | ११८३ |
| निर्वापाद्यङ्गमन्त्राणामावृत्त्यधिकरणम् । | २२०९ |
| निशिथञ्जेऽमावास्यातन्त्रस्य प्रसङ्गाधिकरणम् । | २२४२ |
| नीवारादिसदृशप्रतिनिधिप्रयोगे व्रीह्यादिमन्त्रस्याविकारेण प्रयोगाधिकरणम् । | १७९६ |
| नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकादिदक्षिणाया बाधाधिकरणम् । | १८७७ |

प.

| | |
|---|---|
| पञ्चदशरात्रकुण्डपायिनामयनयोः सत्रत्वात्सत्रात्मकद्वादशाहधर्मातिदेशाधिकरणम् । | १९११ |
| पञ्चशारदीये—उक्षवाक्ये कर्मशेषप्रतिषेधविधानेन प्रतिसंवत्सरं भिन्नानामेवोक्षणामानयनाधिकरणम् । | २१९७ |
| पशुयागे पर्यग्निकरणान्ताङ्करीतिविधानेन तदुत्तराङ्गप्रतिषेधाधिकरणम् । | १७९३ |
| परिधौ यूपधर्माणामाक्षेपसमानाधिकरणम् । | १७१२ |
| परिधौ स्वधर्मविरोधे यूपधर्माननुष्ठानाधिकरणम् । | २२४९ |

अधिकरणम् । पृष्ठसंख्या ।

प्रकृतिविकृत्योः समानतन्त्रत्वे वैकृताङ्गेन प्रकृतेः प्रसङ्गित्वाधिकरणम् । २२१३
प्रगीताया एव ऋचो वैकृतापूर्वंस्तोत्रसाधनत्वाधिकरणम् । १७२१
प्रयाणमन्त्रस्य सकृत्प्रयोगाधिकरणम् । २२१२
पवमानहविषां त्रयाणामेकतन्त्रत्वाभावाधिकरणम् । २१९६
पवमानेष्टिष्वग्निहोत्रहवणीलेपेऽपि निर्वापानुष्ठानाधिकरणम् । १८९९
पवमानेष्टिष्वाज्यभागयोर्निर्गुणस्यैव देवतापदस्याभिधानाधिकरणम् । १९१२
पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् । १७९१
पशुगणे—उपयाजसाधनानां गुदानां समुच्चयाधिकरणम् । २२७३
पशुगणे—एकवचनान्तमेधपतिशब्दस्योहाधिकरणम् । १७६४
पशुगणेऽध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानामनूहाधिकरणम् १७९८
पशुगणेऽध्रिगुप्रैषगतैकधाशब्दस्य यावत्वचमभ्यासाधिकरणम् । १७९९
पशुगणेऽध्रिगुप्रैषे समस्तवङ्क्रीयत्ताप्रकाशनार्थं समस्यवचनाधिकरणम् । १८६१
पशुगणे पत्नीसंयाजेषु जाघनीनां विकल्पाधिकरणम् । २२७१
पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम् । १९९३
पशुधर्मसामानविध्यपक्षे प्रास्मा इत्यध्रिगुप्रैषस्याविकाराधिकरणम् । १७९६
पशुपरोडाशयागस्य पशुयागीयदेवतासंस्कारकत्वाधिकरणम् । १८११
पशुपुरोडाशेऽन्यतोऽलभ्योपकाराणामाज्यभागादीनां कर्तव्यत्वाधिकरणम् । २२२२
पशौ प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् । २०१२
पशौ मैत्रावरुणस्यैकभागत्वाधिकरणम् । २०३२
पशौ मैत्रावरुणस्यापि शेषभक्षप्रतिपादनाधिकरणम् । २०३१
पश्वर्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्याप्युपकारसिद्धेस्तदर्थं पृथगङ्गाननुष्ठानाधिकरणम् । २२१९
पश्वादिविकृतावुपदिष्टैरेकादशप्रयाजादिभिरङ्गैः प्राकृताङ्गान्तराबाधाधिकरणम् । २८११

अधिकरणम् । पृष्ठसंख्या ।

पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानाधिकरणम् । १७४०

पार्वणहोमयोर्विकृतावनतिदेशाधिकरणम् । १७३८

पाशुकचातुर्मास्येषु परिधौ यूपपरिध्युभयधर्माणामविरुद्धानामनुष्ठानाधिकरणम् । २२४९

पाशुकवाग्यमस्य पौरोडाशिकहविष्कृदाह्वानकाले विसर्गाधिकरणम् । २१७१

प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानाधिकरणम् । १७२९

प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वाधिकरणम् । २११४

प्रायणीयातिथ्ययोर्नियमेन शंय्विडान्तत्वाधिकरणम् । २०४२

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडान्तत्वाधिकरणम् । २०४३

प्रायणीयेष्टौ पयसि प्रदेयधर्माननुष्ठानाधिकरणम् । १७८१

प्रायणीयोदयनीययोरैकादशिनानां विभज्यानुष्ठानाधिकरणम् । १९९०

पुरुषार्थदानपाकहोमानां दीक्षितकर्तृकत्वपर्युदासाधिकरणम् । २०१८

पृष्ठशमनीयस्य ऋत्विगन्तरसंपादनेन प्रत्येककर्तृकत्वाधिकरणम् । १८४१

पृष्ठशमनीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् । १८४२

पौण्डरीके प्रत्यहं विभज्य दक्षिणानयनाधिकरणम् । २०११

पौण्डरीकेऽयुताश्वसहस्रयोः सकृद्दानाधिकरणम् । २०१३

फ.

फलादीनामनतिदेशाधिकरणम् । १९९१

ब.

ब्रह्मसामकाले प्राजापत्यानां पशूनामालम्भोत्कर्षमात्रविधानाधिकरणम् । २१९४

बहुदेवत्ये पशावेकवचनान्तमेधपतिशब्दस्य द्विवचनान्तेन विकल्पाधिकरणम् । १७९३

बहुवचनान्तपाशमन्त्रस्य विकल्पेन प्रकरण एव निवेशाधिकरणम् । १७९२

ब्राह्मणविनियुक्तानां मन्त्राणां विकल्पाधिकरणम् । २२६१

ब्राह्मणस्यैवाऽऽर्त्विज्याधिकाराधिकरणम् । २२८४

ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरनियमाधिकरणम् । २२६३

अधिकरणम् । पुटसंख्या ।

बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानाधिकरणम् । १७१९

बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकालेऽनुष्ठानाधिकरणम् । १७३४

बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितककुभोरेव गानाधिकरणम् । १७१५

बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद्व्यवस्थाधिकरणम् । १७३७

बृहस्पतिसवादिविकृतावौपदेशिकैर्ग्रहणैरातिदेशिकानामैन्द्रवायवादिग्रहणानां समुच्चयाधिकरणम् । १९१२

बृहस्पतिसवादौ दाशतयीभ्य उत्पन्नगायत्रीणां समानयनाधिकरणम् । १६१८

भ.

भिन्नदेवताकपशुगणे वसाहोमस्याऽऽवृत्त्यधिकरणम् । २१४५

भूसंज्ञकैकाहे—औपदेशिकधेनुदक्षिणयाऽऽतिदेशिककृत्स्नक्रतुदक्षिणाया बाधाधिकरणम् । १८९२

म.

मधूदकयोरुपांशुयाजधर्मातिदेशाधिकरणम् । ११०३

मनोतामन्त्रस्य वायव्यादिपशावनूहाधिकरणम् । १९३८

महापितृयज्ञे धानास्ववघातानुष्ठानाधिकरणम् । १८११

महाव्रते तार्प्यादिभिः प्राकृताहतवाससः समुच्चयाधिकरणम् । १९१९

महाव्रते स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामभिः प्राकृतसाम्नां समुच्चयाधिकरणम् । १९२०

मानससंज्ञकस्य ग्रहस्य दशमाहाङ्गत्वाधिकरणम् । २००३

मृताधिकारपक्षेऽस्थियज्ञ इव, सर्वस्वारेऽपि बाध्याबाध्यविवेकाधिकरणम् । १८९४

मौद्गे चरौ प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदोहाधिकरणम् । १७४४

य.

यजमानमरणोत्तरमपि सर्वस्वारस्य समापनाधिकरणम् । १८९३

यज्ञपात्राणां यावज्जीवं धारणनियमाधिकरणम् । २१८२

यज्ञायज्ञीये नित्यमिरापदस्य गिरापदबाधकत्वाधिकरणम् । ११९४

| अधिकरणम् । | पृष्ठसंख्या |
|---|---|
| यज्ञे रथंतरादिसाम्नां तृचे गानाधिकरणम् । | १९८४ |
| याज्यापुरोनुवाक्यानुवचनयोः संस्कारकर्मत्वाधिकरणम् । | १९३७ |
| योनिसाम्न उत्तरावर्णवशेनोत्तरयोर्ऋचोर्गानाधिकरणम् । | १७२९ |
| यूपसंस्काराणां तन्त्रताधिकरणम् । | २११९ |
| यूपैकदशिन्यां यूपाहुतेस्तन्त्रताधिकरणम् । | २१४९ |
| **र.** | |
| राजसूयान्तर्गतानुमत्यादीष्टावन्वारम्भणीयाया बाधाधिकरणम् । | १८०९ |
| राजसूये पृथक्दक्षिणायुक्तानामाग्नावैष्णवादीनां भेदेनाङ्गानुष्ठानाधिकरणम् । | २१९० |
| राजसूयोपक्रमे वृतानामेव कर्तॄणामान्तमुपादाननियमाधिकरणम् । | २१९२ |
| **ल.** | |
| लौकिकयूपस्पर्शे पुरुषार्थतया प्रायश्चित्तविधानाधिकरणम् । | १७४७ |
| **व.** | |
| वचनेनाङ्गप्रधानयोर्भिन्नकालकत्वाधिकरणम् । | २१११ |
| वनिष्ठुवाऽग्नीधः प्राकृतकृत्स्नेडाभक्षनिवृत्त्यधिकरणम् । | २०३१ |
| वरुणप्रघासेषु कर्तॄणां तन्त्रताधिकरणम् । | २१९१ |
| वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थं पृथगङ्गानुष्ठानाधिकरणम् । | २१४८ |
| वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा पृथङ्मन्त्रोच्चारणाधिकरणम् । | २२२९ |
| वरुणप्रघासेष्ववभृथधर्मकर्मान्तरविधानाधिकरणम् । | २१९२ |
| वरुणप्रघासेष्वापराग्निकानां पत्नीसंयाजानामावृत्त्यधिकरणम् । | २१९४ |
| वसोर्धारासंज्ञकेषु कर्मसु मन्त्रान्तेन कर्मादिसंनिपाताधिकरणम् । | २२६४ |
| वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानामन्यतमपुनः श्रुतौ नियमविधित्वाधिकरणम् । | २०४८ |
| वाजपेये उपदिष्टैः प्राजापत्यैः पशुभिरतिदेशिकानां क्रतुपशूनां समुच्चयाधिकरणम् । | १९११ |
| वाजपेये प्राजापत्यपशुष्वङ्गादिश्रपणार्थं कुम्भ्यादीनां तन्त्रताधिकरणम् । | २२०५ |

अधिकरणम् । पुटसंख्या ।

वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितरथघोषादिना प्राकृतदर्भमन्त्रयोर्बाधनिरूपणम् । १९१०
वाजपेये श्रुतेन यजुर्युक्तरथेनाध्वर्योर्दास्यादिभागान्तरस्यानिवृत्त्यधिकरणम् । १९०४
वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचाराधिकरणम् । २१८९
वाजिनयागसुराग्रहयोरैष्टकधर्मातिदेशाधिकरणम् । १६०९
वायव्यपशावुपदिष्टश्वेतगुणेन प्राकृताजद्रव्यस्याबाधाधिकरणम् । १८६०
वायव्यपशौ हिरण्यगर्भमन्त्रस्योत्तराघारे निवेशाधिकरणम् । १८६९
वाक्यविनियुक्तेषु प्रोक्षणादिसंनिपत्योपकारकेष्वपूर्वप्रयुक्तत्वाधिकरणम् । १६४१
विकृतावपि द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्याविकाराधिकरणम् । १७९९
विकृतावुपदिष्टैर्द्रव्यदेवतादिभिः प्राकृतद्रव्यदेवतादीनां बाधाधिकरणम् । २०९०
विकृतावेकदेशग्रहणे यावत्संख्यमाद्यानामेव ग्रहणाधिकरणम् । १९४७
विकृतिविशेषे केवलं श्रूयमाणैः कौत्सादिसामभिः प्राकृतसाम्नां बाधाधिकरणम् । १९२२
विकृतिविशेषे प्रगीतयैव ऋचाऽऽहवनीयोपस्थानाधिकरणम् । १७२२
विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिस्तत्समसंख्यप्राकृतसामबाधाधिकरणम् । १९२२
विकृतिविशेषे सामिधेनीकार्येऽपेक्षितानामेव मनुलिङ्गानामृचामेकादशानां दाशतयीभ्यः समानयनाधिकरणम् । २०१७
विकृतौ देवतागुणवाचिपदस्यापि त्यागादौ प्रयोगाधिकरणम् । १९३०
विकृतौ लुप्तार्थकानां प्राकृतानामङ्गानां बाधाधिकरणम् । १७९९
विकृतौ श्रूयमाणेनौदुम्बरत्वेन प्राकृतखादिरत्वादेर्निवृत्त्यधिकरणम् । २०९१
विभिन्नदेवताकेष्वेकजातीयेषु च पशुषु कुम्भ्यादीनां तन्त्रताधिकरणम् । २२०९
विवृद्धस्तोमकक्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नामबाधस्य—अविवृद्धस्तोमकक्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नां बाधस्य च निरूपणाधिकरणम् । १९११

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|
| विवृद्धस्तोमके क्रतौ बहिष्पवमाने साम्नामभ्यासाधिकरणम् । | १९९६ |
| विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये सामान्तरागमाधिकरणम् । | १९९३ |
| विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव साम्नामावापोद्वापाधिकरणम् । | १९२५ |
| विशेषातिदेशप्रतिज्ञाधिकरणम् । | ११८९ |
| विश्वजिति षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः पृष्ठस्तोत्रे निवेशाधिकरणम् । | १९९३ |
| विषुवत्संज्ञिकायां विकृतावाग्रयणाग्रताया निवेशाधिकरणम् । | १९६८ |
| वीक्षणे स्वर्दृक्पदपाठकालविधानाधिकरणम् । | १९८९ |
| व्यूढात्मकद्वादशाहे मन्त्राणामेव छन्दोव्यतिक्रमाधिकरणम् । | १९८२ |
| व्यूढस्य समूढविकारत्वाधिकरणम् । | १९७६ |
| वेदिप्रोक्षणाङ्गमन्त्रस्य सकृत्प्रयोगाधिकरणम् । | २२१० |
| वैकल्पिकमध्वशनघृताशनयोर्गवामयने षडहान्तेऽनुष्ठानाधिकरणम् । | १९९९ |
| वैमृधादिषु साद्यद्वयपुनःश्रवणस्यानारभ्याधीतसाद्यद्वयोपसंहारार्थत्वाधिकरणम् । | २०७४ |
| वैश्वदेवीयदेवतावाहनकाले विष्णोरुरुक्रमस्याऽऽवाहनाननुष्ठानाधिकरणम् । | १८०२ |
| वैश्वानरेष्टौ द्रव्यसंप्रदानकदानस्यादृष्टार्थत्वाधिकरणम् । | १८४९ |
| वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् । | १९४१ |
| वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य कण्वरथंतरस्य स्वयोनौ गानाधिकरणम् । | १९४० |
| **श.** | |
| शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् । | १६१६ |
| शतोक्थ्यादौ ज्योतिष्टोमिकोक्थ्यादिस्तोत्रानुष्ठानाधिकरणम् । | १६१७ |
| शामित्राग्नौ पशुपुरोडाशश्रपणाननुष्ठानाधिकरणम् । | २२२६ |
| श्रुतिविनियुक्तप्रोक्षणादिधर्माणामपूर्वप्रयुक्तत्वाधिकरणम् । | ११९७ |

| अधिकरणम् । | पृष्टसंख्या । |
|---|---|
| शेषभक्षाणां शेषप्रतिपत्त्यर्थत्वाधिकरणम् । | १८३७ |
| **ष.** | |
| षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् । | ११११ |
| षडहावृत्तौ सर्वषडहान्ते मध्वशनादेः सकृदेवानुष्ठानाधिकरणम् । | २००० |
| षोडशिनो ज्योतिष्टोमाङ्गत्वाधिकरणम् । | १९९८ |
| षोडशिनः सस्तुतशस्त्रताधिकरणम् । | १९९३ |
| षोडश्युत्तर इत्यस्य वैखानसविध्यर्थवादत्वाधिकरणम् । | १९९१ |
| **स.** | |
| सत्रस्य बहुकर्तृकत्वाधिकरणम् । | २००० |
| सत्रात्मकद्वादशाहेऽपि सत्रिभिर्मधुभक्षणकर्तव्यताधिकरणम् । | २००२ |
| सत्राहीनयोरनेकयजमानसमवाये शुकान्वारम्भादीनामेकयजमानकर्तृकत्वाधिकरणम् । | २२८४ |
| सत्राहीनयोर्लक्षणाधिकरणम् । | २०१२ |
| सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थयाऽतिदेशाधिकरणम् । | ११०९ |
| सत्रे, अदृष्टार्थयोर्ऋतुयाज्यावरणहिरण्यदानयोरनुष्ठानाधिकरणम् । | १८९१ |
| सत्रे परिक्रयानुष्ठानाधिकरणम् । | १८३८ |
| सत्रे यजमानसंस्काराणां सर्वार्थत्वाधिकरणम् । | २२८४ |
| सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् । | २००९ |
| सत्रे वरणाननुष्ठानाधिकरणम् । | १८३८ |
| सत्रे शुकान्वारम्भादौ नियोगतो गृहपतिकर्तृकत्वाधिकरणम् । | २२८७ |
| सप्तदशशरावे चरौ मुष्टिलोपेन चतुःसंख्यानुग्रहाधिकरणम् । | १८९६ |
| समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गानाधिकरणम् । | १७१० |
| समिदादिपदानां नामधेयत्वेन प्रयाजानामारादुपकारकत्वाधिकरणम् । | १७४१ |
| समुच्चितानामङ्गानां प्रधानोपकारकत्वाधिकरणम् । | २१०८ |
| समानसंख्येषु प्रधानेषु धर्मविरोधे प्रथमपठितस्यैव धर्मानुग्रहाधिकरणम् । | २२४७ |

| अधिकरणम् । | पृष्ठसंख्या । |
| --- | --- |
| सवनीयपशौ पशुपुरोडाशकर्तव्यत्वाधिकरणम् । | २२४१ |
| सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव प्रसङ्गाधिकरणम् । | २२५० |
| सवनीयपुरोडाशेषु हविष्कृदाह्वानाभावाधिकरणम् । | २२५१ |
| सवनीयादिपशुष्वग्नीषोमीयधर्मातिदेशाधिकरणम् । | १९९२ |
| सर्वस्वारे जीवद्दशायां क्रियमाणप्रायणीयादौ सूक्तवाकान्तर्गतायुराशासनादेरनुष्ठानाधिकरणम् । | १८९४ |
| सहानुष्ठीयमानेषु प्रधानेषु धर्मविरोधे भूयसां स्वधर्मानुष्ठानाधिकरणम् । | २२४१ |
| स्वरुतन्त्रताधिकरणम् । | २१७० |
| साद्यस्के खलेवाल्यां प्राकृतखादिरत्वनियमस्य, चित्रेष्टौ तण्डुलेषु प्राकृतव्रीहियवान्यतरनियमस्य चाभावाधिकरणम् । | १८१० |
| साद्यस्के सोमक्रयार्थं विहितेन त्रैवार्षिकेण पुंगवेन प्राकृतसर्वक्रयद्रव्यबाधाधिकरणम् । | १८९१ |
| साद्यस्के स्थाण्वाहुतेरननुष्ठानाधिकरणम् । | १८०७ |
| सादृश्यविशेषेण नियतप्रकृतितो धर्मातिदेशाधिकरणम् । | १९८१ |
| सामादिशब्दानां गीतिवाचित्वाधिकरणम् । | १७०० |
| सामिधेन्यां त्रिरभ्यासस्य प्रथमोत्तमस्थानधर्मत्वाधिकरणम् । | ११८४ |
| साम्नामृक्संस्कारकर्मत्वेन प्राधान्याधिकरणम् । | १७०२ |
| सामिधेनीविवृद्धौ प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामागमेन संख्यापूरणाधिकरणम् । | १९९१ |
| सारस्वत्यां मेष्यामध्रिगुप्रैषस्य प्रवृत्त्यभावाधिकरणम् । | ११९१ |
| सुब्रह्मण्यानिगदे हरिवदादिगुणवाचकपदानामनूहाधिकरणम् । | ११८८ |
| सूक्तवाके श्रूयमाणस्य यजमानपदस्य विकृतावूहाधिकरणम् । | ११८७ |
| सोमक्रयद्रव्याणां समुच्चयाधिकरणम् । | २२५२ |
| सोमाङ्गदक्षिणीयादिष्वन्वाहार्यदक्षिणाया अननुष्ठानाधिकरणम् । | २२३४ |
| सोमाङ्गेष्टिपश्वादिषु दार्शिकहोतृवरणानुष्ठानाधिकरणम् । | २२३४ |
| सोमाङ्गेष्टिपश्वादिषु दार्शिकान्यन्वाधानप्रसङ्गस्याऽऽक्षेपसमाधानाधिकरणम् | २२३० |

| अधिकरणम्। | पृष्टसंख्या। |
|---|---|
| सोमाङ्गेष्टिपश्वादिषु पत्नीसंनहनानुष्ठानाधिकरणम्। | २२३३ |
| सोमाङ्गेष्टिपश्वादिषु शेषभक्षानुष्ठानाधिकरणम्। | २२३३ |
| सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गाधिकरणम्। | २२२४ |
| सोमाङ्गप्रायणीयादिषु सौमिकेन पयोव्रतेनाऽऽतिदेशिकस्याऽऽरण्याशनस्य प्रसङ्गाधिकरणम्। | २२३३ |
| सोमारौद्रयागे—उपदिष्टैः शरैरातिदेशिकानां कुशानां बाधाधिकरणम्। | १९०९ |
| सोमे, आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशावाज्यभागप्रतिषेधार्थवादार्थत्वाधिकरणम्। | २०११ |
| सोमे, ऐष्टिकधर्मानतिदेशाधिकरणम्। | १९८८ |
| सोमे दीक्षणीयादिषु दार्शिकाग्निसमिन्धनाभावाधिकरणम्। | २२२९ |
| सोमे प्रायणीयादिषु दार्शिकव्रताननुष्ठानाधिकरणम्। | २२३० |
| स्तोमानां लक्षणाधिकरणम्। | १७२८ |
| सोमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां निवृत्त्यधिकरणम्। | २०९२ |
| सौमिकचातुर्मास्येषु प्राकृतासादननियोजनानुवादेन विहिताभ्यामुत्करपरिधिभ्यां प्राकृतयोर्वेदियूपयोर्बाधाधिकरणम्। | १८७३ |
| सौमिकदक्षिणया शेषभक्षाणां प्रसङ्गाभावाधिकरणम्। | २२३४ |
| सौमिकेन दीक्षाकालीनजागरणेन प्रायणीयादिषु दार्शिकजागरणस्य प्रसङ्गाभावाधिकरणम्। | २२२८ |
| सौर्यचराववज्वलनबाधाधिकरणम्। | १८२१ |
| सौर्यचरावुपधानबाधाधिकरणम्। | १८२१ |
| सौर्यचरौ पेषणबाधाधिकरणम्। | १८२४ |
| सौर्यचरौ प्रथनश्लक्ष्णीकरणयोर्बाधाधिकरणम्। | १८२१ |
| सौर्यचरौ भस्माङ्गाराध्यारोपबाधाधिकरणम्। | १८२१ |
| सौर्यचरौ व्युद्धरणबाधाधिकरणम। | १८२१ |
| सौर्यचरौ स्थाल्यामेव पाकाधिकरणम्। | १८२२ |

| अधिकरणम् । | पृष्ठसंख्या । |
| --- | --- |
| सौर्यचरौ संतापनबाधाधिकरणम् । | १८२१ |
| सौर्यचरौ संवपनबाधाधिकरणम् । | १८२१ |
| सौर्यचरौ संधवनबाधाधिकरणम् । | १८२१ |
| सौर्ययागे चरुशब्दवाच्यौदनेन प्राकृतहविर्बाधाधिकरणम् । | १८१९ |
| सौर्ययागे विकल्पेनाऽऽग्नेयद्वयधर्मातिदेशाधिकरणम् । | १९९८ |
| सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहाधिकरणम् । | १७४२ |
| सौर्यादिविकृतावप्यावाहनादिमन्त्रेषु विधिगतशब्देनैव देवताप्रकाशनाधिकरणम् । | १९२१ |
| सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् । | १९९९ |
| संख्यायुक्तवचनविहितानां मन्त्राणां समुच्चयाधिकरणम् । | २२६१ |
| संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम् । | १५९४ |
| संस्रवादिविकृतौ प्राकृतयोर्नैमित्तकयोरुपवत्यग्रियवत्योरननुष्ठानाधिकरणम् । | १९१९ |
| सांग्रहणेष्टावुपदिष्टैरामनहोमैरातिदेशिकानां समुच्चयाधिकरणम् । | १९१७ |

ह.

| | |
| --- | --- |
| हविष्कृदाह्वानाध्रिगुप्रैषादीनामावृत्त्यधिकरणम् । | २२१३ |
| हृदयादीनामेवावदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वपरिसंख्याधिकरणम् । | २०२१ |
| होममन्त्राणां समुच्चयाधिकरणम् । | २२१८ |

**पञ्चम—षष्ठभागस्थाधिकरणानां वर्णानुक्रमसूचीपत्रं संपूर्णम् ।**

===

ॐ तत्सद्ब्रह्मणे नमः ।

टुप्टीकासहितशाबरभाष्यसमेतं

# श्रीमज्जैमिनिप्रणीतं मीमांसादर्शनम् ।

अथ दशमाध्यायस्य पञ्चमः पादः ।

( विकृतावेकदेशग्रहणे यावत्संख्यमाद्यानामेव ग्रहणाधिकरणम् ॥ १ ॥ )

## [ १ ] आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ सि०

द्यावापृथिव्यमेककपालम्, आश्विनं द्विकपालं, वैष्णवं त्रिकपालमित्याद्येकदेशवचनम् । समस्तवचनमपि भवति । आग्नेयमष्टाकपालं निर्वपेदिति । तथा, द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेतेत्येकदेशग्रहणम् । समस्तग्रहणमपि भवति, द्वादशाहेन प्रजाकामं याजयेत् । तथा, एकां सामिधेनीमन्वाह, तिस्रः सामिधेनीरन्वाह, इत्येकदेशग्रहणम् । समस्तग्रहणमपि भवति, पञ्चदश सामिधेनीरन्वाहेति । तदत्र संशयः । किं सर्वेष्वेवाऽऽद्योपादानम्, अन्त्यलोपश्च, उत विकल्प इति । किं प्राप्तम् । आनुपूर्व्यवतां—क्रमवतामेकदेशग्रहणं ब्रूमः । अन्त्यलोप आद्योपादानं चेति । किं कारणम् । मुख्यमाद्यं, जघन्यमन्त्यम् । मुख्यजघन्ययोरन्यतरस्मिन् लोप्तव्ये जघन्यो लुप्येत । मुख्यो ह्यनुग्रहीतव्यः । तदुक्तं, मुख्यं वा पूर्वचोदनाल्लोकवदिति । आगमवत् । यथा, समाजेषु समाजेषु च य आगन्तवो भवन्ति, ते पूर्वोपविष्टाननुपमृद्यैव निविशन्ते, एवमिहापि द्रष्टव्यम् ॥ १ ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

इतश्चाऽऽद्योपादानमन्त्यलोपश्चेति । कुतः । लिङ्गमप्येवं भवति । लु-

[ १ ]

१ द्यावापृथिवीयम् क. ख. । २ (अ० १२ पा० २ अ० ८ सू० २५) ।

ष्येत वा एतत्षष्ठमहो यत्पञ्चाहानुपयन्ति, लुप्येत वा एतत्षष्ठं कपालं यत्पञ्चकपालं निर्वपन्तीति षष्ठस्य लोपं दर्शयति, न प्रथमस्य ॥ २ ॥

विकल्पो वा समत्वात् ॥ ३ ॥

नैतदस्ति, आद्योपादानमिति । किं तर्हि । विकल्पः । आद्यमन्त्यं वोपादातव्यमिति । कुतः । समत्वात् । समो ह्यन्त्यलोप आद्यलोपेन । न ह्यादिलोपे श्रुतिः, नो खल्वप्यन्त्यलोपे । मुख्ये जघन्ये वोपादीयमाने प्राकृतमुपात्तं भवति । न हि विशेषश्रुतिरस्ति, मुख्यमुपादातव्यमिति । तस्मादनियम इति ॥ ३ ॥

क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥

अथ यदुक्तं, समाजेषु समासेषु चाऽऽगन्तुर्जनो[1] यथा वास्तव्यान-नुपमृद्यैव निविशते, एवमिहापीति । युक्तं यद्वास्तव्यैराक्रान्ते देश आग-न्तुर्जनोऽसंभवादन्ते निविशते । इह त्वनाक्रान्ते चिन्त्यते, के प्रथममा-क्रमेयुरिति । तेनात्र न केषांचित्क्रमो विरुद्ध इति ॥ ४ ॥

लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥

अथ यल्लिङ्गमुक्तं, लुप्येत वा एतत्षष्ठमहः, इति षष्ठस्य लोपं दर्श-यति, नाऽऽद्यस्येति । तदविशिष्टं विकल्पेऽपि । संख्याया हि, षष्ठमिति पूरणवचनं भवति । यस्मिन् कस्मिंश्चिदपगते येन प्रथमेन मध्येनान्त्येन वा संख्या पूर्यते, तत्षष्ठम् । यथा षष्ठो भ्रातॄणां न दृश्यत इति, कनीयसि ज्येष्ठे मध्ये वाऽदृश्यमाने भवति । एवमिहापि द्रष्टव्यम् ॥५॥

आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्व-चनादन्त्यविधिः स्यात ॥ ६ ॥

वाशब्दः पक्षं व्यावर्तयति । आदितः प्रवृत्तिर्भवितुमर्हति । कुतः । आरम्भस्य तदादित्वात् । आरम्भो हि तेषामानुपूर्वीवतामादितो न्याय्यः । पूर्वेण ह्युपक्रान्तो द्वितीयादिः कर्तव्यः । स इह प्रथममेव क्रियमाणोऽनुपक्रान्तः केनचित्क्रियेत । पूर्वो हि पदार्थः क्रियमाण उ-त्तरं पदार्थमभिनियच्छति । यः पुनराद्यः पदार्थः सोऽनुपक्रान्त एवान्येन कर्तव्यः । तस्मिन्नेव प्रथममुपादीयमाने नानुपक्रमदोषो

२ ॥ ३ ॥ ४ ॥ ५ ॥

[1] वाऽऽगन्तुः—क. ।

भविष्यति । तस्मात्सर्वत्रैवं, ये क्रमवन्त आरब्धव्याः, ते प्रथमादुपक्रमितव्या इति ।

अपि च, प्रथमस्य निमित्तमुपसंपाद्यम् । न च विरोधोऽस्ति तदादिषु कृतेषु । अन्त्यानां निमित्तेऽपि प्राप्ते, परिपूर्णत्वात्पदार्थानां लोपो न विरुद्धः । तस्मादाद्योपादानमन्त्यलोपश्चेति । अथैवं न्यायेन प्राप्ते यत्र वचनं भवति, तत्रापनीय मध्यमस्यापि विधिर्भवति । यथा, अपबर्हिषः प्रयाजान् यजति । अपबर्हिषावनुयाजौ यजतीति । विना वचनेनान्त्यलोप एव न्याय्य इति ॥ ६ ॥

( एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे, आद्य एव तृचे गानाधिकरणम् ॥ २ ॥ )

[२] एकत्रिके तृचादिषु माध्यंदिने छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ पू०

अस्त्येकत्रिकः क्रतुः, अथैष एकत्रिकः । तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम्, एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमान इति । तदत्र माध्यंदिने पवमाने संशयः । किं तृचाद्यासु गानं कर्तव्यमुताऽऽद्य तृच इति । किं प्राप्तम् । एकत्रिके क्रतौ माध्यंदिने पवमाने तृचाद्यासु स्तोत्रियासु गानं स्यात् । कुतः । छन्दसां श्रुतिभूतत्वात् । श्रुतिभूतानि हि त्रीणि छन्दांसि प्रकृतौ, त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामेति । तानीह चोदकेनैव प्राप्तानि । तान्येवमुपसंहर्तुं शक्यन्ते, यदि तृचाद्यासु गानम् । तस्मात्तृचाद्यास्विति ॥ ७ ॥

आदितो वा तन्न्यायत्वादितरस्याऽऽनुमानिकत्वात् ॥ ८ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । आद्ये तृचे गानं कर्तव्यम् । एष हि न्यायः, क्रम एवमनुगृहीतो भवति । इतरस्य छन्दोनुग्रहस्य प्राकृत-

---

१ ॥ ७ ॥ ]

ननु प्रकृतौ क्रम आनुमानिकः । त्रिच्छन्दस्त्वं तु ' त्रिच्छन्दा आवापो माध्यंदिनः

---

१ निमित्तेऽपरिपूर्ण—ख० ।

त्त्वादिहाऽऽनुमानिकत्वं भवति। आह। ननु क्रमोऽपि प्राकृतत्वादानुमानिकः। उच्यते। उभयोरानुमानिकयोः क्रमानुग्रहो ज्यायान् भवति। कथम्। तत्र हि प्रथमे गायत्रे छन्दस्यभिनिर्वृत्ते द्वितीया स्तोत्रीया प्रारब्धा। प्रथमारम्भेण हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनियच्छति। अप्रवृत्ते कस्मिंश्चित्पदार्थे सर्वं वैकल्पिकं प्राप्नोति न प्रवृत्ते। प्रवृत्ते हि ततोऽन्यदशक्तत्वादप्राप्तम्। प्रारब्धस्य च क्रिया प्राप्ता। तस्यामवस्थायामुभयप्राप्त्यभावादविकल्पः। अत्र किं तदेव प्रारब्धं परिसमाप्यतामथान्यदप्राप्तमारभ्यतामिति। तत्परिसमापयञ्छ्रुतं करोति, परित्यजञ्छ्रुतं जहातीति प्रारब्धं परिसमापनीयं गम्यते। अथेदानीं तस्मिन्निर्वृत्ते वैकल्पिकं कृतार्थत्वादप्राप्तम्। तस्मात्क्रमानुग्रहो न्याय्यो न छन्दोनुग्रह इति।

तत्राऽऽह। ननु गायत्रेण छन्दसा पूर्वं क्रियमाणे नोत्तरकालं त्रैष्टुभमप्युपक्रान्तं भवति। उच्यते। सत्यमुपक्रान्तं भवति, न तु द्वितीयां तृतीयामकृत्वा। अथ तयोः कृतयोः पूर्णे तृचे नैव छन्दसा प्रयोजनम्। तस्मात्प्रत्यक्षत्वात्पूर्वया स्तोत्रीययोत्तरयोः स्तोत्रीययोः

पवमानः' इति वचनेन प्रतीयते। चोदकेन प्राप्नोति। तस्मादानुमानिकत्वात्क्रमबाधश्छन्दसामनुग्रह इति। उच्यते। युक्तं प्रकृतौ बलाबलम्। तत्र प्रत्यक्षाणि शास्त्राणि। इह पुनरुपकारा अतिदिश्यन्ते, न शास्त्राणि। तेन विकृतौ श्रुतिप्राप्तस्य समाख्याप्राप्तस्य च बलाबलशङ्कैव नास्ति। अनाम्नानात्। असत्यां बलाबलशङ्कायामुभयं कर्तव्यं, यदि विरोधो नास्ति। इह तु विरोधः। तत्र च्छन्दसामनुग्रहः किमुत क्रमस्येति। क्रमस्येति ब्रूमः।

अत्र ग्रन्थः। अप्रवृत्ते कस्मिंश्चित्पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्ते। वैकल्पिकानां हि सर्वेषां युगपत्प्राप्तिः। यावदन्यतमाध्यवसायो न भवति तावत्तुल्यप्राप्तिः। अध्यवसाने कृते तदेवानुष्ठेयमितरेषां निवृत्तिः। तदुक्तं, 'निर्देशार्त्ते विकल्पे यत्प्रवृत्तम्' इति। प्रवृत्ते च ततोऽन्यन्न भवति। अशक्यत्वात्। अत्र च पूर्वेण मन्त्रेण गायत्री प्राप्यत इत्युभयसिद्धम्। सा च गायत्री द्वितीयां

१ छन्दसां—क० मु०। २ अनाम्नानादिति—इह विकृतौ प्रमाणयोरिति शेषः। ३ क्रमस्येतिचिन्तायामिति शेषः। ४ (अ० ६ पा० ३ अ० १२ सू० २८)। ५ अनुक्तत्वात्—घ० मु०।

क्रमस्य, क्रमानुग्रहो ज्यायाञ्छन्दोनुग्रह इति ॥ ८ ॥

यथानिवेशं च प्रकृतिवत्संख्यामात्रविकारत्वात् ॥ ९ ॥

इतश्चाऽऽद्ये तृचे गेयमिति। कुतः। यथानिवेशं प्रकृतिवच्छन्देन प्राप्तासु स्तोत्रीयासु, तिसृषु माध्यंदिन इति संख्यामात्रस्य प्रत्याम्नाये न क्रमस्य। आह। ननु यथा क्रमस्य न प्रत्याम्नाय एवं छन्दसामपि। उच्यते। सत्यमेवमेतत्। मुख्यस्तु क्रमानुग्रहः, जघन्यश्छन्दसाम्। तस्मादथ्याद्ये तृचे गातव्यमिति ॥ ९ ॥

( एकत्रिके क्रतावेकस्या एव ऋचस्त्रिरभ्यासेन त्रिकस्तोमकधुर्गानानुष्ठानाधिकरणम् ॥ ३ ॥ )

[ ३ ] त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥ पू०

अस्त्येकत्रिकः क्रतुः, अथैष एकत्रिकः। तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम्। एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमान इति। सन्ति तु धुरि सामानि। तेषु संशयः। किं तृचे गेयानि, उतैकस्यामृचीति। किं प्राप्तम्। त्रिकः स्तोमस्तृचे स्याद् धुरि सामसु। एवं तृचमापकश्चोदकोऽनुग्रहीष्यते। तस्मात्तृचे गेयमिति ॥ १० ॥

एकस्यां वा स्तोमस्याऽऽवृत्तिधर्मत्वात् ॥ ११ ॥ सि०

एकस्यां वा ऋचि गेयं, स्तोमस्य हि तत्राऽऽवृत्तिधर्मता भवति। वचनप्रामाण्यात्। इदं भवति वचनम्, आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठत इति। किमिव वचनं न कुर्यात्। तस्माद् धुरि सामस्वेकस्यामृचि गेयमिति ॥ ११ ॥

( द्विरात्राद्यहर्गणेषु द्वादशाहिकदशाहधर्माणामनुष्ठानाधिकरणम् ॥ ४ ॥ )

[ ४ ] चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥ सि०

सन्ति द्विरात्रादयोऽहर्गणाः, द्विरात्रेण यजेतेत्येवमादयः। तेषु किं कृत्स्नस्य द्वादशाहस्य विध्यन्तः प्रवर्तेत उत प्रायणीयोदयनीयौ

---

गायत्रीमेव पर्युपस्थापयति, न द्वितीयं च्छन्दः। पर्युपस्थापकाभावात्। तस्मात्क्रमानुग्रह इति ॥ ८ ॥ [ ९ ॥ १० ॥ ११ ॥

वर्जयित्वा दशरात्रस्येति । किं प्राप्तम् । अविशेषात्कृत्स्नस्येति । एवं प्राप्ते, ब्रूमः ।

चोदनासु तासु प्रायणीयोदयनीययोः पूर्वत्वेनासंभवाद्दशरात्रस्य विध्यन्तः प्रवर्तते । केन हेतुना । लिङ्गेन विध्यन्तो नियम्येत । किं लिङ्गं भवति । एवमाह— यत्प्रथमं तद्द्वितीयं, यद्द्वितीयं तत्तृतीयं, जगतीमन्तर्गच्छतीति । एवं ज्ञापयति, यत्प्रथमं द्विरात्रस्य, तद्द्वितीयं द्वादशाहस्य गायत्रम् । यद् द्वितीयं द्विरात्रस्य, तत्तृतीयं त्रैष्टुभम् । जगतीमन्तर्गच्छतीति षडहतृतीयं जागतमहरन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । यत्प्रथममिति द्विरात्रस्य वादः, प्रकरणात् । तत्तृतीयमिति द्वादशाहस्य, द्विरात्रे तृतीयाभावात् । अपि चेदमपरं लिङ्गं, गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जगतीमन्तर्गच्छतीति, अन्तराये षडहतृतीयं जागतं दर्शयति । तस्माद्दशरात्रस्य प्रवृत्तिः ॥१२॥

प्राप्तिस्तु रात्रिशब्दसंबन्धात् ॥ १३ ॥

द्विरात्रेण यजेतेति रात्रशब्दः । इहापि दशरात्र इति स एव । तदेतस्मात्प्रकृतिलिङ्गाद्दशरात्रस्य विध्यन्त इति प्राप्ते लिङ्गदर्शनम् ॥ १३ ॥

( चयनप्रकरणे पठ्यमानानां वपनार्थानामाधूननार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तयेऽनियमेनोपादानाधिकरणम् ॥ ५ ॥ )

[ ५ ] अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ १४ ॥ सि०

अग्नौ त्वाधूननार्था मन्त्राः, वेशीनां त्वा पत्मन्नाधूनोमीत्येवमादयः । तान् प्रकृत्य श्रूयते, सप्तभिराधूनोतीति । तथा, अग्नौ वपनार्था मन्त्राः । याः ओषधीरित्येवमादयः । तानपि प्रकृत्य श्रूयते, चतुर्दशभिर्वपतीति । तत्र संशयः । किमाद्योपादानमुतानियम इति । किं प्राप्तम् । आद्योपादानम् । आदितो वा तन्न्यायत्वादिति ।

---

१२ ॥ १३ ॥ ]

प्रकरणे मन्त्रा आम्नायन्ते । ते च प्रकरणात्सर्वे प्रयोक्तव्या इति । श्रुत्या चतुर्द-

---

१ त्रैष्टुभं जगती–मु० । २ ' या जाता ओषधयः ' इति मन्त्रानुपूर्वी शास्त्रदीपिकादिग्रन्थेषु दृश्यते । ३ ( अ० १० पा० ५ अ० २ सू० ८ ) । ४ श्रुत्येति—' चतुर्दशभिर्वपति ' इति संख्याबाधकश्रुत्येत्यर्थः ।

एवं प्राप्ते, ब्रूमः। अपूर्वासु तु संख्यास्वप्रकृतिपूर्विकासु श्रूयमाणासु ब्रूमः। विकल्पः स्यात्। एवं सर्वासां संख्यानामर्थवत्त्वं भविष्यति। आद्योपादाने हि केषांचिन्मन्त्राणामुत्पत्तिरनर्थिकैव स्यात्। गम्यते च ताभिर्वपनम्। प्रकरणात्। या हि प्रकृतिपूर्विका भवन्ति, तासां प्राकृतप्रयोगेणार्थवत्ता। आनर्थक्येन च कारणेन मुख्यातिक्रमः संख्यायाः॥ १४॥

( विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये सामान्तरागमाधिकरणम्॥ ६॥ )

[ ६ ] स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात्॥ १५॥ पू०

इह विवृद्धस्तोमकाः क्रतव उदाहरणम्। एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममिति। तत्रायं संशयः। किं प्राकृतानां साम्नामभ्यासेन संख्या पूरयितव्या, उताप्राकृतानामागमेनेति। किं प्राप्तम्। अनियमः। अविशेषादिति प्राप्ते, ब्रूमः। स्तोमविवृद्धावभ्यासेन संख्या पूर्यते। एवं हि प्रकृतग्रहणम्। इतरथाऽप्रकृतक्रियेति। संख्या हि प्राकृतानां प्रधानभूतानां साम्नां गुणभावेनोच्यते, न प्राधान्येन। न चान्यत्सामद्रव्यं श्रुत्या विधीयते। यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम्। तस्मादभ्यसितव्यानि प्राकृतानि सामानि। यथा धुरि सामानीति॥ १५॥

---

शानां प्रयोग उच्यते। स चानियमेनापि घटते। क्रमस्तु नियतक्रमानेव प्रापयति। प्रकरणे तु सर्वे प्रयोक्तव्याः। ननु क्रमोऽपि प्रकरणं नैव बाधते[2]। प्रकृतग्रहणात्। उच्यते। सर्वविषयतां प्रकरणेनाश्रमतां बाधते। सा च क्रमानुग्रहे सर्वविषयता न घटते। तस्मात्प्रकरणानुग्रहः। अतो विकल्पः॥ १४॥

पूर्वपक्षस्तु—प्राकृतस्य संख्याविधानं, संख्येयस्याचोदितत्वात्। तस्मात्तेषामभ्यासः। यथा[3] प्रयाजानां संख्याविधानम्। संख्येयास्तु त एव॥ १५॥

---

१ पूर्येत — ख०। २ नैव बाधत इति—क्रमप्रकरणयोर्विरोधो नास्तीत्यभिप्रायः। ३ यथेति—यथा पशौ 'एकादशप्रयाजान् यजति' इत्यनेन प्राकृतप्रयाजानां संख्याविधाने तेषामभ्यासः, तद्वत्प्रकृतेऽपीत्यर्थः।

आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । अप्राकृतानां साम्नामागमेन संख्या पूरयितव्येति । कुतः । अभ्यासो न हि श्रूयते । एतावच्छ्रूयते, एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति । यावांश्च श्रुतस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम् । नन्वागमोऽपि न श्रूयते । उच्यते । उभयस्मिन्नश्रूयमाण आगमो न्याय्यः । एवमागमपूरिता संख्या समञ्जसा भविष्यति । इतरथाऽभ्यासपूरिताऽसमञ्जसा स्यात् । तस्मादागमेन पूरयितव्येति ॥ १६ ॥

संख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥

इतश्चाऽऽगमेनेति । कुतः । पृथक्त्वनिवेशिनी हि संख्या । यथा, अष्टौ घटा इति । अभ्यासेनापृथक् स्यात् । तस्मादागमेन पूरयितव्येति ॥ १७ ॥

पराक्शब्दत्वात् ॥ १८ ॥

इतश्चाऽऽगमेनेति । कुतः । पराक्शब्दो हि भवति । पराग् बहिष्पवमानेन स्तुवन्तीति । स चानभ्यासस्य वाचकः । यथा, पराचीः सामिधेनीरन्वाहेति, अनभ्यस्ता इति गम्यते । तस्मादप्यागमः ॥१८॥

उक्ताविकाराच्च ॥ १९ ॥

इतश्चाऽऽगमः । एवमुक्तस्याविकारो भवति । किमिदमविकार इति । अपुनर्वचनम् । तत्र जामितादोषो न भविष्यति । अभ्यासे हि स स्यात् । जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियेतेति ॥ १९ ॥

अश्रुतित्वान्नेति चेत् ॥ २० ॥

---

सिद्धान्तस्तु—पृथक्त्वनिवेशः संख्याया न्याय्यः । यत्र वचनं नास्ति । वचनेन तु बाध्यते । यत्र संख्येयानुवादेन संख्याविधानं, यथा ‘ एकादश प्रयाजान् ’ इति । तत्र हि प्रयाजा वाक्येनोपात्ताः । तत्र संख्याऽभ्यस्यते । उपात्तत्वात्संख्येयस्य । इह तु नोपात्तं संख्येयं वाक्येन, यथा प्रयाजेषु । तस्मादत्र पृथक्त्वनिवेश एव, नाभ्यासः ॥ १६ ॥ [ १७ ॥ १८ ॥ १९ ॥

---

१ अभ्यासे वै पुंथंकु—क. । २ यत्र वचनं नास्तीति—यत्र विशिष्याभ्यासस्य वचनं—उपादानं नास्तीत्यर्थः । ३ बाध्यत इति—यथा ‘ अवृत्तं धूर्षु स्तुवते ’ इति शेषः । ४ अभ्यस्यते—अभ्यासेन पूर्यत इत्यर्थः ।

इति चेत्, इति पुनर्यदुक्तमागमोऽपि नैव श्रूयत इति । तत्परिहर्तव्यम् ॥ २० ॥

स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥

अर्थेन सामानि चोद्यन्ते । कतमेनार्थेन । एकविंशेनातिरात्रेण प्रजाकामं याजयेदित्येवमादीनां वाक्यानामर्थेनेति । न ह्यनागम्यमानेषु सामस्वेताः संख्याः सामञ्जस्येन संभवन्ति । तस्मादर्थचोदितानामिदं परिमाणशासनं कृत्वा कृतार्थः शब्द एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति, अर्थवादमागमं न शक्नोति वारयितुम् । तस्मादागमेन पूरणमिति ॥ २१ ॥

आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥

इतश्चाऽऽगम इति पश्यामः । आवापवचनं हि भवति । त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवाऽऽवपन्ति, अत एवो-द्वपन्तीति । एतदभ्यासे नावकल्पते । तस्मादप्यागम इति ॥ २२ ॥

साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥

इतश्चाऽऽगमः । कुतः । साम्नां ह्येवमुत्पत्तिरर्थवती भवति—

दश सामसहस्राणि शतानि च चतुर्दश ।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः ॥
अशीतिशतमाग्नेयं पावमानं चतुःशतम् ।
ऐन्द्रं स्यात्सप्तविंशानि यानि गायन्ति सामगाः ॥ इति ।

इतरथैषां साम्नामुत्पत्तिरनर्थिका स्यात् । तस्मादप्यागम इति ॥ २३ ॥

धुर्येष्वपीति चेत् ॥ २४ ॥

अथ यदुपवर्णितं, यथा धूरि सामास्विति । तत्परिहर्तव्यम् ॥ २४ ॥

नाऽऽवृत्तिधर्मत्वात् ॥ २५ ॥

नैतदेवं युक्तम् । धुरि सामस्वावृत्तिधर्मकाणि हि तानि । वचनप्रामाण्यात् । इदं तत्र वचनम् । आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठेष्वपतिष्ठन्त इति । वचनात्तत्र क्रियते । तद्वदिह वचनं नास्ति ।

२० ॥ २१ ॥ २२ ॥ २३ ॥ ॥ २४ ॥

१ षड्विंशानि—क० ।

तस्माद्विषममेतदुपवर्णनम् । अत्राऽऽगमेन संख्या पूरयितव्येति सम्ब-
न्धेतदिति ॥ २५ ॥

( विवृद्धस्तोमके क्रतौ बहिष्पवमाने साम्नामभ्यासाधिकरणम् ॥ ७ ॥ )

[ ७ ] बहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥ सि०

विवृद्धस्तोमकेषु क्रतुषु संशयः । बहिष्पवमाने किं साम्नामाग-
मोऽभ्यास इति । पूर्वेण न्यायेनाऽऽगम इति । एवं प्राप्ते, ब्रूमः । बहि-
ष्पवमाने तु नैवम् । ऋगागमस्तत्रेति । कुतः । सामैकत्वात् । कथम् ।
यदुत्तरयोः पवमानयोस्तृचाय तृचाय हिंकरोति । अथ कस्माद्बहिष्प-
वमाने सकृदेव हिंकरोतीति । एकं हि तत्र सामेति ब्रूयात् । स्वारमेव
गायत्रमिति वचनात्सामैकत्वे ज्ञाते ऋगागमेन संख्या पूरयितव्येति ।
सामाभ्यासितव्यमिति ॥ २६ ॥

( सामिधेनीविवृद्धौ प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामागमेन संख्यापूरणा-
धिकरणम् ॥ ८ ॥ )

[ ८ ] अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यास-
प्रकृतित्वात् ॥ २७ ॥ पू०

स्तौ दर्शपूर्णमासौ । तत्र काम्याः सामिधेनीकल्पाः । एकविंश-
तिमनुब्रूयात्प्रतिष्ठाकामस्य । चतुर्विंशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य ।
एकविंशतिं चानुब्रूयादन्नकामस्य, द्वाविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य ।
षड्विंशतिमनुब्रूयात्पशुकामस्येत्येवमादयः। तत्रायमर्थः सांशयिकः । किं
सामिधेनीष्वागमेन संख्या पूरयितव्या, उताभ्यासेन, उत यावदुक्तम-
भ्यस्य शेषमागमेनेति । किं प्राप्तम् । पूर्वेण न्यायेनाऽऽगम इति । अपि
चाविशेषोऽर्थः । अभ्यासेन हि पूर्यमाणा न सामञ्जस्येन स्यात् ।
तस्मादागम इति । एवं प्राप्ते ब्रूमः ।

अभ्यासेन तु संख्यापूरणमिति । तुशब्दः पक्षव्यावर्तकः । नाऽऽ-
गमः । किं तर्हि । अभ्यासः । कुतः । अभ्यासप्रकृतित्वात् ।
प्रकृतावभ्यासेन संख्या पूरिता, त्रिः प्रथमामन्वाह त्रिरुत्तमामिति ।
कथम् । पञ्चदश सामिधेन्य इति श्रुतिः । एकादश च समाम्नाताः ।
तत्राभ्यासेनाऽऽगमेन वा संख्यायां पूरयितव्यायामभ्यास उक्तः ।

२९ ॥ २१ ॥

1 'स्वारसामैव गायति' इत्येवं माद्रवीपिकादिधृतः पाठः । २ सामाभ्यसि—ख० ।

त्रिः प्रथमामन्वाह, त्रिरुत्तमामिति । अनेन नियमेन प्रथमोत्तमयोरभ्यासः कर्तव्य इति । यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसंख्या पूर्यते तावत्कृत्वोऽऽभ्यसितव्यामित्येतदभिप्रायं त्रित्वम् । तथा हि दृष्टार्थता । त्रिसंख्याभिप्रायेऽदृष्टं कल्प्यं स्यात् । तस्मादिहापि तस्मात्कृतित्वाद्यावत्कृत्वोऽभ्यस्यमानयोर्यथोदिता संख्या पूर्यते तावत्कृत्वोऽभ्यसितव्यामिति ॥ २७ ॥

अविशेषान्नेति चेत् ॥ २८ ॥

इति यदुक्तं तत्परिहर्तव्यम् ॥ २८ ॥

स्याद्धर्मत्वात्प्रकृतिवदभ्यस्येताऽऽसंख्यापूरणात् ॥ २९ ॥

स्यादभ्यासः । कुतः । प्रकृतिधर्मत्वं हि विकृतेः । तस्मादासंख्यापूरणादभ्यसितव्यम् । एवं प्रकृतिवत्कृतं भविष्यति । चोदकानुरोधेनाभ्याससामञ्जस्यमभ्युपगन्तव्यम् । तस्मादभ्यास इति ॥ २९ ॥

यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । नैवमासंख्यापूरणात्प्रथमोत्तमे अभ्यसितव्ये इति । यावदुक्तमभ्यस्यावशिष्टानामागमेन पूरयितव्या संख्येति । कुतः । कृतपरिमाणत्वादभ्यासस्य । कृतं ह्यभ्यासस्य परिमाणम् । त्रिः प्रथमामन्वाह, त्रिरुत्तमामिति । त्रिसंख्या चाभ्यासेन विवक्षिता, न पूरणी संख्या । तथा श्रुतिः परिगृहीता स्यात् । इतरथा लक्षणा ।

अथ यदुक्तं दृष्टार्थता चैवं भवतीति । नैतदेवम् । आदर्तव्यो हि त्रित्वानुरोधः । द्विचतुष्केणापि हि संख्या पूर्यते । तथाऽपि प्रथमोत्तमयोस्त्रिरभ्यासोऽनुष्ठेयः । तेन संख्या पूरयितव्येति । इहापि तेनैवाभ्यासेन संख्या पूर्यते । भवति हि सोऽप्यत्र संख्यापूरणः । प्रकृतौ प्रथमोत्तमे च त्रिरभ्यस्येते । संख्या च पूरिता । इहापि तद्वदेव कर्तव्यम् । प्रथमोत्तमे च त्रिरभ्यसितव्ये । संख्या च पूरयितव्या । न प्रकृतावेष शब्दार्थो गम्यते, अनेनाभ्यासेन संख्या पूरयितव्येति । अभ्यासः कर्तव्य इति वचनादवगम्यते । संख्या पूरयितव्येति सामर्थ्यात् । सा च प्रकृतावर्थादनेन पूरिता । यथार्थात्कृतो न स चोद-

२७ ॥ २८ ॥ २९ ॥

आह। परिहारेऽपि, आहवनीये भवतीति प्रत्ययोऽपह्नूयेत। अपह्नुध्यामहे। भवत्याहवनीयप्रत्ययः। अशक्तोऽसौ कर्तुमित्यपि किं न भवति। अशक्यं न करिष्यते। आह। योऽयं सामान्यप्रत्यय उच्यते, स सर्वेषु विशेषेषु कार्यमासञ्जति। एवं चेद्वर्त्मादिहोमेषु चान्यत्र च तेनाऽऽहवनीयो विहितः। तत्र यो वर्त्मादिहोम आहवनीयप्रत्ययः स न शक्यः परिहर्तुम्। अतो वर्त्मादिहोमं बाधित्वाऽवतिष्ठतेति।

अत्रोच्यते। नैतदेवम्। न हि सामान्यवाची शब्दो विशेषानभिवदति। यदि चाभिवदेत्, अप्रजाते गवि नावकल्पेत। पूर्वदर्शनाभावात्। सामान्ये च दृष्टपूर्वत्वादवकल्पते। तस्मान्न सामान्यं विशेषानभिवदति। तस्मान्न वर्त्मादिहोम आहवनीयप्रत्ययः। अभिवदन्वा न मुख्यया वृत्त्याऽभिवदेत्। कथं तर्हि। लक्षणया। लक्षणा च श्रुत्या बाध्येत। तस्माद्वर्त्मादिहोमे श्रुत्या वर्त्मादिषु प्राप्तेष्वशक्य आहवनीयो विज्ञातुं कर्तुं चेति।

आह। ननु विपरीतमप्येतत्स्यात्, आहवनीये प्राप्ते वर्त्मादिप्रत्ययो न शक्य इति। भवेदेवं, किंतु विशेषे वर्त्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लक्षणया। तत्र श्रौतप्रत्ययो बलीयानित्युक्तम्। ननु-सामान्येऽप्याहवनीयप्रत्ययः श्रौतः। उच्यते। वर्त्मादिप्रत्ययोऽपि

अपि च वाक्यार्थे पदवचनमिदम्। वाक्यार्थश्चेत्, न सामान्यं प्रत्याययति। तस्माद्विशेष एव शब्देनोच्यते। तत्र चानन्तर एव कार्यम्। इतरस्मिन्सामान्येन, विशेषः प्रकरणादिभिरवच्छेत्तव्यः। तस्मात्तत्र विप्रकर्षः। इह तु संनिकर्षः। अनेन न्यायेन विशेषश्रुतेन गार्हपत्येनाऽऽहवनीयो बाध्यते।

अथवा—इदमेवोदाहरणं संभवति। आहवनीयः पवमानेष्ट्यादिभिरुत्पादितः प्रयोजनमपेक्षते। तत्पानारम्यवादेनाधिकरणभावो होमेषु विधीयते। इह तु पदविशिष्टो होम उत्पाद्यते। तत्राऽऽहवनीयो न शक्यते विधातुम्। पदेन होमस्य व्याप्तत्वात्। आहवनीयो विधीयमान उत्पत्तिवाक्येन यादृशा होमा अवगतास्तादृशाननूद्य विधी-

१ आहवनीयः—क. ग.। २ भवन्तीति—ग.। ३ आहवनीये—ग.। ४ वर्त्मादिहोमं बाधित्वेति—होमे वर्त्माद्यधिकरणानां बाधित्वेत्यर्थः। अथवा 'वर्त्मादि बाधित्वा' इति वा पाठ आवश्यक इति भाति। ५ शक्यत इति—ग.। ६ पदवचनमिदमिति—कुण्डिनस्यापत्यं गोत्रमिति पूरणम्। ७ विशेषश्रुतेन—पत्नीसंयाजेषु श्रुतेनेत्यर्थः।

सामान्ये श्रौत। । होमे हि स विशिष्टे विधीयते, कर्मोपदेशात्तु विशेषे भवति । तस्माद्दर्वीहोमं वर्जयित्वाऽन्येषु होमेष्वाहवनीयः कर्तव्य इति ॥ १६ ॥

( वैमृधादिषु साप्तदश्यपुनःश्रवणस्याऽनारभ्याधीतसाप्तदश्योपसंहारार्थत्वाधिकरणम् । ९ ॥ )

[ ९ ] अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत्प्राकृतप्रतिषेधार्थम् ॥ १७ ॥ पू०

अनारभ्य किंचिदाम्नायते, सप्तदश सामिधेनीरनुब्रूयादिति । तत्प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तं, कासुचिद्विकृतिषु पुनः श्रूयते— वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायां त्रैधातव्यायामाग्रयणेष्ट्यामिति । तासु विकृतिष्वस्य श्रवणं किमर्थमिति विचार्यते । किं प्राप्तम् । अप्रकरणे यच्छास्त्रमाम्नातं विकृतिविशेषे पुनरविकृतं श्रूयते, तत्प्राकृतपञ्चदशतां प्रतिषेद्धुम्, वैमृधादिषु सप्तदश सामिधेनीरनुब्रूयादिति, नान्यत्प्राकृतं कुर्यादिति । न चैवं विज्ञायते, वैमृधादिष्वेव साप्तदश्यं नान्यासु विकृतिष्विति । तासु तत्प्रत्यक्षेण वाक्येन श्रुतं न शक्यं बाधितुम् ॥ १७ ॥

विकारे तु तदर्थं स्यात् ॥ १८ ॥

यदि तु सामिधेनीनां विकारः कश्चिच्छ्रूयेत, ततो विकारार्थमाम्नानमिति गम्यते । न तु विकारः श्रूयते । तस्मात्प्राकृतप्रतिषेधार्थमेवेति ॥ १८ ॥

वाक्यशेषो वा क्रतुनाऽग्रहणात्स्यादनारभ्यविधानस्य ॥ १९ ॥ सि०

---

यते । तत्र शुद्धेषु विधातुं युज्यते । अधिकरणोत्पन्नेषु न घटते ॥ १६ ॥
[ १७ ॥ १८ ॥

---

१ विशेषयति—मु. । २ किंचित्कुर्यात्—ग. । ३ प्रहणात्—औ. क. ग. मु. । ४ शुद्धेषु—आधारविधुरेषु होमेष्वित्यर्थः । ५ अधिकरणोत्पन्नेष्विति—ये साधिकरणा उत्पन्ना होमास्तेष्वित्यर्थः ।

वाशब्दः पक्षं व्यावर्तयति । वाक्यशेषोऽयं वैमृधादिष्वनारभ्यविधानस्य, सप्तदश सामिधेनीरनुब्रूयादेतासु विकृतिष्विति । तेनान्यासु विकृतिषु न स्यात् । ननु प्रत्यक्षश्रुतमन्यासु विकृतिषु तन्न शक्यं बाधितुम् । उच्यते । सत्यं प्रत्यक्षश्रुतं सामिधेनीषु, न तु तत्क्रतुना गृह्यते । क्रतुसंबन्धाभावात्प्रयोगवचनोऽपि न गृह्णाति, सति वैमृधादिसंबन्धकरे वाक्ये । यदेतत्साप्तदश्यमनारभ्योक्तं, तद्वैमृधादीनामङ्गमिति प्रत्यक्षं वाक्यम् । तस्मान्नान्या विकृतयस्तद्गृह्णन्ति । अक्रतुग्रहणे च सति सामिधेनीनां साप्तदश्यं निष्फलत्वान्न क्रियेत । तस्मादनारभ्यविधेर्वैमृधादिषु वाक्यशेषः । आह । ननु वाक्यभेदो भवति । सामिधेन्यः सप्तदश भवन्ति । ताश्च वैमृधादिष्विति । उच्यते । [1]द्वे एते वाक्ये । पूर्वेण वाक्येन योऽर्थ उक्तस्तस्यैव विशेषः परेण वाक्येन विधीयत इति वाक्यशेष इत्युच्यत इति ॥ १९ ॥

( क्वचिद्दर्विहोमे स्वाहाकारपुनःश्रवणस्यानारभ्याधीतस्वाहाकारानुपसंहारकत्वाधिकरणम् ॥ १० ॥ )

## [१०] मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥२०॥ सि०

दर्विहोमं प्रकृत्य श्रूयते, पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा, इति । अस्ति चानारभ्यवचनं, वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति । तत्र संदेहः । किं तस्यायं वाक्यशेषः, [illegible] देवेभ्य इति । एतस्मिन् दर्विहोमे पृथिव्यै स्वा[illegible] उत नायं वाक्यशेषः, येष्वपि प्रदानेषु स्वाहा[illegible] स्वाहाकार इति । किं प्राप्तम् । अनन्तरश्रुते[illegible] ब्रूमः ।

न ननु [illegible] न स्यात् । न [illegible] विधायकवाक्ययोरे-

[१९ ॥ ]

[illegible] ऽनारभ्यवादो मन्त्रेण न [illegible] । [illegible] समर्थौ, नानारभ्य-

१ द्वे एवैते—ग. । २ प्रधान—ग. मु. । ३ तौ चानारभ्यवादौ मन्त्रेण विशेष्टुं न शक्येते—ग. मु० ।

वाक्यत्वं भवति। विधायकं ब्राह्मणम्, अविधायको मन्त्रः। अपि च, अनन्तराधिकरणे न क्रतुसंबन्धोऽस्ति। इह तु संबन्धो गम्यते, वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति। प्रदानं ह्यत्र प्रधानकर्म। अपि च, [1]गुणोपदेशो भवति तस्मिन् दर्विहोमे। पृथिव्यै स्वाहा, इत्येवं समुच्चारणं भवति, न स्वाहा पृथिव्या इति। तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्तीति ॥ २० ॥

---

वादं विशेष्टुम्। अविधायकत्वात्। [2]न चात्र 'छागो वा मन्त्रवर्णात्' [3]इति न्यायः। कथम्। तत्र यावदग्नीषोमीयापूर्वं तावन्मन्त्रः प्रयोक्तव्यः[4]। 'अग्नीषोमीयं पशुमालभेत' इति न कश्चित्पशुजातिविशेषः श्रूयते। तत्रावश्यं जातिविशेषो ग्रहीतव्यः। स यद्यनियमेन गृह्यते ततो यद्यपि चोदना न विरुध्यते, यत्तु नित्यवच्छ्रुतं मन्त्राम्नानं तत्पाक्षिकं कृतं स्यात्। तस्माद्येषा नियमेन चोदना सा मन्त्रवर्णालोचनेन[5] जातिविशेषपरा कल्प्यते। न च मन्त्रविध्योर्विशेषणविशेष्यता[6]। प्राप्तार्थप्रकाशकत्वान्मन्त्राणामित्युक्तम्।

[7]अपि च 'पृथिव्यै स्वाहा' इति पृथिव्या इत्यनेन देवतोच्यते। तदर्थमिदमाम्नानम्। तस्याश्च संप्रदानत्वात्स्वाहाकारो वषट्कारो वा प्राप्नोति। तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम्। वषट्कारनिवृत्तिरेवास्य वाक्यस्यान्येषु क्रतुषु स्वाहाकारो नास्तीत्याशङ्का नास्ति[8]। स्वाहा पृथिव्या इति यद्येवं श्रूयेत तथा सति[9] योऽसावनारभ्यवादेन विहितः स्वाहाकारस्तमनूद्यास्मिन्नियम्येतेत्यादि[10]। अस्मिंश्च पक्षे नान्येषु। [11]न चेदृशमपि वाक्यमिति ॥ २० ॥

---

१ गुणोपदेशो भवतीति—'पृथिव्यै स्वाहा' इत्येवं चतुर्थ्यन्तपदेन देवतालक्षणगुणोपदेशो भवति। अतोऽस्य मन्त्रस्य देवताविधिपरत्वमेव, न तु 'स्वाहाशिरस्केन मन्त्रेण जुहुयात्' इत्येवं स्वाहाकारविधिकल्पनयोपसंहारार्थत्वमिति भावः। २ ननु षष्ठान्त्ये पशुविधेः, अविधायकस्यापि छागमन्त्रवर्णस्य च विशेषणविशेष्यभावो दृष्ट एवेत्यत आह—न चेति। तस्मान्न च—ग. पु.। ३ (अ० ६ पा० ८ अ० १० सू० ३१)। ४ प्रयोक्तव्य इति—अग्नीषोमीयप्रकरणे मन्त्रस्य नित्यवदाम्नानादिति शेषः। ५ मन्त्रवर्णतो वचनेन—ग. पु.। ६ भवतु वा विधिमन्त्रयोर्विशेषणविशेष्यभावस्तथाऽपि प्रकृतोदाहरणे नास्त्युपसंहार इत्याह—अपि चेत्यादिना। ७ यदि देवताविधानार्थं मन्त्राम्नानं किमर्थस्तर्हि स्वाहाकार इति चेदाह—तस्याश्चेति। ८ न भवतीति—ङ. ज.। ९ तथा सतीति—तथा च स्वाहाकारस्य प्राथम्यादुद्देश्यलक्षणापत्तेरित्यर्थः। १० अस्मिन्निति—पृथिवीदेवत्यप्रदानविशेषे नियम्येतेत्याद्याशङ्क्येतेत्यर्थः। ११ न चेदृशमपीति—ईदृगर्थकमपीदं वाक्यं न भवतीत्यर्थः।

अनाम्नाते च दर्शनात् ॥ २१ ॥

यत्रापि दर्विहोमे नाऽऽम्नायते स्वाहाकारः, तत्रापि क्वचिद्दृश्यते। घृतेन द्यावापृथिवी आपृणेथामित्यौदुम्बर्या विशाखे जुहोति, आन्त्रांदवस्रावयति, भूमिप्राप्ते स्वाहाकरोतीति प्राप्तं स्वाहाकारं दर्शयति ॥ २१ ॥

प्रतिषेधाच्च ॥ २२ ॥

क्वचिच्च प्रतिषेधो भवति, न स्वाहेति वचनं करोति, मन्त्रं च नाऽऽहेति। प्राप्तिपूर्वकः प्रतिषेधो भवतीत्यवाक्यशेषताऽध्यवसीयते॥२२॥

( अग्न्यातिग्राह्ययोर्विकृतावतिदेशाधिकरणम् ॥ ११ ॥ )

[११] अग्न्यातिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात्॥२३॥ पू०

इदमाम्नायते, य एवं विद्वानग्निं चिनुत इति। तथा, उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्या इति। तत्र संदेहः। किमग्न्यतिग्राह्यं विकृतौ चोदकः प्रापयति, उत नेति। किं प्राप्तम्। अग्न्यतिग्राह्यस्य विकृतावप्रवृत्तिरिति। अग्निश्चातिग्राह्यश्चाग्न्यतिग्राह्यम्। तद्विकृतौ न प्रवर्तते। कुतः। विकृतावुपदेशात्। विकृतौ हि तदुपदिश्यते। अथातोऽग्निमग्निष्टोमेनानुयजति, तमुक्थेन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेणेति। तथा, यत्पृष्ठ्येऽतिगृह्णीयात्प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयुः, यदुक्थेऽतिगृह्णीयादिति। न नूनमग्न्यतिग्राह्यं चोदकः प्रापयति, यत्साक्षात्करणाचिद्विकृतौ चोद्यत इति ॥ २३ ॥

मासिग्रहणं च तद्वत् ॥ २४ ॥

इदं चाऽऽम्नायते, मासि मास्यतिग्राह्या गृह्णन्त इति। यदि चोदकः प्रापयेत्, मासि मास्यतिगृह्णन्त इत्युपदेशः स्यात्। ॥ २४ ॥

ग्रहणं वा तुल्यत्वात् ॥२५॥ सि०

---

[ २१ ॥ २२ ॥ २३ ॥ २४ ॥

---

१ 'आपृणेथामित्यन्तरा कर्णौ जुहोति' 'भूमिगत आज्ये स्वाहाकारः' इति भाट्टदीपिकायां पाठो दृश्यते। सोमनाथीये तु, आपृणेथामित्यौदुम्बर्या जुहोति। भूमिगते स्वाहाकारं करोति' इति च ( अ० ८ पा० ४ अ० २ ) इत्यत्र दृश्यते। २ अन्त्रान्—मु०।

गृह्यते वा चोदकेनाग्न्यतिग्राह्यं, न ह्यस्यान्यैरङ्गैरस्ति विशेषः । अन्यान्यङ्गानि गृह्णाति, एवञ्च गृह्णातीति नैतदवकल्पते ॥ २५ ॥

लिङ्गदर्शनाच्च ॥ २६ ॥

लिङ्गं खल्वपि दृश्यते, कङ्कचितं चिन्वीत, शीर्षचितं चिन्वीत, यः कामयेत सुशीर्षा अस्मिँल्लोके संभवेयमिति । तथा, पञ्चैन्द्रानतिग्राह्यान् गृह्णातीति । कङ्काकारतामैन्द्रतां च विशेषं ब्रुवन्नग्न्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति ॥ २६ ॥

ग्रहणं समानविधानं स्यात् ॥ २७ ॥

अथ यदुक्तं, विकृतावुपदिश्यत इति । तत्परिहर्तव्यम् । अत्रोच्यते । यस्यां विकृतावुपादिश्यते, तस्यां प्रकृतौ च समानः स विधिः । अवाशिष्टासु विकृतिषु चोदकः प्रापयतीति ॥ २७ ॥

मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥

अथ मासि ग्रहणं कथमिति । तदभ्यासप्रतिषेधार्थम् । नाहन्यहानि गृह्यन्ते, मासि मासि गृह्यन्त इति ॥ २८ ॥

---

२१ ॥ २१ ॥ ]

यत्समानविधाने गुणकामानां प्रवृत्तिस्तन्नोपपद्यते । कथम् । प्रकृतौ वैकल्पिकोऽग्निः, उत्तरवेद्यां निधातव्यः, स्थले वा । स चोदकेन वैकल्पिक एव प्राप्नोति । तत्र पुनर्वचनं नियमार्थं भविष्यति । यथा खदिरादिपुनर्वचनं नियमार्थम् । यद्यग्निर्द्विरात्रादीनां प्रकरण आम्नायेत, अग्निरत्र कर्तव्य इति, एवं नियामकं स्यात् । यथा 'खादिरो यूपो भवति' इति । अयं त्वग्निरनारभ्य सेतिकर्तव्यताको विहितः । तं विधायैभिर्वाक्यैस्तस्य क्रतुसंबन्धः क्रियते । एतानि च वाक्यान्यस्मिन्नेव प्रकरणे । तत्र च द्विरात्रादीनां प्रकरणं न विपरिवर्तते । येन द्विरात्रादिषु चोदकेन प्राप्तस्य नियामकानि स्युः । तेन द्विरात्रादीनां चोदकेन वैकल्पिक एवाग्निः । पुनर्वचनं तु यदाऽग्निस्तदा गुणकामानां प्रवृत्तिरिति ॥ २७ । २८ ॥

१ उपदिश्यः—मु. । २ तन्नोपपद्यत इति–गुणकामप्रवृत्तिः समानविधानप्रयोजनमिति मीमांसकसमयसिद्धं नोपपद्यते, विस्पष्टप्रयोजनान्तरसद्भावादित्यर्थः । ३ उक्थ्यादिविकृतिषु चयनपुनःश्रवणस्य यन्नियमार्थत्वमाशङ्कितं तन्निराकरोति—यदीत्यादिना । ४ एभिर्वाक्यैरिति—'अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन' इत्यादिवाक्यैरित्यर्थः ।

( उपस्तरणाभिघारणाभ्यां सह चतुरवत्तसंपत्त्यधिकरणम् ॥ १२ ॥ )

[१२] उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवद्गुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ पू० ॥

दर्शपूर्णमासयोराम्नायते, चतुरवत्तं जुहोतीति । तत्रायमर्थः सांशयिकः । किं सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमुत प्रधानद्रव्यादेव चतुरवदातव्यम् । अधिकमुपस्तरणमभिघारणं चेति । किं प्राप्तम् । प्रधानद्रव्यादेव चतुरवदातव्यम् । कुतः । उत्पत्तितादर्थ्यात् । पुरोडाशोत्पत्तेर्होमार्थता भवति । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । यज्जुहोति तच्चतुरवत्तं कर्तव्यम् । पुरोडाशश्च होमार्थो नोपस्तरणाभिघारणे । तस्मात्पुरोडाशस्य चतुरवदातव्यमिति । अधिकमाज्यं स्यात् । अतुल्यं हि तत्पुरोडाशेन । पुरोडाशे होमार्थे तद्गुणभूतमाज्यम् । तेन यद्यपि सहाऽऽज्येन षडवत्तं भवति, तथाऽपि होमे चतुरवत्तमेव कृतम् । यथा लोके प्रस्थमुद्गैर्देवदत्त इत्युच्यते । यद्यपि सूपशाकादिभिरधिकः प्रस्थो भवति, तथाऽपि मुद्गो प्रस्थो निर्दिश्यते, व्यञ्जनान्योदनार्थानि ॥ २९ ॥

तत्संस्कारश्रुतेश्च ॥ ३० ॥

प्रधानावदानसंस्कारार्थेन चोपस्तरणाभिघारणे श्रूयेते । यदुपस्तृणाति, अभिघारयति, अमृताहुतिमेवैनां करोतीति । तेनोपस्तरणाभिघारणसंयुक्तं प्रधानद्रव्याच्चतुरवत्तं होतव्यमिति गम्यते ॥ ३० ॥

ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ ३१ ॥ सि०

ताभ्यां वा सह द्विर्हविषोऽवदाय चतुरवत्तं कर्तव्यम् । कुतः । स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनं भवति । सकृदुपस्तृ-

---

२९ ॥ ३० ॥ ]

यज्जुहोतीति यदि जुहोतिरनूद्येत तथा सति हविर्विलक्षणार्थमुच्चार्येत । अयं दोषः

---

१ भवति—ग. । २ अतुल्यं हि तत् । पुरोडाशो होमार्थो । तद्गुणभूतमाज्यम्—ग. । ३ ओदनार्थानीति—ग. । ४ संयुक्तप्रधानद्रव्याच्चतुरवत्तं कर्तव्यं, होतव्यमिति—ग. ।

णाति, सकृदवद्यति, द्विरभिघारयति, चतुरवत्तस्याऽऽप्त्यै, इति द्विरभिघारणेन चतुरवत्तं पूर्णं दर्शयति। इतरथा षडवत्तं तेन पूर्येत। आह। दर्शनमेतत्। प्राप्तिरुच्यतामिति। अत्रोच्यते। चतुरवत्तं होमे श्रूयते, चतुरवत्तं जुहोतीति, न होमार्थे पुरोडाशे सांनाय्ये वा। नैवं श्रूयते, यद्धोमार्थं द्रव्यं तच्चतुरवत्तं कुर्यादिति। चतुरवत्तं श्रूयमाणं होमेनासंबध्यमानमनर्थकं स्यात्।

अथोच्यते। प्रयोगवचनग्रहणादर्थवद्भविष्यति। तन्न। साक्षाद्धोमसंबन्धे वचने सति चतुरवत्तं जुहोतीति, नान्यत्प्रयोगवचनं कल्पते। अस्मिंश्च साक्षाद्वचने तदर्थादवत्तं, नातदर्थादिति न विशेषः श्रूयते। तदर्थादतदर्थाद्वा चतुरवखण्डनसंयुक्तं द्रव्यं होतव्यम्। एवं च श्रुतिः परिगृह्यते। इतरस्मिन् पक्षे वाक्यं परिगृह्येत। द्विर्हविषोऽवद्यतीति च विकल्पः स्यात्। यदि हविश्चतुरवत्तं दीयेत, तथेदमपरं श्रवणमसदनुवादभूतं स्यात्। चतुरवत्तं वा विकल्पयेत्। अभावाच्च पक्षे विकल्पो न न्याय्यः स्यात्। तस्मात्सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति ॥ ३१ ॥

## तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३२ ॥

चत्वारि वा एतानि देवदधान्यवदानानि, यदुपस्तृणाति तदनुवाक्यायै, यत्पूर्वमवदानं तद्याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्कारायेति, चतुरवत्तस्य चत्वार्यवदानानि संकीर्त्यानुवाक्यादिभिर्भक्तिवादेनावयवशः संकीर्तयन्नुपस्तरणादीनि दर्शयति। तस्मात्स-

---

स्यात्। तस्मादियं वचनव्यक्तिर्नास्ति। यच्चतुरवत्तं तज्जुहोतीति। तच्चतुरवत्तं विद्यते[3]। विद्यमानत्वात्तच्छक्यतेऽनुवदितुम्। अनूद्य[4] चतुरवत्तस्य होमसंबन्धः क्रियते। तत्र होमो वा चतुरवत्तार्थः, चतुरवत्तं वा होमार्थमिति[5]। यदि होमश्चतुरवत्तार्थः, तदाऽदृष्टं कल्पनीयम्[6]। अथ चतुरवत्तं होमार्थं, ततो दृष्ट एवार्थो होमनिर्वृत्तिः। तस्माच्चतुरवत्तं होमार्थमिति ॥ ३१ ॥

---

१ वचनग्रहणं कल्पते—क. मु.। २ का तर्हि वचनव्यक्तिरिति चेत्तद्दर्शयति—यच्चतुरवत्तमिति। ३ विद्यत इति—हविषो द्विरवदानविधानादुपस्तरणाभिघारणविधानाच्च प्राप्तं विद्यत इत्यर्थः। ४ अनूद्य च तस्य होम- घ. ज.। ५ इतीति—इति प्रसङ्गाच्चिन्त्यत इति शेषः। ६ कल्पनीयमिति—न हि होमेन चतुरवत्तं किंचिद्दृष्टं प्रयोजनमस्तीति शेषः।

होपस्तरणाभिघारणाभ्यां चतुरवत्तमिति । दधशब्दो भागधेयवचनः । तद्यथा, कङ्कटकाय दधं, नापिताय दधमिति । देवदधानि—देवभागा इत्यर्थः ॥ ३२ ॥

( उपांशुयाजे, उपस्तरणाभिघारणयोर्लोपेऽपि हविष एव चतुरवत्तसंपत्त्याधिकरणम् ॥ १३ ॥ )

## [ १३ ] सामदश्यवन्नियम्येत ॥ ३३ ॥ पू०

दर्शपूर्णमासयोरुपांशुयाजोऽस्ति । तत्र, चतुरवत्तं जुहोतीति । तत्र संशयः । किमुपांशुयाजे चतुरवत्तं कर्तव्यमुत नेति । किं प्राप्तम् । साप्तदश्यवन्नियम्येत । यथा, साप्तदश्यमनारभ्याधीतं परिगणितासु विकृतिषु पुनः श्रूयमाणं वाक्यशेषात्तास्वेव नियम्यते, एवमिदमपि चतुरवत्तमुपस्तरणाभिघारणाश्रयत्वाद्यत्र ते तत्रैव नियम्येत, औषधसांनाय्ययोः । उपांशुयाजे न स्यादिति ॥ ३३ ॥

## हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३४ ॥

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, नोपांशुयाजे चतुरवत्तमिति । होमे चतुरवत्तं गुणो विधीयते । स उपांशुयाजहोमेऽपि स्यात् । अत्रापि चतुरवदातव्यम् । अथ यदुक्तम् । औषधसांनाय्ययोरेव चतुरवत्तम्, उपस्तरणाभिघारणाश्रयत्वादिति । नोपस्तरणाभिघारणवचनं चतुरवत्तस्य वाक्यशेषभूतम् । यथा, सप्तदश सामिधेनीरनुब्रूयादिति, मित्रविन्दादिषु सप्तदशानुब्रूयादिति । नैवमिह, चतुरवद्येत्, कथम्, उपस्तृणीयात्, अभिघारयेच्चेति । कथं तर्हि । चतुरवदानसंयुक्तं द्रव्यं जुहुयात्, हविश्चोपस्तृणीयात्, अभिघारयेच्चेति । यत्र हविष्युपस्तीर्यमाणेऽभिघार्यमाणे च चतुरवत्तयुक्तं प्रदानं भवति, तत्र न प्रधानद्रव्याच्चतुरवदातव्यम् । यत्र पुनः प्रधानद्रव्याच्चतुरवखण्डनमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्याच्चतुरवदातव्यम् । चतुरवत्तभूतमिह होतव्यं विवक्ष्यते, नेतरतो वा चतुरवदातव्यमिति । तस्मादुपांशुयाजेऽपि चतुरवत्तं कर्तव्यमिति ॥ ३४ ॥

---

[ १२ ॥ ३१ ॥ ३४ ॥

---

१ दर्शपूर्णमासयोरस्त्युपांशुयागः—ग. । २ अस्ति च तत्र—ग. । ३ वाक्यशेषत्वात्—ग. । ४ यागे—ग. । ५ अनुक्रमात्—मु. । ६ चतुरवत्तं, तत्कथम्—ग. ।

( दर्शपूर्णमासयोरसोमयाजिनः पुरोडाशद्वयश्रवणस्यानुवादत्वा-
धिकरणम् ॥ १४ ॥ )

[ १४ ] पुरोडाशाभ्यामित्यधिकृतानां पुरोडाश-
योरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥३५॥ पू०

दर्शपूर्णमासयोरिदमाम्नायते, पुरोडाशाभ्यामेवासोमयाजिनं याज-येत्, यावेतावाग्नेयश्चैन्द्राग्नश्चेति । तत्रैष संशयः । किमधिकारश्रुतिवाक्यशेषोऽयम्—दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्याभ्यां पुरोडाशाभ्यामसोमयाजीति, अथ किमधिकृतयोः कर्मान्तरयोरुत्पत्तिः—अपराभ्यामेवंजातीयकाभ्यां पुरोडाशाभ्यां यजेतेति, अथवा, अङ्गकर्तुरुपदेशः—आभ्यां पुरोडाशाभ्यामृत्विग्याजयेदिति, अथवा, असोमयागकाले, आभ्यां यजेतेति कालोपदेशः, उतैन्द्राग्नस्य विधिराग्नेयस्य चानुवादः, अथवोभयोरनुवाद इत्येते पक्षाः ।

किं तावत्प्राप्तम् । अधिकारशेष इति । यदेतत्स्वर्गकामो यजेतेति तस्य शेषः, आभ्यां पुरोडाशाभ्यामसोमयाजी स्वर्गकामो यजेतेति । कुतः । तच्छ्रुतित्वात् । तच्छ्रुतिमन्तौ हि पुरोडाशौ शब्देनानूद्येते । तेन नाभ्यधिकौ । असोमयाजिनश्च कर्तुर्व्यापार आभ्यां संबध्यते श्रुत्या, न कालः । स हि लक्ष्येत । श्रुतिश्च लक्षणाया गरीयसी । तत्र सोमयाजिनो वा न पुरोडाशौ । असोमयाजिनो वा न सांनाय्यम् । यदि पुरोडाशावधिकृत्यासोमयाजी विधीयते, ततो नासोमयाजी सांनाय्ये । तत्रैवकारः समर्थितो भवति । पुरोडाशाभ्यां केवलाभ्यामसोमयाजी, न सांनाय्येनेति । अथासोमयाजिनमधिकृत्य पुरोडाशौ विधीयेते, तथा न सोमयाजिनः पुरोडाशौ । तत्रास्थाने, एवकारो भवति, पुरोडाशाभ्यामसोमयाजिनमेवेति । यथा—

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥ इति ।

---

१ किमा—ग. । २ लक्षणात्—ग. । ३ निरुक्तम्—( अ० २ पा० ? ख० ६ ) ।

यं शुचिमेव विद्या इति वदितव्ये यमेव विद्याः शुचिमिति । एवम-त्रापि । तदुभयोरपि वचनव्यक्त्योरधिकारश्रुतिवाक्यशेष इत्युभयथाऽयं पूर्वपक्षो भवति । यथा वैश्यस्तोमेऽधिकारश्रुतिशेषः, वैश्यो वैश्यस्तो-मेन यजेतेति । तद्वदत्राप्यधिकारश्रुतिशेष एवेति ॥ ३५ ॥

न त्वनित्याधिकारोऽस्ति विधेर्नित्येन संबन्ध-स्तस्मादवाक्यशेषत्वम् ॥ ३६ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदेवम्, अधिकारवाक्यशेष इति । नित्यौ हि दर्शपूर्णमासौ, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । नित्यौ च तत्रेमौ पुरोडाशौ फलं प्रति सहकारिणौ । तावनित्यम-सोमयाजिनं प्रति विधीयेते इत्यनुपपन्नम् । कथम् । नित्यौ हि दर्शपूर्णमासयोर्भविष्यतः । यश्चासोमयाजी तस्योपकरिष्यत इति नोप-पद्येत । पुरोडाशविधेर्नित्येन दर्शपूर्णमाससमुदायेन संबन्धः । तस्मा-न्नासोमयाज्यधिकारश्रुतिवाक्यशेषः । किं तर्हि । अग्निकयोः कर्मा-न्तरयोरुत्पत्तिरिति । नैवमभिसंबन्धः क्रियते । यावेतौ पुरोडाशौ दर्शपूर्णमासयोर्विहितौ, तौ प्रत्यसोमयाजी विधीयत इति । कथं तर्हि । असोमयाजी यः स्वर्गकामः स आग्नेयं कुर्यादैन्द्राग्नं चेत्येते कर्मणी विधीयेते । विधीयेते चेदपूर्वाभ्यां कर्मान्तरे । तत्र, यावेताविरयनुवाद-वचनं धर्मापेक्षं भविष्यति । यथा, एतस्यैव रेवतीषु वारवन्तीयमग्नि-ष्टोमसाम कृत्वेति । एवशब्दश्च पुनरित्यस्मिन्नर्थे भविष्यति । यथा क्षीरेण भुक्त्वा देवदत्तः क्षीरेणैव भुञ्जीतेति । भुञ्जीतैवेति पुनरिति गम्यते । एवमिहापि सोमयाजिनश्चासोमयाजिनश्च दर्शपूर्णमासविधानेन विहितौ पुरोडाशौ पुनरसोमयाजिनस्तौ विधीयेते, पुरोडाशाभ्यामेवा-सोमयाजिनं याजयेदिति । तद्धर्मकाभ्यामिति गम्यते ॥ ३६ ॥

सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३७ ॥

---

३५ ॥ ३६ ॥

---

१ विधौ—क. मु. । २ तस्मान्न सोम—क. ग. । ३ स स्वर्गकामः सत्राग्नेयं—क । ४ भुञ्जी-तैति । भुक्त्वा देवदत्तो भुञ्जीतैवेति—क. । ५ प्रधानत्वात्—श्री. ।

संति चाधिकारशेषे पुरोडाशयोरसोमयाजिकर्तृसंबन्धो नोपपद्यते । अधिकारशेषे हि प्रधानभूतः कर्ता निर्दिश्यते । न चासति फले प्रधानभाव उपपद्यते । न च दर्शपूर्णमासैकदेशभूतौ पुरोडाशौ फलस्य साधकौ भवतः । न च वचनप्रामाण्यात्फलं कल्पयिष्यते । वचनव्यक्त्यन्तरस्य भावात् । तस्मादपि नास्त्यधिकारशेष इति ॥ ३७ ॥

## कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥

यदुपवर्णितं, वैश्यस्तोमवदिति । युक्तं वैश्यस्तोमे । कृत्स्नो वैश्यस्तोमो न कस्यचिदेकदेशः । तत्र फलं संभवति । न चात्र फलं संभवति । न च तत्र किंचिदेकं नित्यमनित्येन संबध्यते । तस्माद्वैषम्यं वैश्यस्तोमेन ॥ ३८ ॥

## कर्तुः स्यादिति चेत् ॥ ३९ ॥

इति चेन्मन्यसे, नाधिकारश्रुतिशेषोऽवकल्पत इति । तत्रोच्यते । कर्मान्तरयोरुत्पत्तिर्नावकल्पते । यावेतौ—इति व्यपेक्षावचनं लक्षणया कल्प्येत । कथं तर्हीदमिति । अङ्गकर्तुरुपदेशः । अङ्गे यः कर्ता, न प्रधाने । याजयेदिति हेतुकर्तुरेवैतत्तात्पर्यं वचनम् । लक्षणया यजेः कर्तुः । अपि च नित्यानित्ययोर्विरुद्धः संबन्धोऽभ्युपगमो न भविष्यति । न चैकदेशस्य फलं कल्पयिष्यते । असोमयाजी पुरोडाशाभ्यां याजयितव्य इति याजयितुरुपदेशोऽभ्युदयाय भविष्यति ॥ ३९ ॥

## न गुणार्थत्वात्प्राप्ते च नोपदेशार्थः ॥ ४० ॥

नैतदेवम्, अङ्गकर्तुरुपदेश इति । अङ्गकर्ता हि प्रधानकर्तुरेव क्रियोपदेशेन गुणभूतः प्राप्नोति । न चास्य फलं श्रूयते । न च कल्पयितुं शक्यम्, उपग्रहविशेषात् । न च प्राप्तस्य पुनरुपदेशे किंचिदस्ति प्रयोजनम् । अर्थप्राप्तस्य त्वनुवादः पुरोडाशयोर्या निधातुम् । न च परिसंख्या । त्रिदोषत्वात् । सोमयाजिनश्च विनाऽङ्गकर्त्राऽभवात् । तस्मात्कर्मान्तरयोरुत्पत्तिरिति ॥ ४० ॥

---

३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

---

१ निर्दिश्येत—क. । २ पुरोडाशयागौ—ग. । ३ अत्र-क. मु. । ४ विषमं—ग. । ५ व्यपेक्षावचनं-ग. । ६ कल्पेत—ग. मु. । ७ अङ्गकर्तुः—ग. ।

कर्मणोस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥

तुशब्दः पक्षं व्यावर्तयति। नाधिकयोः कर्मान्तरयोरुत्पत्तिरिति। एतयोः कर्मणोः प्रकरणे काल उच्यते। नासोमयाजिनं कर्तारं प्रति पुरोडाशौ विधीयेयाताम्। कुतः। तन्न्यायत्वात्। स हि न्यायः, योऽसावुक्तः। अपि वा कालमात्रं स्याददर्शनाद्विशेषस्येति[1]। इहापि स एव न्यायः। असोमयागकाले दर्शपूर्णमासयोरेतौ पुरोडाशौ भवत इति। किमेवं भविष्यति। फलकल्पनादोषो न भविष्यति। यदा समुदायः[2] पूरयिष्यते, तदा सर्वेषां संहतानां फलं भविष्यतीति[3]। शक्यते चासोमयागेन विशेषलिङ्गेन कालो लक्षयितुम्। तस्मिन् काले पुरोडाशाभ्यामेव यजेत, न सांनाय्येनेति ॥ ४१ ॥

यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥

तुशब्दः पक्षं व्यावर्तयति। यदि सांनाय्यं सोमयाजिनः, न कालार्थं श्रवणं भवितुमर्हति। सांनाय्यं च सोमयाजिन एव। अनाशङ्किते[4]ऽस्मिन्नाशङ्कितवचनम्। यथा—

शास्त्राणि चेत्प्रमाणं स्युर्गतास्ते परमां गतिम्। इति।

एवं हि श्रूयते, नासोमयाजी संनयेदिति। एवं सति न कालार्थं श्रवणम्। कथम्। नैव ताभ्यां पुरोडाशाभ्यां सांनाय्यस्य समवायः प्राप्तः। विभक्तकालत्वात्। प्राक् सोमयागात्पुरोडाशौ। ऊर्ध्वं सांनाय्यं[5] प्राप्तमेव। न तदर्थं यतितव्यम्। तस्मान्न कालार्थं श्रवणं कर्मान्तरचोदनैवेति[6] ॥ ४२ ॥

अपि वा विहितत्वाद्गुणार्थायां पुनःश्रुतौ संदेहे श्रुतिर्द्विदेवतार्था[7] स्यात्तथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥

---

४१ ॥ ४२ ।

---

१ (अ० ४ पा० ४ अ० ३ सू० ६)। २ समुदाये व्यापरिष्यते—क मु.। ३ भविष्यति—क. मु.। ४ अस्मिन्—ग.। ५ सांनाय्यं, प्राप्तत्वे च न-ग.। ६ चोदनेति—ग.। ७ श्रुतिर्द्विदेवतार्था—ग.।

अपि वेति पक्षव्यावृत्तिः । नैतत्कर्मान्तरचोदनेति । अनुवाद आग्नेयस्य । विहितत्वात् । विहितो ह्यमावुभयत्र, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । ऐन्द्राग्नस्य भवति विधिः । उभयत्राविहितत्वात् । स यत्र न प्राप्नोति । पौर्णमास्यामैन्द्राग्नविधानार्थैवा श्रुतिः । यथाऽनभिप्रेतस्तथाऽऽग्नेय उच्चरितः । विधानं चोभयत्र । तस्य दर्शनं च, आग्नेयं चतुर्धा करोतीति । तथा साकंप्रस्थायीये, आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन पुरोडाशेनेति ॥ ४३ ॥

## विधिं तु बादरायणः ॥ ४४ ॥

तुशब्द एतमपि पक्षं व्यावर्तयति । नैतदेवम्, आग्नेयेऽनुवाद ऐन्द्राग्ने विधिरिति । उभयोः कालविधिः स्यात् । कुतः । बादरायण आचार्यो मन्यते स्म, प्रागपि सोमयागात्सांनाय्यविधिरिति । असोमयाजिनोऽपि सांनाय्यं श्रूयते, तदु संनयेदिति । तथा, तथेह स्माऽऽहुर्गोपायनाः सांनाय्यमेवासोमयाजिनः । तस्मात्कालार्थः संयोग इति ॥ ४४ ॥

## प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, कालविधिरिति । नाप्याधिकयोः कर्मणोरुत्पत्तिः । न वाऽऽग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः । किं तर्हि । उभयोरनुवादः । कथम् । सोमयाजिनः सांनाय्यविधानार्थमेतद्वाक्यम् । अतो नैन्द्राग्नस्यापि विधिः । भिद्येत हि तदा वाक्यम् । एवमभिसंबन्धः क्रियते । असोमयाजिनः पुरोडाशावेतौ, यौ प्राप्तौ । सोमयाजिनः सांनाय्यमपरमपीति । पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् । यावेतावाग्नेयश्चैन्द्राग्नश्च, सांनाय्येन सोमयाजिनमिति, एवमेकेन वाक्येन सोमयाजिनः सांनाय्यं विधीयते । अपरेणापि वाक्येनासोमयाजिनः । तस्मादुभयोरप्यनुवाद इति ॥ ४५ ॥

---

४३ ॥ ४४ ॥ ४५ ॥

---

१ साकंप्रस्थाय्ये—इत्येव सर्वेष्वादर्शपुस्तकेषु पाठो दृश्यते । परंतु स पाठो व्याकरणाननुगत इत्युपेक्षितः । किंच ' साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् ' (अ० ३ पा० ५ अ० २ सू० १३ ) इति सूत्रे तत्रत्यभाष्ये च साकंप्रस्थायीयशब्द एव पठ्यमानो दृश्यते । २ विधिस्तु—श्री० । ३ प्रतिषिद्धविधानाद्वा—श्री. ग. । ४ न च—ग. ।

तथा चान्यार्थदर्शनम् ॥ ४६ ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तर इति। कथम्। चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति। कर्मान्तरोत्पत्तावभ्यधिका आहुतयो भवेयुरिति ॥ ४६ ॥

( उपांशुयाजे ध्रौवाज्यविधानाधिकरणम् ॥ १५ ॥ )

[ १५ ] उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ ४७ ॥ पू०

दर्शपूर्णमासयोराम्नायते, उपांशुयाजमन्तरा यजतीति। तत्र द्रव्यं प्रति संदेहः। किमनियम उत नियतं किंचिद्द्रव्यमिति। किं प्राप्तम्। न किंचिद्धवीरूपं श्रूयते। तस्माद्यथाकामी प्रतीयेत। तत्रोच्यते। श्रूयते हवीरूपम्, आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति। तस्मादाज्यद्रव्यकं स्यात्। उच्यते। एवमप्यनियमः। यत्किंचिदाज्यं गृहीत्वेज्येतेति ॥ ४७ ॥

ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥ सि०

ध्रौवाद्वाऽऽज्यादिज्येत, न यतः कुतश्चित्। कुतः। सर्वसंयोगात्। सर्वयजतिभिर्हि संबद्धं, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति। तस्माद्ध्रौवाज्याद्यजेतेति ॥ ४८ ॥

( उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतानियमाधिकरणम् ॥ १६ ॥ )

[ १६ ] तद्वच्च देवतायां स्यात् ॥ ४९ ॥ पू०

देवतां प्रत्युपांशुयाजस्य संशयः। किमनियमः, नियम इति। किं प्राप्तम्। यद्वद्द्रव्यं प्रत्यनियमः पूर्वाधिकरणपूर्वपक्षे, तद्वद्देवतायामनियमः। नन्वग्नीषोमौ विधीयेते। उच्यते। पुराकल्पसरूपोऽयं न विधिसरूपः। इमास्तर्हि, विष्णुरुपांशु यष्टव्य इत्येवमादिना देवता विधीयन्ते। उच्यते। उक्तमजामिकरणवचनार्था एते अर्थवादा इति। तस्मादनियमः ॥ ४९ ॥

---

४६ ॥ ४७ ॥ ४८॥ ४९ ॥

---

१ कर्मान्तरमिति—ग.। २ तत्संबद्धम्—क.। ३ आज्यम्—मु०। ४ पुराकल्परूपः—क. मु.। ५ उक्तमिति—( अ० २ पा० २ अ० ४ ) इत्यत्रेति शेषः।

तान्त्रीणां प्रकरणात् ॥ ५० ॥ सि०

न हि देवतामन्तरेण यागो भवति । न च वचनमन्तरेण देवता । न चान्यस्य विहिता देवताऽन्यस्यावकल्पते । तस्मात्प्रकृतानां तन्त्रभवानामन्यतमया देवतया प्रकृतत्वादेकवाक्यतां कृत्वा देवतामवगमिष्यामः । एकया च कृतार्थत्वाद् यां कांचिद् देवतामिति ॥ ५० ॥

( उपांशुयाजे वैकल्पिकविष्ण्वादिदेवता–पौर्णमासीमात्रकालिकत्वोभयप्रतिपादनाधिकरणम् ॥ १७ ॥ )

[ १७ ] धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥ पू०

तान्त्रीणामन्यतमा देवतेत्युक्तम् । तत्र संदेहः । किं तान्त्रीष्वनियमः, अथवा प्रजापतिः, अथवाऽग्निः, अथवा विष्णुः । अमावास्यायां चोपांशुयाजः, अथवा पौर्णमास्यामुपांशुयाजः, विष्णुश्च देवता । अथवोभयत्रोपांशुयाजः, देवताविकल्पश्चेति । अथवा पौर्णमास्यामेवोपांशुयाजः, तत्रैव विष्ण्वाद्या देवता इत्येते पक्षाः । किं तावत्प्राप्तम् । प्रजापतिर्देवता । कुतः । धर्मात् । तस्य ह्युपांशुत्वं धर्मः, तस्माद्यत्किंचित्प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियत इति । उपांशुयाजनामकत्वाच्चास्य कर्मण इदमवगम्यते नूनमस्योपांशुत्वं धर्म इति । आत्मनि साधनेषु च नोच्चैस्त्वेनास्य संबन्ध इति । तेन प्रजापतिरिति गम्यते । स ह्यनुच्चैर्धर्मकः । अन्यस्यां सत्यामुच्चैस्त्वेनास्य संबन्धो भवेदिति ॥ ५१ ॥

देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, प्रजापतिर्देवतेति । तान्त्रीणां मुख्योऽग्निर्देवता स्यात् । प्रजापतेर्देवताया अनिर्वचनं धर्मस्तूष्णींभावः, प्रजापतिं मनसा यजेदिति । ननूपांशुत्वं प्रजापतेर्धर्मः, तस्माद्यत्किंचित्प्राजापत्यं क्रियते, उपांश्वेव तत्क्रियत इति । उच्यते । अनुवादसरूपत्वादर्थवाद एषः, प्रजापतिं मनसा यजेदित्यस्य विधेः । इह पुनरुपां-

---

५० ॥ ५१ ॥

---

१ तान्द्रीणां—मु. । २ तन्त्र–मु. । ३ तान्द्रीणां–मु. । ४ तान्द्रीणां–मु० ।

शुयाजे तत्र शब्दस्य मृदुत्वम्। तस्मात्र प्रजापतिः, अधिकृतानां मुख्योऽग्निः स्यादिति ॥ ५२ ॥

**विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५३ ॥**

वाशब्दात्पक्षो निवर्त्यते[1]। नैतदेवम्, अग्निः स्यादिति। कथं तर्हि। विष्णुर्देवता स्यात्। हौत्राम्नानात्। अमावास्यां प्रकृत्य वैष्णवं हौत्रमाम्नायते, इदं विष्णुर्विचक्रमे[2], प्रतद्विष्णुः स्तवते वीर्येणेति[3]। तदेवमर्थवद्भवति। यदि विष्णुर्देवत्य उपांशुयाजः। एवममावास्यायामाम्नानमर्थवद्भवति, यद्यमावास्यायामुपांशुयाजः। तस्मादमावास्यायामुपांशुयाजः स्यादिति ॥ ५३ ॥

**अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५४ ॥**

यदुक्तं विष्णुर्देवतेति तद्गृह्यते, न त्वमावास्यायामुपांशुयाज इति। विधायको हि तस्य शब्दः पौर्णमास्याम्, आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति। तं मन्त्राम्नानं न शक्नोत्यमावास्यायामाक्रष्टुम्। उपांशुयाजे मन्त्रस्य विधानाद्यत्रोपांशुयाजस्तत्र मन्त्र इति[4] गम्यते, न यत्र मन्त्रस्तत्रोपांशुयाज इति। उपांशुयाजस्य हि मन्त्रो विधीयते, न मन्त्रस्योपांशुयाजः ॥ ५४ ॥

**आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे ॥ ५५ ॥**

इतश्च नामावास्यायामुपांशुयाजः। अमावास्याविकारे हि साकंप्रस्थायीये[5] सांनाय्यस्याऽऽनन्तर्यं पुरोडाशेन दृश्यते। कथम्। आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभि-

---

५२ ॥ ५३ ॥ ५४ ॥

---

१ विपरिवर्तते-ग.। २ ऋ. सं. (अष्ट० १ अ० २ व० ७)। ३ ऋ० सं. (अष्ट० २ अ. १ व० २४)। ४ विधानाच-ग.। ५ साकंप्रस्थाय्ये-क. ग. मु.।

क्रामश्चाह, इत्याग्नेयादानन्तर्यं सांनाय्यस्य दर्शयति, नोपांशुयाजस्य। तस्मान्नामावास्यायामुपांशुयाज इति ॥ ५५॥

**अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥**

तुशब्दः पक्षं व्यावर्तयति। नैतदेवं, पौर्णमास्यामेवोपांशुयाज इति। उभयत्र स्यात्। देवताविकल्पश्च। कुतः। अविशेषेण ह्युपांशुयाजः श्रूयते, उपांशुयाजमन्तरा यजतीति। यदेतत्, आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति। देवताविधानमेतत्पौर्णमास्याम्। तस्मादग्नीषोमदेवत्यः पौर्णमास्यामुपांशुयाजः। मन्त्राम्नानाद्वैष्णवोऽमावास्यायामिति देवताविकल्पः स्यात् ॥ ५६ ॥

**प्रतिषिध्य विधानाद्वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥ सि०**

न चैतदस्ति, यदुक्तमुभयत्रोपांशुयाजो देवताविकल्पश्चेति। किं तर्हि। पौर्णमास्यामेवोपांशुयाजः। तत्रैव च विष्ण्वाद्या देवता इति। कुतः। प्रतिषिध्य विधानात्। किमिदं प्रतिषिध्य विधानादिति। अमावास्यां वर्जयित्वा पौर्णमास्यां विधानादिति। कथम्। आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति प्रकृत्य समाम्नायते, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजतीति। पौर्णमास्यामिति गम्यते। तत्रैव चेदं वचनं, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति। तत्र पौर्णमास्यामेवोपांशुयाजः। तत्रैव च विष्ण्वाद्या देवता इति ॥ ५७ ॥

**तथा चान्यार्थदर्शनम् ॥ ५८ ॥**

इतश्च नामावास्यायामुपांशुयाजः। कुतः। अन्यार्थोऽप्येतमर्थं दर्शयति। कथम्। चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति। इतरथाऽमावास्यायामपि चतुर्दशाऽऽहुतयो भवेयुः, त्रयोदशेति नोपपद्यते। तस्मान्नामावास्यायामुपांशुयाज इति ॥ ५८ ॥

---

५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

---

१ विकल्पस्तु—क. ग.। २ अमावास्यायामिति। चतुर्दश भवेयुः—क. मु.।

न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् ॥ ५९ ॥

इतश्च नामावास्यायाम् । न हि सकृच्छ्रूयमाणमनङ्गमुभयत्र भवति । अङ्गं हि प्रधानार्थत्वादुभयत्र स्यात् । प्रधानं चेदं, नाङ्गम् । तस्मात्पौर्णमास्यां श्रूयमाणं नामावास्यायां भवेत् । असंबन्धात् । न हि प्रधानं प्रधानेन, अङ्गमङ्गेन संबन्धं प्राप्नोति ॥ ५९ ॥

गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिङ्गानि दर्शयति ॥ ६० ॥

गुणानां च परार्थत्वात्तत्रानेतुं प्रवृत्तौ विधिलिङ्गानि दर्शयति । न प्रधानानाम्, अपरार्थत्वात् । कथम् । अप्सुमन्तावाज्यभागौ यजतीति, एकादश प्रयाजान् यजत्येकादशानुयाजानिति । तस्मादप्युपांशुयाजो नामावास्यायामिति ॥ ६० ॥

विकारे चाश्रुतित्वात् ॥ ६१ ॥

अमावास्याविकारे च साकंप्रस्थायीये, उपांशुयाजो न श्रूयते । कथम् । आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरोडाशेनाग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेति, आग्नेयादनन्तरं सांनाय्यं दर्शयति, नोपांशुयाजम् । तस्मादपि नामावास्यायामुपांशुयाज इति ॥ ६१ ॥

( एकपुरोडाशायामपि पौर्णमास्यामुपांशुयाजविधानाधिकरणम् ॥ १८ ॥ )

[ १८ ] द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥ पू०

दर्शपूर्णमासयोरिदमामनन्ति, उपांशुयाजमन्तरा यजतीति । तत्रायमर्थः समधिगतः, पौर्णमास्यामुपांशुयाज इति । तत्र च विष्ण्वाद्या देवता इति । अस्ति चोर्ध्वं सोमाद्द्विपुरोडाशा पौर्णमासी । प्राक् सोमादेकपुरोडाशा । तत्रायमर्थः सांशयिकः । किं द्विपुरोडाशायामेवोपांशुयाज उत द्विपुरोडाशायामेकपुरोडाशायां चेति । किं प्राप्तम् । द्विपुरोडाशायां स्यात् । कुतः । अन्तरार्थत्वात् । अन्तरासंयोगेन हि श्रूयते, उपांशुयाजमन्तरा यजतीति । प्राक् पुरोडाशसंकीर्तनात्पुरोडाशान्तरेति गम्यते । द्विपुरोडाशायामन्तरा शक्यं कर्तुं । नैकपुरोडाशायाम् । तत्र क्रियमाणमयथाश्रुतं स्यात् । तस्माद्द्विपुरोडाशायामेवेति ॥ ६२ ॥

---

५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

---

१ भवितुमर्हतीति—ग. । २ प्रधानेन संबन्धं याति—क. मु. । ३ प्रवृत्तौ—मु । ४ प्रस्थायीये—क. ख. मु. । ५ तत्र हि क्रियमाणे न यथाश्रुतं कृतं स्यात्—ग. ।

## अजामिकरणार्थत्वाच्च ॥ ६३ ॥

इतश्च द्विपुरोडाशायामेवेति । कुतः । अजामिकरणार्थत्वमत्र श्रूयते । जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति । जामिसादृश्यं मिति । पुरोडाशयोश्च सादृश्यदोष उच्यते । जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, पुरोडाशं कृत्वा पुनरनूचीनः पुरोडाश एवेति । यत्र दोषस्तत्र दोषविघातार्थेन भवितव्यम् । तस्माद् द्विपुरोडाशायामेवेति ॥ ६३ ॥

## तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥

इति चेत्पश्यसि, तदर्थत्वादन्तरार्थत्वाद्द्विपुरोडाशायामेव भविष्यतीति । तन्न । तत्प्रधानत्वात् । पौर्णमासी प्रधानतः, अन्तरार्थो गुणतः । उपांशुयाजः पौर्णमास्या अवयवो विधीयते । उपांशुयाजस्याप्यन्तरालं गुणः । एकपुरोडाशाऽपि भवत्येव पौर्णमासी । तस्यामुपांशुयाजः केन न स्यात् । अन्तरालं तु गुणोऽसंभवान्न भविष्यतीति । तस्मादसत्यन्तराले, एकपुरोडाशायामुपांशुयाजः कर्तव्य इति ॥ ६४ ॥

## आशिष्टेन च संबन्धात् ॥ ६५ ॥

अशिष्टेन चाश्रुतेनान्तरालार्थेनोपांशुयाजस्य संबन्धः कर्तव्यः स्यात् । अन्तरालगुणश्च उपांशुयाज इति । न ह्यन्तरालं गुणत्वेन विधीयमानं पश्यामः । तस्मादेकपुरोडाशायामप्युपांशुयाजः कर्तव्य इति ॥ ६५ ॥

## उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥

६३ ॥ ६४ ॥ ६५ ॥

१ सादृश्यमिति—तथा च नैरन्तर्येण पुरोडाशद्वयकरणमालस्यसदृशं भवतीत्यर्थः । २ पौर्णमास्यास्यावयवः—क. । ३ अन्तरालं गुणो—क. मु. । ४ भविष्यति—ग. ।

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति । गुणत्वेनान्तरालं न श्रूयत इति । उत्पत्तिवाक्येनैवोपांशुयाजोऽन्तराले निविशते । अन्तरालमस्य गुण उत्पत्तिवाक्येन श्रूयते, उपांशुयाजमन्तरा यजतीति । तस्मा-दस्य गुणस्यानुरोधेन गुणी निविशेत, नैकपुरोडाशायां स्यात् । नैकपुरोडाशायामक्रियमाणोऽनर्थको भवति । अन्तरालार्थो हि द्विपुरो-डाशायां विद्यते । तदभावे—अन्तरालार्थस्याभावे, अश्रुतौ—यदि द्विपु-रोडाशा न श्रूयेत, ततः स्यादेकपुरोडाशायामुपांशुयाजः । अस्ति त्ववकाशो द्विपुरोडाशा पौर्णमासी । तस्मादेकपुरोडाशायां न स्या-दिति ॥ ६६ ॥

## उभयोस्तु विधानात् ॥ ६७ ॥

तुशब्दः पक्षं व्यावर्तयति । उभयोः पौर्णमास्योरुपांशुयाजः । एक-पुरोडाशायामपि स्यादित्यर्थः । कुतः । विधानात् । विधीयते हि स एकपुरोडाशायामपि । साऽपि हि पौर्णमासी । आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति पौर्णमासीशब्द एकपुरोडाशां वर्जयन्नु-परुध्येत । तस्मादेकपुरोडाशायामपि स्यात् ॥ ६७ ॥

## गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥

गुणश्चान्तरालं प्रधानार्थं श्रूयत उपांशुयाजार्थेन, अन्तरालेनोपां-शुयाजस्योपकर्तव्यमिति । नासावेकपुरोडाशायामुपांशुयाजं निवर्तयितुम-र्हति । पौर्णमास्यां श्रूयमाण उपांशुयाज एकपुरोडाशाया अपि पौर्ण-मासीत्वात्तत्र प्राप्नोति । अन्तराले च श्रुतत्वादन्तरालेऽपि प्राप्नोति । एकपुरोडाशायामन्तरालाभावान्नान्तराले स्यात् । तस्मादन्तरालस्य गुणस्य शास्त्रं यदा पौर्णमासी तदेति स्यात् । उपवेषवत् । यथा, उप-वेषेण कपालान्युपदधातीति यदोपवेषस्तदा तेनेति गम्यते । एवमि-हापि यदाऽन्तरालं, तदाऽन्तराले भविष्यति । तस्मादेकपुरोडाशाया-मपि स्यादिति ॥ ६८ ॥

## अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥

---

६६ ॥ ६७ ॥ ६८ ॥

---

१ अश्रुतौ—न हि द्विपुरोडाशौ न श्रूयेते—ग. । २ यदा नोपवेषस्तदा नेति गम्यते—ग. ।

उच्यते। नन्वन्तरालगुणक उपांशुयाजः श्रूयमाणोऽन्तरालाभावादुच्यमानोऽपि पौर्णमास्यामेकपुरोडाशायां वैगुण्यात्फलस्यासाधक इति न क्रियेत। न हि पौर्णमासीविशेषे यत्रान्तरालमित्यन्तरालगुणता विधीयते। अविशेषेण हि द्विपुरोडाशायामेकपुरोडाशायां च तद्विधानम्। तस्मादेकपुरोडाशायां प्रयोजनाभावान्न करिष्यत इति। आह। एवं सत्युपांशुयाजाभावादेकपुरोडाशा नैव कर्तव्या। अत्रोच्यते। नैष दोषः। फलवती हि सा भविष्यति, यदा द्विपुरोडाशा संभविष्यतीति।

अत्रोच्यते। यद्येकपुरोडाशायां वैगुण्यमुपांशुयाजस्य स्यात्, ततो न क्रियेत। न तु वैगुण्यमस्ति। न ह्यन्तरालं गुणतः श्रूयते। किं तर्हि। कालं लक्षयितुं, यौ पुरोडाशौ तयोर्मध्ये, इति। कथम्। अनूद्य हि तौ पुरोडाशावेतद्विधीयते, जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजतीति। यौ तावनूदितौ यथा व्यवहितौ भवतः, तथोपांशुयाजः कर्तव्यः। तस्मिन् काल इति गम्यते। अनपायश्च तस्य कालस्यैकपुरोडाशायामपि। कथम्। यो हि द्वयोः पुरोडाशयोर्मध्यं[2] इति कालोऽवगम्यते, स एव पूर्वस्मादुत्तर इति। एवं चेत्, यद्यप्येकपुरोडाशायां द्वौ पुरोडाशौ न स्तः। तथाऽपि स पूर्व आग्नेयोऽस्ति। तस्मादुत्तरः स एव कालः, योऽसावन्तरालेन लक्षितः। यथा, नागवेलायामागन्तव्यं, शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति। यस्मिन्[3] ग्रामे न नागाः, न शङ्खाः, न पटहस्तस्मिन्नपि स एव कालः। तत्र ह्यागमनं क्रियते। एवमिहापि द्रष्टव्यम्। तस्मादेकपुरोडाशायामुपांशुयाजः कर्तव्य इति ॥ ६९ ॥

प्रशंसा[4]र्थमजामित्वं यथाऽमृतार्थत्वम् ॥ ७० ॥

अथ यदुक्तम्, अजामिकरणार्थत्वादिति। तत्परिहर्तव्यम्। अत्रो-

---

१९ ॥

---

१ यदि–क. मु.। २ मध्ये–क.। ३ यस्मिन्नपि ग्रामे न नागाः, शङ्खाः, पटहश्च–ग.। ४ 'प्रशंसार्थमजामित्वम्' इत्येव सर्वत्र मुद्रितपुस्तकेषु पाठो दृश्यते। परंतु श्रीसंज्ञके पाठान्तरस्य भाष्यसंमतस्योपलम्भात्स एव प्रकाशितः।

च्यते । प्रशंसैषोपांशुयाजस्य वैचित्र्येण, न त्वेतदेवात्र फलं विधीयते, यदजामित्वमिति । कुतः । विहितस्य हि प्रयोजनं विधीयते । न चैवं सत्युपांशुयाजो विहितः स्यात् । विधाने चार्थद्वयविधानं दोषः । न च जामिकरणं नाम किंचिदिष्टं फलम् । तस्मात्प्रशंसैषा । यथोपस्तरणाभिघारणयोरमृतार्थत्वम् । अमृतं वा आज्यं मन्थं हविर्यदुपास्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोतीति । तस्मादेकपुरोडाशायामप्युपांशुयाजः कर्तव्य एवेति ॥ ७० ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये दशमस्याध्यायस्याष्टमः पादः ॥

दशमाध्यायश्च समाप्तः ॥

---

७० ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्याष्टमः पादः ॥

दशमाध्यायश्च समाप्तः ॥

( दर्शपूर्णमासादिष्वाग्नेयादीनां समुच्चितानामेकस्वर्गफलकत्वाधि-
करणम् ॥ १ ॥ )

[ १ ] प्रयोजनाभिसंबन्धात्पृथक्त्वानां ततः स्यादैक-
कर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ सि०

दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम् । इदानीमेकादशे तन्त्रावा पलक्षणं निर्वर्तयिष्यामः[1] । तत्र यत्सकृत्कृतं बहूनामुपकरोति तत्तन्त्रमित्युच्यते । यथा, बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः । यस्त्वावृत्त्योपकरोति स आवापः । यथा, तेषामेव ब्राह्मणानामनुलेपनम् । श्लोकमप्युदाहरन्ति[2]—

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः ।
एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ ॥ इति ।

साधारणं भवेत्तन्त्रमित्युक्तार्थम् । परार्थे त्वप्रयोजक इति । यः परार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानः परस्योपकरोति, स परस्याप्रयोजकः । यथा, पश्वालम्भो यागार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानो लोहितशकृत्कर्मणोरप्युपकरोतीति । एवमेव प्रसङ्गः स्यात् । अयं तु विशेषः । विद्यमाने स्वके विधाविति । यत्रापरस्यान्यो विधिर्विद्यते, परविधिना तु कृतार्थत्वान्न क्रियते । यथा, प्रयाजाः पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि । पश्वर्था[3] एव तु कृताः पशुपुरोडाशस्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते ।

---

दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ । तत्राभ्युच्चयो नाम न किंचिद्वस्तुरूपं विद्यते । किंतूपहोमैरनूयाजा न बाध्यन्त इति बाधाभावमात्रमभ्युच्चय इत्युच्यते । अस्मिंश्च दशमे चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानामियत्ता चिन्तिता । इह त्वेकादशे, इयत्ताविशेषश्चिन्त्यते । यत्र त्रयो यागाः श्रूयन्ते तत्र, सेयमियत्ता किं तन्त्रेणोताऽऽवृत्त्येति ।

ननु दशमानन्तरमङ्गानां तन्त्रावापचिन्ता युक्ता, तेषामियत्तावधारणात् । प्रथमेऽधिकरणे फलं चिन्त्यते । तच्चेयत्ता न भवति । तस्मात्तस्य दशमेन नास्ति संबन्धः । किमेकैकस्य फलमुत संहतानामिति कीदृशो दशमसंबन्धः ।

---

१ वर्तयिष्यते—ग. । २ श्लोकमुदा—क. ख मु. । ३ प्रयाजाः परार्थाः पशोः—ग. ।

प्रकृतमिदानीमुच्यते । तन्त्रावापलक्षणं प्रतिज्ञातम् । तदुच्यते । दर्शपूर्णमासयोः प्रधानान्याग्नेयादीनि । तेषां स्वर्गः फलं श्रूयते, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । स किं तेषां तन्त्रेण भवति, उत भेदेनेति । एवं चातुर्मास्यादिष्वपि द्रष्टव्यम् ।

ननु च नैवात्र स्वर्गः फलं श्रूयते । स्वर्गकामपदेन तावत्पुरुषोऽभिधीयते । यजेतेत्यनेनापि यागनिर्वृत्तिः । तयोर्वाक्येन संबन्धः । केनेदानीं फलमुच्यते । अनेनैव स्वर्गकामपदेनेत्याह । ननु पुरुषस्यायं वक्ता । न खलु कश्चित्पुरुषः स्वर्गकामो नामाऽस्ति । ननु च यस्य स्वर्गे कामः स स्वर्गकाम इति । एतदेव न जानीमः कस्य स्वर्गे काम इति । य एव हि स्वर्गकामः स एवास्वर्गकामो भवतीति । एवं तर्हि कालोपदेशोऽयं भवति । यदा स्वर्गकामस्तदा यजेतेति । अत्रापि न कश्चित्कालविशेषोऽस्ति, यस्मिन्नियमेन स्वर्गकामः स्यात् ।

---

उच्यते । यदि समुदितानामेकं फलं ततस्तन्त्रावापचिन्ता घटते । अथैकैकस्य फलं, ततस्तन्त्रं नास्त्येव । तस्मात्प्रथमा[3]धिकरणमारभ्यते तन्त्रावापसिद्धये । द्वितीयादीन्यपि प्रसङ्गेन, किं संहतान्यङ्गान्येकं क्रतूपकारं कुर्वन्ति, उत निरपेक्षाणीति । अथवा तन्त्रावापसामान्येन प्रथममधिकरणं चिन्त्यते । 'यजेत[4]' इत्यनेनाऽऽक्षिप्तः कर्ता स विशेष्यते स्वर्गकामशब्देन । यथा 'राजा राजसूयेन यजेत' इति । विशेषणं च कर्माङ्गं भवतीति ।

[5]एवं च यदि [6]स्वर्गं नित्यमेव कामयते, नान्यानि ब्रह्मवर्चसादीनि, तथा सत्यसाधारणत्वाद्वि[7]शेषणमवकल्पते । न त्वेवंभूतः कश्चिदस्ति । यदि वा स्वर्गं न कदाचित्कामयते, तथाऽपि तदपेक्ष[8]या विशेषणं घटते । स्वर्गकाम एव य इति । कस्त्वीदृशोऽपि नास्ति यो न कदाचित्स्वर्गं कामयते ।

अथोच्येत यस्यां वेलायां स्वर्गकामः, तस्यां वेलायां दर्शपूर्णमासादीनि करिष्[10]यति । एतदपि न घटते । यावत्साङ्गं प्रधानं निर्वर्तयति तावदनेके कामा उत्पद्यन्ते ।

१ एतदपि—ग. । २ न भवतीति—ग. । ३ प्रथमाधिकरणमिति—तन्त्रावापचिन्ताया उपोद्घातरूपमारभ्यत इत्यर्थः । ४ 'ननु नैवात्र स्वर्गः फलं श्रूयते' इति भाष्यार्थमाह—यजेतेत्यादिना । ५ 'न खलु कश्चित्' इत्युत्तरभाष्यार्थमाह—एवं चेत्यादिना । ६ स्वर्गं नित्यमेवेति—स्वर्गमेव नित्यमित्यर्थः । ७ विशेषणमवकल्पत इति—स्वर्गमेव यः कामयत इति शेषः । ८ अवकल्पते—मु० । ९ तदपेक्षयेति—अस्वर्गकाममपेक्ष्येत्यर्थः । १० करिष्यतीति—अतः कालद्वारेण विशेषणत्वं युज्यत इति पूरणम् ।

सर्वेषु कालेषु सर्वे कामा अनियमेनोत्पद्यन्ते । तत्र न कश्चित्कालविशेषोऽनेन शक्यते व्यपदेष्टुम् ।

एवं तर्हि नैवायं पुरुषोपदेशो नापि कालोपदेशः । किं खलु । फलकामो निमित्तम् । स्वर्गविषये काम उत्पन्ने यजेतेति । यथा कपाले नष्टे यजेतेति । अस्य पक्षस्य सूत्रेणैव परिहार उक्तः । फलकामो निमित्तमिति चेत् । न नित्यत्वात्, इति । नित्यान्यग्निहोत्रादीनि कर्माणि । तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत । तत्र नित्यत्वचोदना यावज्जीविकाद्या उपरुध्येरन् । लिङ्गानि च, अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेदित्येवमादीनि । परिशेषात्फलसंयोग एवायम् । कथं पुनरनेन शक्यते फलं विधातुम् ।

---

यदि च शुद्धमेव स्वर्गं कामयेत तथा यथाश्रुतौ दर्शपूर्णमासौ कृतौ स्यातां, नेतरथा । न चेदृशः कश्चिद्विद्यते । तस्मात्कालद्वारेण विशेषणं न घटते ।

योऽयं नित्यानित्यविरोध उक्तः स नोपपद्यते । कथम् । यस्यापि स्वर्गकामशब्देन फलमभिधीयते, तस्यापि नित्यानित्यविरोधो भवत्येव । दर्शपौर्णमासौ यावज्जीवं कर्तव्यौ ज्ञातौ, पुनः कामेन कर्तव्याविति न कश्चिन्निमित्तेन विशेषोऽस्ति । न चेदृशो नित्यानित्यविरोधो भवति । आग्नेयादय उत्पन्नाः । तेषामुत्पत्तिवचने न नित्यत्वमवगम्यते, न काम्यत्वम् । ते तु विधिरिवर्तमाना एकेन वाक्येन यावज्जीवं प्रति विधीयन्ते, अपरेण स्वर्गम् । न च यावज्जीवस्वर्गकामचोदनयोः परस्परापेक्षा विद्यते । येन य एव यावज्जीविके कर्तव्यः स एव काम्येऽपि कर्तव्य इति । तस्मात्काम्यनित्ययोर्भ्यामुत्पत्तिरपेक्षितव्या ।

तेन तर्ह्यन्यथा वर्ण्यते । स्वर्गकामशब्देन निमित्तं नाभिधीयते । सप्तम्यन्तेन निमित्तमुच्यते । यथा ' भिन्ने जुहोति ' इति । यद्भूतेन वा, ' यस्योभयम् ' इति ।

---

१ (अ० ६ पा०१अ० २ सू० ९ )। २ ( अ० ६ पा० २ अ० २ सू १० )। ३ नित्यचोदना—मु. । ४ उपरुध्यन्ते—क. । अपरुध्यन्ते—ख. मु. । ५ ईदृश इति—साङ्गप्रधानप्रयोगसमाप्तिपर्यन्तं स्वर्गमेव कामयमान इत्यर्थः । ६ भाष्यकारेण फलकामो निमित्तं भवत्वित्याशङ्क्य, नित्यानित्यसंयोगविरोधात्परिहारेऽभिहिते; तमाक्षिपति—योऽयमित्यादिना । ७ विशेषोऽस्तीति—फलस्येति पूर्वं शेषः । ८ स्वर्गचोदनयोः—च. । ९ इतीति—इत्यवगमाद्विरोधः स्यादिति पूरणम् । १० वर्ण्यत इति—नैमित्तिकत्वनिराकरणमिति शेषः ।

तदुच्यते । स्वर्गकामो यजेतेति, यदि वा स्वर्गकामो यागायोपदिश्यते । यथा लोहितोष्णीषाः प्रचरन्ति । यदि वा यागः स्वर्गकामाय । यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयादिति । तत्र यदि स्वर्गकामः कर्मण उपदिश्यते, उपदिष्टोऽपि न प्रवर्तेत । को हि परार्थं प्रयासमातिष्ठेत् । तथा कर्मचोदनाऽनर्थिकैव भवति । अथ यागः स्वर्गकामार्थः, ततोऽसौ पुरुषस्योपकरोति । तं पुरुषः स्वार्थेन करोतीति । तथा कर्मचोदनाऽर्थवती भवति । अपि च यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति । स्वर्गकामविधौ वाक्यार्थः । तस्माद्यागः स्वर्गकामस्योपकारकः । स्वर्गकामस्यानेक[3] उपकारः पशुपुत्रग्रामान्नाद्यादिलाभः । स यदि पुत्राद्याद्यादीनामन्यतमं करोति, ततः स्वर्गकामशब्दोऽविवक्षितार्थः पुरुषमात्रवचनो भवति । तथा[4] चाऽऽनर्थक्यमेव । अनन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते । तस्माद्यागात्स्वर्गो भवतीति ।

---

न चायं सम्बन्धः[5] । न च यद्वृत्तेन[6] युक्तः । तस्मादनेन स्वर्गं कामयमानः पुरुषोऽभिधीयते । स च पुरुषः किं साध्यत्वेन स्वर्गं कामयते, उत साधनत्वेनेति । द्विःप्रकाराऽपि[7] कामनाऽस्ति । यद्ययं साधनत्वेन स्वर्गमिच्छति तथा सति प्रीतिविशिष्टेन द्रव्येण यागः साधनीयः, तदाऽपि[8] न कश्चिच्छब्दोऽस्ति, येन फलमभिधीयेत । योऽयं[9] स्वर्गकामशब्दः स साधनवचनः । अनेनापि प्रकारेणानारभ्यमधिकरणम् ।

इदं तु षष्ठे निराकृतम् । स्वर्गस्य[10] साधनत्वेन न कामना । किं कारणम् । सर्वे ह्येवं कामयन्ते, स्वर्गो मे स्यादिति । साध्ये च मुख्या कामना, साधने तु नान्तरीयकी, साधनेन विना साध्यासंभवात् । तस्मात्साधने या कामना सा गौणी । अपि च 'यजेत' इति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति । स चाऽऽक्षिप्तः किमंशं[11] प्रथमं पूरयति । यदि च किमंशो[12] यागेन पूर्येत तदा चोदितमपि यागं न कश्चित्कुर्यात् । तत्र विधिर्व्याहन्येत । तस्माद्यः स्वर्गं साध्यत्वेन कामयते, तेन लक्षणयोपाय आक्षिप्तः । तत्रोपायत्वेन यागो विधीयते ।

---

१ लोहितोष्णीषाः । यदि—क. ख. मु. । २ भविष्यति—ग. । ३ स्वर्गकामस्यानेकपुत्रपशुग्रामान्नाद्यादिलाभकरः—क. ख. ग. । ४ तथा चोदनानर्थक्यमेव—ग. । ५ भवति—क. [illegible] । ६ यद्वृत्तेनेति—इयं चान्वाचयशुक्तिर्दर्शपूर्णमासादिष्वपि युक्ता । अन्यथा 'यः [illegible] प्रजायेय' इत्यादिषु यच्छब्दोपात्तकामनाया निमित्तत्वं स्यात् । मूलश्रुति[illegible] फलस्यापेक्षितत्वादिति । ७ द्विप्रकारा—ज. मु. । ८ तदा च—च. ज. । ९ योऽप्ययं स्वर्ग—च. ज. । १० स्वर्गस्य साध्यत्वेन कामना—च. ज. । ११ किं शब्दं—ज. मु. । १२ किं शब्दो—च. ज. ।

तत्रानेककर्मसंनिपाते दर्शपूर्णमासादिषु भवति संशयः । किं तन्त्रमेषां फलमुत भेदेनेति । किं प्राप्तम् । भेदेनेति । किं कारणम् । इमान्याग्नेयादीनि प्रधानानि परस्परानपेक्षाभिश्चोदनाभिः पृथग्भूतान्युत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति । तत्संनिधौ स्वर्गादि फलं श्रूयमाणं भेदेनाऽऽकाङ्क्षितत्वाद्भेदेनैव संबध्यते । तस्मात्प्रतिप्रधानं फलभेद इत्येवं प्राप्तम् ।

एवं प्राप्ते, इदमारभ्यते, प्रयोजनाभिसंबन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् । पृथग्भूतानामप्येतेषामाग्नेयादीनां ततः स्यादैककर्म्यम् । कुतः । प्रयोजनाभिसंबन्धात् । प्रयोजनं फलम् । तेनास्यैतेषां समेतानां संबन्धात्—संयोगादित्यर्थः । ऐककर्म्यमिति । कर्मशब्देनात्र फलमुच्यते, क्रियत इति । तद्येषामेकं तान्येककर्माणि । तेषां भाव ऐककर्म्यम् । ऐकफलमित्यर्थः । कथं पुनर्ज्ञायते समेतानामाग्नेयादीनां फलेन योग इति । एकशब्दाभिसंयोगात् । य एषां समुदितानामेकः शब्दो वाचकः, तेनैतान्यभिधाय फलसंबन्धः कृतः, दर्शपूर्णमासाभ्यां स्वर्गकाम इति । अतः समुदितेभ्यः फलं गम्यते, न भेदेन । यथा ग्रामेणोदपानः खेयः, ग्रामेण तडागः खेय इति, ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैरेकः खन्यते, न प्रतिपुरुषं कूपभेदः । एवमिहापि ॥ १ ॥

---

अत्र ग्रन्थः । य एषां समुदितानामेकः शब्दो वाचकस्तेनैतान्यभिधाय फलसंबन्धः कृतः, दर्शपूर्णमासशब्देनेति । य एषां समुदितानामिति । केषाम्—आग्नेयादीनाम्, एकः शब्दो वाचक इति—दर्शपूर्णमासशब्द इत्यर्थः । तेनैतान्यभिधायेति—दर्शपूर्णमासशब्देनाभिधाय फलसंबन्धः कृत इति । तदयुक्तम् । न दर्शपूर्णमासशब्दः समुदायवचनः । यदि समुदायवचनः स्यात्तथा सति समुदायो न द्रव्यं, न देवता, न क्रिया । किं तर्हि । गुणोऽसौ । तस्य गुणत्वाद्यागेन सामानाधिकरण्यं न स्यात् । अस्ति च सामानाधिकरण्यं, दर्शपूर्णमास याग इति । तस्मादसमुदायवचनोऽयम् । 'एकशब्दाभियोगात्' इत्येतदन्यथा वर्ण्यते । भावयेत् । किं, स्वर्गं, केन, यागेन, करणेन दर्शपूर्णमाससंज्ञकेन । स्वर्गः प्रधानभूतो यागः साधनमुपादीयमानश्च । तस्मात्तेषामितरेतरयोगो विवक्षितः ॥ १ ॥

---

१ एवं प्राप्ते ब्रूमः । प्रयोजन—ग. । २ तत्र्वस्यैषां—क. । ३ ऐकफल्यं—ज. । ४ गुणः—मु. । ५ यागेन—क्रियास्वरूपेणेति शेषः ।

शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥

नायमेकान्तः, यत्समुदायशब्देन संयुज्योच्यते तत्समुदितानामेव भवतीति । भेदेनापि किंचिद्भवति । यथा गणाय स्नानं, गणानुलेपनमिति, अनुलेपनादिशेषो गणशब्देन समुदायवचनेनापि संयोज्योक्तो न समुदायेन संबध्यते । केन तर्हि । समुदायिभिः । प्रतिपुरुषं हि स्नानाद्यावर्तते । अतः शेषवद्वा फलं भिद्येत, कूपवद्वा तन्त्रं स्यादिति, अवैशेषिकोऽयं हेतुः समुदायशब्दसंयोगः । तस्माद्धेत्वन्तरं वक्तव्यम्, अत्रैष विशेष इति ॥ २ ॥

सोऽयमुच्यते—

अविधानात्तु नैवं स्यात् ॥ ३ ॥

नात्र यागमुद्दिश्य फलं विधीयते, स्वर्गेण यागं कुर्यादिति । किं तर्हि । फलमुद्दिश्य यागो विधीयते । स्वर्गं यागेन कुर्यादिति । किं कारणम् । याऽत्र विधायिका विभक्तिः यजेतेति, सा यागं श्रुत्या विदधाति, फलं वाक्येन विदध्यात् । न च श्रुत्यर्थे संभवति वाक्यार्थो ग्राह्यः । श्रुत्यर्थस्य मुख्यत्वात् । किं पुनः स्याद्यदि फलं विधीयेत । फले विधीयमाने यजत्यर्थोऽनूद्येत । न हि द्वयोर्विधीयमानयोः संबन्धोऽस्ति । अनुवादश्च संनिहितानामाग्नेयादीनां स्यात् । तानि च परस्परानपेक्षाणि मिथो विभक्तान्युत्पन्नानीति विभागेनैव तैः फलं संबध्यते। अथ पुनर्यजत्यर्थे विधीयमान आग्नेयादयो यागाः शब्देन समुदायवचनेन फलनिर्वृत्तावुपादेयत्वेन चोद्यन्ते । चोदितानां समुदितत्वं गुणः संनिधानविशेषाद्यो गम्यते स विवक्षितो भवति । अविवक्षायां कारणाभावात् ।

यदि यागा विधीयन्ते, दर्शपूर्णमासशब्देन विशेष्टुं न शक्यन्ते । न हि विधीयमानस्य विशेषणं भवति । यत्कारणम् । विशेषणमप्यविधीयमानं न भवति । न च द्वयोर्विधीयमानयोः परस्परसंबन्धो

[ २ ॥ ]

अत्र ग्रन्थः । विशेषणमप्यविधीयमानं न भवति । न च द्वयोर्विधीय-

१ संयोज्य—ख. । २ संयुज्य—ग. । ३ संबध्येत—ग. । ४ अत्र ग्रन्थः—चोद्यग्रन्थ इत्यर्थः ।

भवति । किं पुनरत्र विशेषणेन कार्यं, यावता रूपवतामाग्नेयादीनां संनिधावरूपो दर्शपूर्णमासाभ्यां यजेतेति यजतिशब्दः समुदायवचन इति । किमर्थं तर्हि दर्शपूर्णमासशब्दः । अनर्थकश्च, नित्यानुवादमात्रम् । यथा, इन्द्रेण देवेन वृत्रम्, इडान्ताऽऽतिथ्या संतिष्ठते, नानुयाजान् यजतीति । अथवा, वाक्यार्थस्यैवात्र विधानं न्याय्यम् । श्रुत्यर्थे हि विधीयमाने दर्शपूर्णमासशब्दोऽनर्थक एवाऽऽपद्यते । वाक्यार्थे तु दर्शपूर्णमासशब्दो विशेषणेनार्थवान् । यजतिरपि भावनाविधानार्थं प्राप्तोऽपि पुनः श्रूयते । प्राप्तिश्च दर्शपूर्णमासशब्दस्य यागवचनत्वादिति न किंचिदनर्थकम् । तस्मादेष पक्षो ज्यायान् ॥ ३ ॥

**शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥**

यत्तु शेषवदिति–शेषस्यानुलेपनादेः परार्थेन विधानं, पुरुषसंस्कारकत्वेन । एवं दृष्टार्थो भवति । अन्यथा, अदृष्टं कल्पयितव्यं स्यात् ।

---

मानयोः परस्परसंबन्धो भवतीति । अयुक्तमिदं दूषणम् । अरुणादीनामप्ययं दूषणप्रकारः स्यात् । यथा भवता वर्णितम् । बलीयांश्चायमेव न्यायः, यद्भावनया सर्वेषां संबन्ध इति इतरेतरसंबन्धस्त्वार्थः ।

अत्र ग्रन्थः । किं पुनरत्र विशेषणेन कार्यं, यावता रूपवतामाग्नेयादीनां संनिधावरूपो दर्शपूर्णमासाभ्यां यजेतेति यजतिशब्दः समुदायवचन इति । तदयुक्तम् । यथैवाऽऽग्नेयादीनां द्रव्यदेवतेन रूपवत्त्वम्, एवं प्रयाजादीनामपि । तत्र न कश्चिद्रूपे विशेषो विद्यते । न च संनिधाने । तस्मात्प्रकृतत्वाविशेषात्सर्वेषामेव फले विधानं स्यात् ।

यदपि च दर्शपूर्णमासाभ्यां स्वर्गमिति संबन्ध इति । एतदपि भावार्थाधिकरणे निराकृतम् । याग एव फले विधीयते । तस्माद्भावना सर्वविशेषणविशिष्टा विधीयते ॥ ३ ॥

---

१ इति ज्ञानम् ।–ग. । २ दृष्टम्–क. ग. । ३ विशेषेण–ग. । ४ दृष्टोऽर्थः–ख. मु. । ५ किंच निरवकाशमेवेदं चोद्यमित्याह—बलीयांश्चेति । ६ अत्र ग्रन्थः—परिहारग्रन्थ इत्यर्थः । ७ कश्चिद्रूपविशेषः—मु० । ८ यदपि परिहारान्तरमुक्तं, अथवेत्यादिभाष्येण, तदपि निराकरोति—यदपीत्यादिना । ९ ( अ० २ पा० १ अ० १ ) । १० याग एवेति—भावार्थाधिकरणन्यायेन हीति पूर्वं शेषः ।

तत्र गणः पुरुषलक्षणार्थो भवति । शक्नोति च संबन्धात्पुरुषाँल्लक्षयितुम् । अदृष्टं वा कल्पयतां, लक्षणा नेति । दृष्टा लक्षणा कल्पयितुं न्याय्या । तस्मात्पुरुषलक्षणार्थो गणः । न च लक्षणं कार्येण संबध्यते । किं तर्हि । लक्षितः । तद्यथा शुक्लवाससमानयेति । यदा तु शुक्ले वाससी पुरुषलक्षणार्थमुच्येते, न तदाऽऽनयनेन संबध्येते, इति । एवमिहापि न गणः कार्येण संबध्यते । किंतु पुरुषा एव कार्येण संबध्यन्ते । तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते ॥ ४ ॥

( अङ्गानां प्रधानोपकाररूपैककार्यार्थत्वाधिकरणम् ॥ २ ॥ )

अङ्गेष्विदानीं चिन्ता । किमङ्गानि संभूय कार्यं कुर्वन्ति, उत भेदेनेति । तत्रेदमुच्यते—

[ २ ] अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥ पू०

यथा प्रधानानां समेतानामेकं फलं, नैवमङ्गानाम् । अङ्गानां तु प्रयोजनान्यत्वम् । अङ्गस्याङ्गस्य पृथक् फलम् । किं कारणम् । शब्दभेदात् । चोदनाभेदादित्यर्थः । समिधो यजति, तनूनपातं यजति, इत्येवमादिभिः परस्परानपेक्षाभिश्चोदनाभिः पृथक्त्वेनाङ्गानि चोद्यन्ते । तानि पृथगेव प्रयोजनान्याकाङ्क्षन्ति, न साहित्येन । साहित्यस्यानुक्तत्वात् । अतस्तेषां पृथगेव प्रयोजनैरभिसंबन्धो विज्ञायते । क्रतुवत् । यथा क्रतुषु सौर्यादिषु पृथक्त्वेन चोदितेषु पृथगेव फलसंबन्धो भवति ॥ ५ ॥

अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥ सि०

युक्तं, यत्क्रतुषु फलभेदः । शब्देन तत्र भिन्नानि फलान्युक्तानि । सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प-

---

[ ४ ॥ ]

' समिधो यजति ' इत्येवमादीनि परस्परनिरपेक्षाण्युत्पद्यन्ते । उत्पद्यमानानि प्रयोजनमपेक्षन्ते । प्रयोजनापेक्षायां चैकैकं[४] क्रतूपकारं साधयतीतरानिरपेक्षम् । नात्र कश्चिच्छब्दोऽस्ति, य इतरेतरयोगं कुर्यात् । येनैतानि संहत्य कार्यं कुर्युः । तस्मादेकैकस्य क्रतूपकारः कार्यम् ॥ ५ ॥

---

१ क्रतुवत्फलान्यत्वं—ग. । २ अङ्गानां पृथक् प्रयोजनम् ।—क. ख. । ३ क्रतुषु पृथक्त्वेन—क. ख. । ४ एकैकमिति—प्रत्येकमेवाङ्गमित्यर्थः ।

जाकाम इति । इहैकार्थ्यं—सर्वेषामङ्गानामेकोऽर्थः, प्रधानेषूपकारः। उपकारापेक्षायां ह्यङ्गानि श्रूयन्ते। तानि सर्वाण्येकार्थानि भवन्ति। नन्वेवं सत्येकार्थत्वादेषां विकल्पः प्राप्नोति। वक्ष्यते तत्परिहारः, विधेस्त्वेकश्रुतित्वादित्यत्र यथा विकल्पो न भवति। अत ऐका-

---

नन्वेवं सत्येकार्थत्वादेषां विकल्प इति। एषा परिचोदना नोत्तिष्ठति। कथमत्र पूर्वः पक्षः, एकैकमितरनिरपेक्षं क्रतूपकारं साधयतीति। तेनार्थादेव विकल्पः। 'अर्थभेदस्तु तत्रार्थे ह्यैकार्थ्यादैककर्म्यम्' इत्यनेन यदीतरेतरयुक्तानां क्रतूपकारः प्रतिपादित एवं पूर्वपक्षनिराकरणं कृतं स्यात्। एवं च कृत्वा विकल्पपरिचोदना नोत्तिष्ठति।

अथेदं सूत्रं नेतरेतरयोगं प्रतिपादयेत्क्रतूपकारं प्रति। तथा च सति किं निराकृतं पूर्वपक्षस्य। यदपि, अथ यदुक्तम्, इत्यादिना तदेकार्थत्वेन, इत्युक्त्वा, न परिह्रियते। सर्वाणि च प्रधानस्योपकुर्युः। भिन्नानि च कार्याणि कुर्युः। तद्यथा कारकाणि कर्त्रादीनीति। अनेन किं सिध्यति पूर्वपक्षवादिनः। एवमपि सर्वाण्येव प्रयोक्तव्यानि। सा च परिचोदना, या स्वपक्षं वा स्थापयति, परपक्षं वा दूषयति। यश्च दृष्टान्तः, असौ सुतरामविकल्पं प्रतिपादयति।

अयमप्ययुक्तो ग्रन्थः। समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते, सविधिजः प्रयोक्तव्य इति। यदि सत्तामात्रमनेन क्रियते, तथा सति निराकाङ्क्षत्वादेषां प्रकरणेन संबन्ध एव न स्यात्। द्वयोर्हि साकाङ्क्षयोः संबन्धो भवति। तस्मादुत्पद्यमानानामेवैतेषां तिस्र आकाङ्क्षा उत्पद्यन्ते। विधायको नास्तीति चेत्। अर्थवादादिना कल्प्यः। यत्र च विधायको विद्यतेऽङ्गानां तत्राप्येकं कार्यं वाच्यं सिद्धान्तिना। तत्र योपपत्तिः साऽत्रापि भविष्यति, इत्यनयोपपत्त्यैतन्न घटते, यद्विधायको नास्तीति।

---

१ (अ० ११ पा० १ अ० २ सू० १६)। २ इत्यत्र। तथा च विकल्पो—ग.। ३ प्रतिपादयेत्, क्रतूपकारं प्रति त्वैकार्थ्यम्—क. ज.। ४ एवं 'शब्दभेदान्नेति चेत्' इति सूत्रे यच्चोद्यभाष्यं तदप्यनुभाष्याऽऽक्षिपति—यदपीत्यादिना। ५ एवमपीति—उक्तचोदनया कार्यभेदे सत्यपीत्यर्थः। ६ साधयति—क. ज.। ७ दूषयतीति—अत्र च स्वपक्षः—विकल्प इति। परपक्षः—समुच्चय इति। न चावान्तरकार्यभेदेन विकल्पस्य समर्थनं समुच्चयस्य दूषणं वा संभवतीत्याशयः। ८ दृष्टान्त इति—'तद्यथा कारकाणि कर्त्रादीनि' इति भाष्योक्त इत्यर्थः। ९ ग्रन्थः—परिहारग्रन्थ इत्यर्थः। १० निराकाङ्क्षत्वादिति—समिदादिवाक्यैः स्वरूपमात्रबोधने क्रियमाणे विध्यभावेन फलनिराकाङ्क्षत्वादित्यर्थः।

ष्वर्थादङ्गानामेकं कार्यमिति ॥ ६ ॥

शब्दभेदान्नेति चेत् ॥ ७ ॥

अथ यदुक्तं, चोदनाभेदादङ्गानामर्थभेदो न्याय्य इति। तत्परिहर्तव्यम्[1]। परिहृतं तदेकार्थत्वेन। न परिह्रियते। सर्वाणि च प्रधानस्योपकुर्युः। भिन्नानि च कार्याणि कुर्युः। तद्यथा कारकाणि कर्त्रादीनि। सर्वाणि तावत्क्रियाया उपकुर्वन्ति, अथ च प्रतिकारकं कार्यभेदः। इदं तर्हि परिह्रियते। यदि समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते, समिद्यजिः प्रयोक्तव्यः, तनूनपाद्यजिः प्रयोक्तव्य इति, ततः स्यात्प्रयोजनाकाङ्क्षा। सा च भवन्ती भेदेन स्यात्। न त्वत्र[2] प्रयोग उच्यते। किं तर्हि। रूपमात्रमाख्यायते। एवंलक्षणको याग इह भवतीति। तत्कस्य हेतोः। प्रयोगवचनस्य प्रत्ययस्याभावात्। अन्येन च प्रयोगस्योक्तत्वात्। क पुनरेषां प्रयोग उक्तः। उत्तरसूत्रे दर्शयिष्यामः। न चेदत्र प्रयोजनाकाङ्क्षा, कुतः प्रयोजनं, कुतो भेदः ॥ ७ ॥

कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ८ ॥

प्रधानानां प्रयोगे उच्यमानेऽङ्गानामपि ताच्छब्द्यं स्यात्प्रयोगस्य। तेनैव प्रधानप्रयोगवचनेनैव शब्देनाङ्गानामपि प्रयोग उच्यते। दर्शपूर्णमासाभ्यां यजेतेति। कुतः। कर्मार्थत्वात्। क्रियार्थत्वादित्यर्थः। फलस्य क्रियार्थौ दर्शपूर्णमासौ श्रूयेते, दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति। तत्राऽऽकाङ्क्षा भवति, कथमिति। सा समिदादिभिश्चोदनाभिर्निवर्त्यते[3]। समिधो यजति, तनूनपातं यजतीत्येवमिति। तत्कस्य हेतोः। तदर्थत्वात्। तदर्था एताः समिदादिचोदनाः। तेनाऽऽकाङ्क्षितत्वात्, अफलत्वात्, फलवत्संनिधानाच्च[4]। सैषा

तस्मादेतानि सूत्राण्यन्यथा वर्ण्यन्ते। 'अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम्' इत्यनेन सूत्रेण सर्वेषामङ्गानामितरेतरयुक्तानां क्रतूपकारनिर्वृत्तिः फलं कथ्यते। कथंभावाकाङ्क्षायामुत्पन्नायामङ्गसंबन्धः। स कथंभावो यस्मिन्नेव क्षणे प्रयाजान् गृह्णाति तस्मिन्नेवानुयाजादीन्यपि। न च भिन्नः कथंभावः, येन भिन्नानि संबध्येरन्। तस्मात्सर्वेषामितरेतरयुक्तानां क्रतूपकारनिर्वृत्तिः फलम् ॥ ६ ॥

शब्दभेदान्नेति चेत्—इति प्रत्यनुभाषणसूत्रम् ॥ ७ ॥

१ तत्परिह्रियते। सर्वाणि च—गु.। २ न त्वत्र तेषां—ग.। ३ निर्वर्त्यते—ज. म.। ४ संनिधानाच्चैषा दर्शपूर्ण—ग.।

दर्शपूर्णमासयोः फलं साधयतोरितिकर्तव्यता। न चेतिकर्तव्यतामन्तरेण कर्मचोदनाऽर्थवती भवति। तस्मात्सेतिकर्तव्यताकस्य कर्मणः प्रयोगश्चोद्यते। तथा च सिद्धमेतत्प्रधानप्रयोगवचनेनैव सर्वेषामङ्गानां प्रयोगश्चोद्यत इति। एवं च सत्येकशब्दचोदितान्येवाङ्गानि। तत्र यथा प्रधानानामेकशब्दाभिसंयोगात्फलैक्यम्, एवमङ्गानामपीति ॥ ८ ॥

अत्राऽऽह। नैतद्युक्तम्। कुतः।

## कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ९ ॥

कर्तुर्यश्च प्रधाने विधिः, दर्शपूर्णमासाभ्यां यजेतेति। यश्चाङ्गेषु साङ्गाभ्यामिति, तयोर्नानार्थत्वम्। प्रधानविधिः फलार्थः। अङ्गविधिः प्रधानार्थः। तत्र प्रधानानि फलं प्रति विधातव्यानि, अङ्गानि प्रत्यनूद्यानि। न च विध्यनुवादौ युगपत्संभवतः। तस्मान्नैकेन वाक्येन प्रधानानि, तेषां चेतिकर्तव्यता शक्या विधातुम्। अतो न प्रधानचोदनागृहीतान्यङ्गानि ॥ ९ ॥

तत्राऽऽह। नैतदयुक्तम्। युक्तमेतत्। कुतः।

## आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥

आरम्भो व्यापारः क्रियेत्यनर्थान्तरम्। यागेनेह स्वर्गस्य क्रियोच्यते। यजेत—यागेन स्वर्गं कुर्यात्। स्वर्गार्थं व्याप्रियेतेत्यर्थः। इदं

---

कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात्। इति प्रलतुभागपरिहारः ॥८॥

कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु—इति पुनः पूर्वपक्षः। यद्यपि यागः फलं प्रति विधीयते, इतिकर्तव्यता प्रत्यनूद्येत। न हि सकृदुच्चरित उभयार्थो लभ्यते। आवृत्तौ च वाक्यभेदः। अथोच्येत न यागमनूद्य संबन्धं करिष्यति। किं तर्हि। भावनया सर्वेषां संबन्ध इति। तथा सतीतिकर्तव्यता न दर्शपूर्णमासाङ्गं स्यात्। तत्र को दोषः। सत्यं, आग्नेयविध्यन्तो न स्यात्। आग्नेयस्येतिकर्तव्यताभावात् ॥ ९ ॥

नैवात्र यागमनूद्येतिकर्तव्यता विधीयते। किं तर्हि। भावनयैवेतिकर्तव्यतासंबन्धः।

---

१ सेतोर्ज्ञे...—ग. ख. गु.। २ ...—ग.। ३ कर्तव्यो... प्रधानेषु विधिः—ग.। ४ तस्मान्नैकेन प्रधानानि—ग.। ५ अत्राऽऽह—ग.। ६ युक्तमेव—ग.। ७ कर्तव्यो—अङ्गानां प्रधानानां चेत्यर्थः। ८ स्यादिति—किंतु फलभावनासंबन्धकारणमफलाङ्गमेव स्यादिति शेषः।

तु न ज्ञायते, कोऽसौ व्यापार इति। तत्संनिधौ चाग्न्यन्वाधानादि श्रूयते। तस्मिन् आकाङ्क्षितत्वात्संनिधानाच्चैतद्भवति, अयमस्मिन् व्यापारः, येन यागः स्वर्गं करोतीति। तस्मिन् विधीयमाने नास्ति वाक्यभेदः।

अथवा प्रधानानां फलं प्रति, अङ्गानां च प्रधानानि प्रति विधिरविरुद्धः। कथं कृत्वा। दर्शपूर्णमासाभ्यां[1] स्वर्गसाधनमपूर्वमुच्यते। तस्य सविशेषस्य वचनं प्रयुज्यते। यथा, एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति। तस्मात्प्रधानप्रयोगवचनेनैवाङ्गानां प्रयोगो विधीयत इति ॥ १० ॥

---

कथम्। यजेतेत्यस्मिन्भावनावचन उच्चरिते तिस्र आकाङ्क्षा जायन्ते। तत्र किमंशे भाव्यो यः पुरुषार्थः स उपनिपतति। द्वितीयस्यां करणम्। तृतीयस्यामितिकर्तव्यता। एताश्चापेक्षा[2] यौगपद्येन संबध्यन्ते। क्रमेणाऽऽश्रयायन्ते। यथा 'अरुणया क्रीणाति' इति यस्मिन्नेव क्षण एकहायनी संबध्यते तस्मिन्नेव क्षणेऽरुणाऽपि। न च भेदेन। एवमिहाप्येकक्षणोपनिपातस्त्रयाणाम्। प्रयोजकस्य[3] प्रयोज्यं[4] प्रति यो व्यापारः स भावनेत्युच्यते।

यदुक्तं सौर्ये, इतिकर्तव्यता न प्राप्नोतीति। उच्यते। भावनया संबध्यमानैवेतिकर्तव्यता करणमनुगृह्णती[5] संबध्यते। यथाऽरुण एकहायनीपरिच्छेदद्वारेण क्रयेण संबध्यते। एवं सतीतिकर्तव्यता पौर्णमासीयागेष्वावर्तते। अमावास्यायागेषु च। तस्मादाग्नेयादीनां फलं साधयतामङ्गमितिकर्तव्यता। सौर्येऽपि[6] फलं साधयति, इतिकर्तव्यतया भवितव्यम्। अयं[7] न्यायस्तावद्वर्णित एव। प्रत्ययार्थेन हीतिकर्तव्यता संबध्यते न यागेन। यागस्तु पूर्वापरीभूत इतिकर्तव्यतां गृह्णाति न निष्पन्नरूपः। यदा धातुमात्रमिदं तदा नामार्थे[8] वर्तेत। न च द्वयोर्नाम्नोः संबन्धोऽस्ति[9] ॥ १० ॥

---

१ दर्शपूर्णमासाभ्यामिति—ग.। २ अपेक्षा इति—अपेक्ष्यन्त इति व्युत्पत्त्या त्रयोंऽशाः कथ्यन्ते। ३ प्रयोजकस्य—उत्पादकस्येत्यर्थः। ४ प्रयोज्यं प्रतीति—उत्पाद्यं प्रतीत्यर्थः। ५ करणमनुगृह्णतीति—करणानुग्रहद्वारेणेत्यर्थः। ६ सौर्योऽपि—मु०। ७ अयमिति—भावनयेतिकर्तव्यतासंबन्ध इति न्यायो भाष्ये नवमाद्य एवोपवर्णित इत्यर्थः। ८ नामार्थे इति—नामपदस्य याग इत्यादेरर्थे इत्यर्थः। ८ धात्वर्थे—ग. मु.। ९ संबन्धोऽस्तीति—क्रियागर्भत्वात्संबन्धानामिति शेषः। तथा च भावनाद्वार एव सर्वेषां संबन्ध इति नास्ति यजेर्वैरूप्यमिति भावः।

( समुच्चितानामङ्गानां प्रधानोपकारकत्वाधिकरणम् ॥ २ ॥ )

[ २ ] एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥ पू०

इदं विचार्यते । किमग्निहोत्रादीनां कर्मणामेकदेशाङ्गयुक्तानामपि प्रयोगः, अथवा सर्वाङ्गोपसंहारेणैवेति । अथ तत्र किं वृत्तम्, सर्वशक्तौ प्रवृत्तिः स्यादिति । तत्र नैयमिकमारम्भं प्रति चिन्ता कृता । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यनया चोदनया योऽयं यावज्जीविकः प्रयोगनियम उच्यते, किं[3] तत्र सर्वाङ्गोपसंहार उत नेति । इदानीं फलार्थे प्रयोगे चिन्ता । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनया चोदनया योऽयं स्वर्गार्थ[4] आरम्भः, तत्रापि किं नैयमिकवदेव प्रयोग उत सर्वाङ्गोपसंहार इति ।

किं तावत्प्राप्तम् । एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् । एकदेशेनाप्यङ्गानां समाप्येत—कर्म प्रयुज्येतेत्यर्थः । कुतः । कृतार्थत्वात् । याऽसौ, दर्शपूर्णमासाभ्यां स्वर्गार्थं व्याप्रियेतेत्युक्ते कथं व्यापारितव्यमित्याकाङ्क्षा, सैकेनाप्यङ्गेन कृतार्था भवति । सामिधो यजति, एवं व्यापारितव्यम् । तथाऽङ्गद्वयेनाङ्गत्रयेण च । यो यावन्त्यङ्गानि करिष्यति, स तावत्कृतमुपकारं प्राप्स्यति । यथा क्रत्वन्तरेषु—सौर्यार्यमणप्राजापत्यनैर्ऋतादिषु, यो यावन्ति कर्माणि करोति, स तावद्भ्यः फलमश्नुते । ननु[5] तत्संनिधानाविशेषात्सर्वाण्येवाङ्गानि प्राप्यन्ते । प्राप्तेषु चोत्तरावत्स्यात् । तद्यथा, वाग्यतास्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयतीति, यस्य या-

पूर्वस्मिन्नधिकरण इदमवगतमितरेतरयुक्तान्यङ्गानि क्रतूपकारं कुर्वन्तीति । षष्ठे[6] नित्ये प्रयोग एकदेशेनाप्यधिक्रियते । काम्ये तु कृत्स्नामितिकर्तव्यतां यः शक्नोति कर्तुं सोऽधिक्रियत इति स्थितम् । एतेष्वधिकरणेषु स्थितेषु केयं चिन्ता, काम्येषु किमेकदेशप्रयोग उत सर्वाङ्गोपसंहार इति । तस्मादयुक्तोऽयं विचारः, गतार्थ-

१ एकदेशयुक्तानां—ग. । २ ( अ० ६ पा० ३ अ० १ सू० १ ) । ३ किमत्र—ग. । ४ यजतीति—ग. । ५ न तु—ख. । ६ षष्ठ इति—षष्ठाध्याये तृतीयपादे प्रथमद्वितीयाधिकरणयोरित्यर्थः

वत्यो गावः स तावतीर्दोहयतीति तावतीष्वपि कृतार्थ उत्तराशब्दः, एवमिहापि यो यावन्त्यङ्गान्युत्सहते स तावन्ति करिष्यति ॥ ११ ॥

फलाभावान्नेति चेत् ॥ १२ ॥

इति चेद्भवान् पश्यति, एकदेशाङ्गयुक्तानामानियतानां कर्मणां प्रयोग इति । तन्न । कुतः । फलाभावात् । यावच्छ्रुतं स्वर्गकामस्य स्वर्गकामेनेदं कर्तव्यमिति, तत्साकल्येनाकुर्वतः फलाभावः स्यात् । सर्वं चेदं श्रुतम् । स्वर्गकामो यजेतेत्युक्त्वा सर्वस्याग्न्यन्वाधानादेः कर्मकलापस्याऽऽम्नानात् ॥ १२ ॥

न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥

नैतदेवम्, अङ्गवैकल्ये फलाभाव इति । कुतः । कर्मसंयोगात् । प्रधानकर्मणा हि फलं संयुक्तम्, दर्शपूर्णमासाभ्यां स्वर्गकाम इति, नाङ्गैः । अङ्गानि तु तदाकाङ्क्षया गृह्यन्ते । सा चाऽऽकाङ्क्षैकेनापि कृतार्था भवतीत्युक्तम् । एवं चेत्, प्रयोजनमङ्गकृत उपकारः । फलं च स्वर्गादि, अशब्ददोषं स्यात् । दर्शपूर्णमासयोः फलार्थत्वे, दर्शपूर्णमासाभ्यां स्वर्गकाम इत्येवंशब्दो न दुष्येत्, तत्संनिधौ चाङ्गानां विधायका ये समिदादयः, ते च तदुपकारित्वे न दुष्येयुः । तस्मान्नाङ्गाभावे फलाभावः ॥ १३ ॥

ऐकशब्द्यान्नेति चेत् ॥ १४ ॥

इति चेत्पश्यसि, दर्शपूर्णमासाभ्यां तत्फलं, न समिदादिभ्य इति । नैतद्युक्तम् । किं कारणम् । ऐकशब्द्यात् । एकः शब्द उपदेशकः प्रयोगस्य दर्शपूर्णमासयोः समिदादीनां च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तेन च फलसंबन्धः कृतः । तत्र कुत एतत्, दर्शपूर्णमासतः फलं नेतरेभ्य इति ॥ १४ ॥

---

त्वात् । तेन 'अङ्गानां तु शब्दभेदात्' इत्यारभ्य यावत् 'विधेस्त्वेकश्रुतित्वात्' इत्येतावदेकमधिकरणं द्रष्टव्यम् ॥ ११ ॥ [ १२ ॥ १३ ॥ १४ ॥

---

१ फलार्थत्वात्-ग. । २ इत्ययं शब्दः-ग. । ३ वाऽङ्गानां—क. ख. । ४ अङ्गाभावेन-ग. । ५ ऐकशब्द्यादिति चेत्-ग. । ६ द्रष्टव्यमिति—अङ्गानां विकल्पसमुच्चयविचारार्थं द्रष्टव्यमित्यर्थः । एवं यदपरं सूत्रत्रयं 'तथा कर्मोपदेशः स्यात्' इत्यादि तदन्वाचयहेतूपन्यासेन पूर्वाधिकरणस्यैव शेषभूतं द्रष्टव्यमित्यपि ज्ञेयमित्यर्थः ।

नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥

नैतदेवम्, सर्वाणि फलसंयुक्तानीति। किं तर्हि। दर्शपूर्णमासावेव। कथं ज्ञायते। दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति दर्शपूर्णमासयोरेव स्वर्गं प्रति करणत्वं श्रूयते, न समिदादीनाम्। आकाङ्क्षया हि तेषां ग्रहणम्। सा च कथंभावस्याऽऽकाङ्क्षा, कथं कुर्यादिति। न करणस्य, केन कुर्यादिति। तस्य निर्दिष्टत्वात्, दर्शपूर्णमासाभ्यामिति। तस्मान्न समिदादीनां फलेन संयोगः। यदि च संयुज्येरन्, समान्याग्नेयादिभिः स्युः। समत्वाच्चागुणत्वम्। तत्र यदुच्यत एकदेशाङ्गयुक्तानामपि प्रयोग इति, तदेव नास्ति, ॥ १५ ॥

ऐककर्म्यादिति चेत् ॥ १४ ॥

ये तु—ऐककर्म्यादिति सूत्रं पठन्ति तेषामयमर्थः। इति चेत्पश्यसि प्रधानानामङ्गवत्तयाऽङ्गानि क्रियन्त इति। तस्मादैककर्म्यं भवतु। एकमेवाङ्गं प्रयुज्यताम्। एकेनापि प्रधानमङ्गवद्भवति ॥ १४ ॥

नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥

नैतदेवम्। कस्मात्। अर्थपृथक्त्वात्। अर्थपृथक्त्वं भवति। उपकारपृथक्त्वम्। एकेनाङ्गेनार्थवत्तायामल्प उपकारो बहुभिर्महान्। कथं ज्ञायते। समत्वादगुणत्वम्। यद्येकेन बहुभिश्च सम उपकारः स्यात्, तत एकस्यैवाङ्गत्वं भवेत्, अन्येषामगुणत्वं स्यात्। अनङ्गत्वमित्यर्थः। तत्र बहूनामाम्नानमनर्थकं स्यात्। न चैषां विकल्प इत्युक्तं, विधेस्त्वेकश्रुतित्वादित्यत्र। तस्मादङ्गभूयस्त्वे फलभूयस्त्वमिति ॥ १५ ॥

विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ सि०

१९ ॥

१ न सर्वाणि—क. ख.। २ इत्येतदेव—ख. मु.। ३ एकेनापि हि—ग.। ४ तन्त्र—क. ख.। ५ इत्युक्तमिति—( अ. ११ पा० १ अ० २ सू० १६ ) एतत्सूत्रव्याख्यानावसरे, वक्ष्यते तत्परिहार इत्युक्तमित्यर्थः।

नन्वेतदेवम्, एकदेशेनाप्यङ्गानां प्रयोग इति । कथं तर्हि । सर्वाङ्गोपसंहारेण । कुतः । विधेरेकश्रुतित्वात् । एकेन शब्देनाङ्गानां प्रयोगो विधीयते, दर्शपूर्णमासाभ्यां यजेतेति सर्वापेक्षयेत्युक्तम् । सा त्वपेक्षा कृत्स्ने वाऽग्न्यन्वाधानादिव्यापारे, तदेकदेशे वा । तत्रैकदेशापेक्षा न युक्ता । कस्मात् । अपर्यायविधानात् । इमान्यङ्गानि न पर्यायेण विधीयन्ते, कदाचित्, समिधो यजति, कदाचित्, तनूनपातमिति । कथं तर्हि । नित्यवद्यथाभूतानि च श्रुतानि तथाभूतान्यपेक्षयाऽभिसंबध्यन्ते । अथोच्येत । नित्यवच्छ्रुतानामपि सतामेकदेशोऽपेक्षिष्यत इति । नैतद्युक्तम् । कुतः । अर्थेन युगपत्प्राप्तेः । अर्थेन प्रधानोपकारेण खलेकपोतवद्युगपत्संनिपतन्त्यङ्गानि । तत्र न गृह्यते विशेषः, इदं प्राप्यत इदं नेति । अतः सर्वाणि प्राप्यन्ते । यथाप्राप्तं च स्वशब्दार्थो निवीतवत् । यथा, निवीता ऋत्विजः प्रचरन्तीति ऋत्विग्विशेषाभावात्सर्वेषां च संनिधानात्सर्वे ऋत्विजो निवीता भवन्ति, एवमिहापि सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥

तथा कर्मोपदेशः[1] स्यात् ॥ १७ ॥

तथा च कृत्वा, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति, आहुतिसंख्या पाक्षिकी न भविष्यति ॥ १७ ॥

क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥

तत्र यदुक्तं, यथा क्रत्वन्तरेष्विति । युक्तं तथा क्रत्वन्तरेषु पार्थक्यम् । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्युक्त्वा पुनरुच्यते, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इति । किमतः । अतस्तेषां परस्परानपेक्षाणां कार्यं, न संभूयेति गम्यते । परिसमाप्ते हि पूर्वस्य विधान उत्तरः पृथक्त्वेन विधीयते । अथेह, विधेस्त्वेकश्रुतित्वादित्यनेन न्यायेन संभूयकार्यमङ्गानां युक्तम् । तस्माद्वैषम्यं क्रतुभिः ॥ १८ ॥

उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत ॥ १९ ॥

---

१६ ॥ १७ ॥ १८ ॥

---

१ कर्मोपदेशत्वात्—मु.

प्राप्तेषु चोत्तरावत्स्यादिति यदुक्तम् । युक्तं यदुत्तरासु यावत्स्वं दोहनम्, अश्रुतित्वात् । नात्रोत्तराणां दोहनं विधीयते । किं तर्हि । अनूद्यते । किं कारणम् । कृतार्थत्वात् । विशेषाणां वाग्विसर्जनादीनां विधानेन कृतार्थं तद्वाक्यं नोत्तराणां दोहनं विधातुमुत्सहते । विधीयमानेऽर्थद्वये भिद्येत वाक्यम् । अनुवादश्च प्राप्तस्यार्थस्य भवति । अर्थाच्च यावत्स्वं दोहनं प्राप्तम् । अर्थादस्वा न दोह्याः । स्वास्तु सर्वाः कथं दोह्याः । उपरिष्टादेतद्वक्ष्यामः, तथा पयःप्रतिषेधः कुमाराणामित्यत्र । तस्माद्यथाकामी प्रतीयते । यावत्यो गावः स तावतीर्दोहयति ॥ १९ ॥

( काम्यानां कर्मणां कामनानुरोधेन पुनः पुनरभ्यासाधिकरणम् ॥ ४ ॥ )

[ ४ ] कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ २० ॥ सि०

काम्येषु कर्मसु चिन्ता । किं काम्यं कर्म सकृदेव प्रयोक्तव्यम्, अथवा फलस्य भूयस्त्वमिच्छता भूयोऽभ्यसितव्यमिति । किं प्राप्तम् । काम्ये कर्मणि प्रतिप्रयोगं फलभेदः । आरम्भभाव्यत्वात् । कर्मप्रयोगेण फलं भाव्यते । कथं ज्ञायते । प्राक्कृतात्कर्मणः फलं नास्ति । यदि भवेत्कर्मानर्थक्यं स्यात् । कर्मोत्तरकाले चास्तीति श्रुतितोऽवगम्यते । यच्च प्राक्कर्मणो नास्ति कर्मोत्तरकालं च भवति, तत्तेन कर्मणा भाव्यते । कृषिवत् । यथा कर्षणेन धान्यमसच्चेद्भाव्यते, पुनः पुनरपि धान्यवदेतद्भविष्यति ॥ २० ॥

अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ २१ ॥

एवं च कृत्वा सर्वेषां कर्मणां पुनः पुनः क्रियमाणानामधिकारो भविष्यति । तत्रेमानि दर्शनान्युपपत्स्यन्ते । तेषां ये प्रथमं यजेरंस्तेषां

१९ ॥ २० ॥

१ यथाप्राप्ते च—क. मु. । २ यदुक्तं, तन्न युक्तम् । यदु—मु. । ३ किं कारणम् । विशेषाणां—क. ख. । ४ वाग्विसर्गादीनां विधाने—ख. । ५ न दोह्याः— मु. । ६ ( अ० ११ पा० १, अ० ८ सू० ५० ) । ७ किं प्राप्तम् । कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः । काम्ये—ग. । ८ गम्यते—क. ख. । ९ काले—क. ख. । १० धान्यवदेव भवि—ग. ।

गौरातिरात्र, ये द्वितीयं तेषामायुरिति। प्रथमं यजेरन्, द्वितीयं यजेरन्नित्येतदभ्यासे सति भवति। तस्माद्यावदिच्छमभ्यासः ॥ २१ ॥

सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ॥ २२ ॥ पू०

सकृदेव तु काम्यं कर्म प्रयोक्तव्यम्। कुतः। कृतार्थत्वात्। सकृत्कृतेन कृतश्चोदनार्थः। न च कृते पुनः कर्तव्यमस्ति। कः पुनश्चोदनार्थः। यागस्य कर्तुः फलं, होमस्य कर्तुः फलमिति। कथं कृत्वा तदुच्यते। इह यजेत, जुहुयादिति धातुना क्रियोच्यते। प्रत्ययेन कर्ता। तयोः कर्ता प्रधानभूतः, उपसर्जनभूता क्रिया। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः। अनुप्रयोगश्च कर्तृप्राधान्य एव भवति, पचति देवदत्त इति। तेन होतुर्यष्टुश्च फलमुच्यते। सकृद्धुतेन सकृदिष्टेन चासौ होता यष्टा च जातः। तत्र द्वितीयादिप्रयोगोऽनर्थकः स्यात्। कृतार्थत्वादङ्गवत्। तद्यथा प्रधानस्य साङ्गत्वोपपादनायाङ्गानि क्रियन्ते। सकृत्कृतेश्च तदुपपादितमिति नाभ्यस्यन्ते, तद्वत् ॥ २२ ॥

शब्दार्थश्च तथा लोके ॥ २३ ॥

लोकेऽपि तथैव शब्दार्थो भवति। काष्ठान्याहरेत्युक्तः सकृदाहरति, न पुनः पुनः ॥ २३ ॥

अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥ सि०

अपि वा नैवं स्यात्, अस्मिन्नर्थिनः कर्मणश्च संप्रयोगे सकृदेवार्थी कर्मप्रयोगे वर्ततेति। कथं तर्हि। यथाकामी प्रतीयेत। सकृद्वा बहुकृत्वो वा। फलभूमार्थी बहुकृत्वः, संतुष्टः सकृत्। कुतः। अश्रुतित्वात्। नात्र यष्टुर्होतुश्च फलं श्रूयते। यत्तु प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति। तत्कर्मनिमित्तेषु नामपदेषु—पाचको लावक इत्येवमादिषु। आख्याते तु न कर्ता, न क्रिया प्रधानतः। किं तर्हि। भावप्रधानमा-

---

२१ ॥ २२ ॥ २३ ॥

---

१ सति। तस्मात्–क. ख.। २ यजेत्—क. ग.। ३ चाऽसौ— क. ग.। ४ होतुः फलं— क. ख.। ५ प्रकृतिप्रत्ययौ सहार्थं ब्रूतः—मु.। ६ न कर्ता क्रियाप्रधानतः—मु.।

ख्यातम् । भावना कस्यापि श्रुते । भावप्रयुक्तस्य साधनग्रामस्यापेक्षितत्वात् । यजेत, केन, किमर्थं, कथमिति । कर्तृप्राधान्ये कार्याभावाच्च साधनाकाङ्क्षया भवितव्यम् । न हि भवति पाचकः केन किमर्थं कथमिति । भावना च फलस्योच्यते, न क्रियायाः । तृतीयानिर्देशात्, उद्भिदा यजेत, बलभिदा यजेतेति । भाव्यत्वे हि द्वितीयया निरदेक्ष्यत । स्वर्गस्त्वीप्सितः कामसंयोगात्, स्वर्गकाम इति । तदेतदेवमापद्यते, स्वर्गकामो यागेन स्वर्गं भावयेदिति । यच्च भाव्यते तद्धयक्रमसत् । सतो हि भावो नोपपद्यते । असच्चेत्कर्मणा भाव्यते, पुनः पुनरपि भावयिष्यते, कृषिवत् । तस्मात्फलार्थिना काम्यं यावदिच्छमभ्यसितव्यमिति । यदि च नियोगतः सकृदेव कर्तव्यं भवेत्ततः, तेषां ये प्रथमं यजेरन्नित्येवमादिषु गवादिविधिषु वचनान्येतानि ( कल्प्येरन्न द्वितीयं यजेरन्निति । तथा च वाक्यानि भिद्येरन् । ये च द्वितीयं यजेरंस्तेषां गौरतिरात्र इति ) ॥ २४ ॥

ऐकशब्द्यात्तथाऽङ्गेषु ॥ २५ ॥

यत्त्वङ्गवदिति । युक्तं यदङ्गानां सकृत्प्रयोगः । ऐकशब्द्यात् । एकस्तत्राङ्गानां प्रधानानां चोपदेशकः शब्दः सर्वाङ्गान्यपेक्षया गृह्णातीत्युक्तम् । सा चापेक्षा सकृदेवैष्वङ्गेषु भवति कृतार्था । तस्मात्तत्र पुनः पुनः क्रियाया हेतुर्नास्ति । इह त्वसतः फलस्य कर्मोत्पादकम् । तस्य प्रतिप्रयोगमन्यस्यान्यस्योत्पत्तिरविरुद्धेत्येवमपादिष्टो हेतुः । तस्माद्विषमत्वमङ्गैः ॥ २५ ॥

लोके कर्मार्थलक्षणम् ॥ २६ ॥

यच्च लोकवादिति, लोके कर्मार्थप्रधानम् । कार्यवशात्सकृत्प्रयुक्तोऽ-

२४ ॥ २९ ॥

१ भावना च न कस्याचिच्छ्रूयते । भावनाप्रयुक्तस्य—मु. । भावना कस्यापि युज्यते । कथं ज्ञायते । भावप्रयुक्तस्य—ग. । २ भावयिष्यति–क. ख. मु. । ३ चिह्नितस्थाने ' न कल्प्येरन् प्रथमं द्वितीयं यजेरन्निति तथा च वाक्यानि भिद्येरन् । ये च प्रथमं यजेरंस्तेषां गौरतिरात्र इति ' एवं पाठ आवश्यक इति भाति । परंत्वादर्शपुस्तकेषु तथा नोपलभ्यते । ४ शब्दः । स चाङ्गान्यपेक्षया–क. ग. । ५ तस्मादत्र–ग. । ६ क्रियाया—ग. ]

सकृदाहरति, असकृदप्युक्तः सकृदाहरति, नाऽऽहरति वा । अथेह शब्दलक्षणे कर्मणि यथाशब्दार्थं प्रवृत्तिः । तस्माल्लोकवदित्यदृष्टान्तः ॥२६॥

( दृष्टार्थानामवघातादिक्रियाणां प्रयोजननिष्पत्तिपर्यन्तमभ्यासाधिकरणम् ॥ ५ ॥ )

[ ५ ] क्रियाणामर्थशेषत्वात्प्रत्यक्षोऽनस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥ सि०

व्रीहीनवहन्ति, तण्डुलान् पिनष्टि, इत्येवमादीनां दृष्टप्रयोजनानां क्रियाणामातण्डुलनिर्वृत्तेः प्रयोगः स्यात् । कुतः । एतासां प्रयोगे प्रत्यक्षोऽर्थो निर्वर्त्यते । तण्डुलाः पिष्टानि च । तेषांह प्रयोजनं पुरोडाशस्य कार्यत्वात् । तस्मादेतासां तदर्थ एव प्रयोगो विज्ञायते । यदि सकृदेव मुसलस्योद्यमननिपातने कृत्वोत्सृज्येत, उपलाया वा प्रकर्षणापकर्षणे, यदेषां कार्यं तन्नैव निर्वर्त्येत । अत आसां तन्निर्वृत्त्याऽपवर्गः स्यात् । आतण्डुलनिर्वृत्तेरा च पिष्टनिर्वृत्तेरभ्यास इति ॥ २७ ॥

( चयनेऽदृष्टार्थस्य सर्वौषधावघातस्यानभ्यासाधिकरणम् ॥ ६ ॥ )

[ ६ ] धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥ सि०

यत्र तु दृष्टं कार्यं न वर्तते । यथाऽग्निचित्याम्, औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्त्यत्र तदुपदधातीति । तत्र तण्डुलनिर्वृत्त्या नास्ति प्रयोजनम् । तण्डुलकार्यस्य पुरोडाशादेरचोदितत्वात् । तस्मात्तत्र सकृत्क्रियया कृतः शब्दार्थ इति न स्यादभ्यासः । येषां तु तण्डुलफल एव मुसलस्योद्यमननिपातनकर्मण्यवहन्तिशब्दः प्रवर्तत इत्युपगमस्तेषामातण्डुलनिर्वृत्तेरेवाभ्यासः प्राप्नोति । स तु मन्द एवाभ्युपगमः । यत्कारणम् । विनाऽपि तण्डुलैः प्रयोगो दृश्यते, कषायमवहन्ति, किण्वमवहन्तीति । न चासौ गौणः प्रयोगः, विशेषाभावात् । अवयवप्रसिद्ध्या चावघातमात्रवचन एव प्रतीयते । न च समुदायोऽर्थान्तरे प्रसिद्धः । तण्डुलव्यापारस्य तु प्रायो दृष्टेस्तत्र प्रयोगप्राचुर्यम् । अतोऽयं व्यामोहः ॥ २८ ॥

२६ । २७ । २८ ।

१ कार्यं न निर्वर्तेत—क, । कार्यं निवर्तेत—ख, । २ अभ्युपगमः—ग, । ३ ज्ञायते—ग, ।

( एकस्मिन् प्रयोगे प्रयाजाद्यङ्गस्य सकृदनुष्ठानाधिकरणम् ॥ ७ ॥ )

[ ७ ] क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥ पू०

प्रयाजादीन्युदाहृत्य चिन्त्यते । किं सकृत्प्रयोग एषामुताभ्युताभ्यासोऽपि कर्तव्य इति । तत्र, धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यादित्यनेन न्यायेन सकृत्प्रयोगे प्राप्ते, एवमुच्यते—क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् ।

अभ्यासः कार्यः । कुतः । यतोऽभ्यासे फलभूमा स्यात् । कथं ज्ञायते । अनुमानेन । किं तदनुमानम् । प्रागङ्गप्रयोगात्प्रधानोपकारो नासीदूर्ध्वं ततो भवति । तेन विज्ञायते नूनमङ्गेन क्रियत इति । क्रियते चेत्पुनः पुनरपि करिष्यते । क्रतुवत् । तद्यथा कर्मसु सौर्यादिषु फलं कर्मणा क्रियत इति कर्माभ्यासे फलभूयस्त्वम् । एवमिहापि ॥ २९ ॥

सकृद्वा कारणैकत्वात् ॥ ३० ॥ सि०

सकृद्वाऽऽङ्गं प्रयोक्तव्यं, नाऽऽवृत्त्या । कुतः । कारणैकत्वात् । एकं कारणमङ्गानां प्रधानेषूपकारः । कः पुनरसौ । येन प्रधानानि फलं ददति । तच्चेत्सकृत्प्रयुक्तेनाङ्गेन कृतं जानाति (प्रधानानि फलवन्तीति पुनरङ्गस्याप्रयोगः । अथ न कृतं, सुतरामप्रयोगः । येन सकृत्कृतेन नोपकृतं स पुनः क्रियमाण उपकरिष्यतीति काऽऽशा ॥ ३० ॥

परिमाणं चानियमेन स्यात् ॥ ३१ ॥

[3]यदि चानियमः सकृदसकृद्वा प्रयोगस्ततः, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति योऽयं नित्यवदाहुतिपरिमाणानुवादः स न [4]स्यात् । स तावद्भवतां पाक्षिकः कल्प्येत, [5]तथाऽस्य रूपं बाध्येत । तस्मादनभ्यासः ॥ ३१ ॥

फलस्याऽऽरम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ ३२ ॥

यत्तु क्रतुवदिति । युक्तं यत्क्रतुष्वभ्यासः । फलस्याऽऽरम्भनिष्पत्तेः । कर्मारम्भेण तत्र फलं निष्पद्यते । आरम्भान्तरेणापरं निष्पत्स्यत इति ।

---

२९ ॥ ३० ॥ ३१ ॥

---

१ क्रतुवच्च—ग. मु. । २ (अ० ११ पा० १ अ० ६ सू० २८) । ३ यदि वा—क. ख. ग. । ४ स्यात्—भवन् पाक्षिकः—क. ख. । ५ तथा स्वरूपं—ग. ।

अङ्गस्य पुनरुक्तपरिमाणं फलं प्रधानानां फलवत्तासंपादनम् । तच्चेत्सकृत्कृतेन कृतं न भूयः क्रियाऽस्तीति । एवमपदिष्टो हेतुः । तस्मादनुपन्यासः ॥ ३२ ॥

अर्थवांस्तु नैकत्वादभ्यासः स्यानर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥

यदुक्तं, सकृत्कृतेनाङ्गेन कृतत्वादर्थस्यानर्थकोऽभ्यास इति । अत्र ब्रूमः । अर्थवांस्त्वभ्यासोऽङ्गग्रामस्य । नानर्थकोऽभ्यासः । कथं कृत्वा । एकत्वादभ्यासः स्यादनर्थकः । यद्येकमेवार्थमभ्यस्यमानमप्यङ्गं करोति ततोऽभ्यासोऽनर्थकः स्यात् । यथा भोजनमेकस्मिन् कालेऽभ्यस्यमानमेकमेव फलं तृप्तिं करोतीति नाभ्यस्यते । अथेहार्थस्यापरिमाणत्वम् । इयन्तमुपकारं करोत्यङ्गमिति न ज्ञायते । ननु यावता प्रधानं फलवद्भवति तावत्करोतीति गम्यते । सत्यमेवम् । किंतु प्रधाने क्रियार्थत्वादनियमः स्यात् । प्रधानस्य फलक्रियार्थमङ्गम् । तत्तु प्रधानफलमपरिमितम् । तदङ्गोपकारस्य भूयस्त्वे भूयो भविष्यति । अल्पत्वेऽल्पम् । अभ्यासे चासंशयं भूयानुपकारः स्यात्, कार्यत्वात्तस्य । तस्मादनियमः स्यात्, सकृद्वा प्रयोगोऽभ्यासो वेति ॥ ३३ ॥

पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥

यत्त्वाहुतिसंख्या विरुध्यत इति । पृथक्त्वादुपकारस्याभ्यासे न्यायमाप्ते योऽयमाहुतिसंख्यानुवादः, स विधितः स्यात्—आहुतिविधीनभिप्रेत्य, चतुर्दश पौर्णमास्यामाहुतिविधयस्त्रयोदशामावास्यायामिति । नह्याहुतिसंख्या युज्येत । आहुतिविधिसंख्या तु लक्षणयोपपद्यते ॥ ३४ ॥

---

३२ ॥ ३३ ॥ ३४ ॥ ]

---

१ सकृत्तेन कृतं–ख. । २ अर्थवतस्तु–क. ग. । ३ अभ्यासो प्राप्तो नानर्थकः–मु. । ४ कुर्यात्तस्याभ्यासः–क. ख. । ५ एकं फलं–क. ख. । ६ अनुवादः स्यात्–क. ख. ।

**अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्राद्फलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥३५॥**

अनभ्यासो वाऽङ्गानाम् । कुतः । प्रयोगवचनैकत्वात् । एकः प्रयोगवचनोऽङ्गानां प्रधानानां च । तस्यैकत्वात्, सर्वस्य युगपच्छासनं, अनेन कर्मणा साङ्गेन यजेतेति । सकृत्कृतैश्चाङ्गैस्तत्साङ्गं जातमिति न पुनः क्रियायां हेतुरस्ति । ननूपकारभूयस्त्वं भविष्यति । यद्यङ्गान्यदृष्टमुपकारं कुर्युस्ततस्तदभ्यासे, उपकारभूयस्त्वमनुमीयेत । दृष्टमेव त्वर्थमङ्गानि कुर्वन्ति प्रधानस्याङ्गवत्ताम् । सा चाभ्यासेऽपि तावत्येवाङ्गवत्ता । सा चेह फलसंबद्धा, साङ्गेन यजेतेति, नाङ्गानि । अङ्गानि तत्संपादनेनार्थवन्ति ।

नन्वेतदयुक्तमिव । यदा हि प्रयाजाः, न तदा प्रधानयजिरपूर्वं वा । यदा च यजिरपूर्वं च, न तदा प्रयाजाः । तदेवमदृष्टरहिते समिदादिमात्रे सत्यङ्गवत्तैव नास्ति, कुत उपकारः । अपि च यदि यजिमात्रमेवाङ्गेषु, नापूर्वफलमस्ति, ततः सोमाङ्गभूतानामिष्टिपशुबन्धानां चोदक एव नास्ति । असति ह्यपूर्वे इतिकर्तव्यताकाङ्क्षा नास्ति । यजतेः[1] प्रज्ञातेतिकर्तव्यताकत्वादितिकर्तव्यता चोदको नातिदिशेत् । तत्रैतानि

भाव्यः स्वर्गः, भावको यागः । इतिकर्तव्यता यागस्यानुग्रहं करोति, न फलसाधिका । तस्याः फलं न श्रूयते । करणात्फलमिति । सत्यम्[2], करणस्य फलं साधयतोऽभ्यस्यमानेतिकर्तव्यता महान्तमुपकारं करोति । तच्च महतोपकारेणानुगृहीतं महत्फलं करोति । अत्राऽऽह[3]—सकृदितिकर्तव्यता । कुतः । भावनया करणेतिकर्तव्यते आकाङ्क्षिते । तत्र करणं फले व्याप्रियते । इतिकर्तव्यता करणमनुगृह्णती, आकाङ्क्षिता । सकृत्कृतया च निराकाङ्क्षीकृता भावना । द्वितीयादिप्रयोगः केनाऽऽकाङ्क्ष्यते[4] । तस्मात्सकृत् ।

अत्र मन्यः । यदा प्रयाजा न तदा प्रधानयजिरपूर्वं वा । यदा च याजिरपूर्वं च, न तदा प्रयाजा इति । एतदयुक्तम् । कथम् । यस्मिन्नेव क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव करणमपि भावकत्वेन व्याप्रियते । इतिकर्तव्यताऽपि तस्मिन्नेव करणमनुगृह्णाति । यद्यन्यस्मिन्क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते, करणमप्यन्य-

१ प्रज्ञातेतिकर्तव्यत्वात्—ग. । २ चोदयति–सत्यमित्यादिना । ३ आह–परिहारमाहेत्यर्थः ।
४ केनाऽऽकाङ्क्ष्यत इति–सकृत्कृतयैवेतिकर्तव्यतया करणोपकारे फलं साधयतो लब्धे सतीति शेषः ।

दर्शनानि नोपपद्येरन्। तस्यैकशतं प्रयाजानुयाजाः, न च समिष्टयजूंषि जुहोति, प्रहृत्य परिधीन् जुहोति हारियोजनमिति। तस्मादियमन्वाख्या।

अनभ्यासो वाऽङ्गानां प्रयोगवचनैकत्वात्। एकः प्रयोगवचनोऽङ्गानां प्रधानानां च। तस्यैकत्वात्, सर्वस्याङ्गप्रधानकलापस्य युगपच्छासनम्। तत्र प्रधानानामनभ्यासः। कस्य हेतोः। सकृत्कृतैः प्रधानैः कृतः श्रुत्यर्थः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। कृते श्रुत्यर्थे यच्छास्त्रविहितं फलं तल्लब्धमिति न पुनः क्रियायां हेतुरस्ति। एवमङ्गेष्वपि सकृत्कृतेषु यदङ्गानां प्रापकं शास्त्रं तस्यार्थः कृतः। तस्मिन् कृते यच्छास्त्राधिगतमङ्गफलं तल्लब्धमिदानीमित्यवगन्तव्यम्। तथा च सत्यभ्यासोऽनर्थकः। यत्तु फलभूयस्त्वं भविष्यतीति। तदयुक्तम्। दर्शपूर्णमासयोर्यत्फलं तद्भावनायामङ्गोपकार उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ। यद्यपूर्वं फलमङ्गैरुत्पाद्येत, अङ्गफलमेव तत्स्यात्। न चाङ्गानि फलवन्ति। प्रधानानां स्वकार्यं साधयतामदृष्ट उपकारस्तैः क्रियते। सकृत्कृतैश्चासौ कृतः। तस्मान्नाङ्गावृत्तौ फलभूयस्त्वमस्ति ॥३५॥

## अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥

अभ्यासो वाऽङ्गानाम्। कुतः। पितृयज्ञे श्रूयते, सकृदाच्छिन्नं बर्हिर्भवतीति। तथाऽनुयाजे, सकृत्परिधीन् संमार्ष्टीति। स्विष्टकृति च, उत्तरार्धात्सकृदवद्यतीति। तद्यद्यसकृदङ्गानां प्रयोगस्तत एतानि वचनान्युपपद्यन्ते। तस्मादभ्यासः ॥ ३६ ॥

## अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥

---

स्मिन्भावकं, तथा सति भाव्यभावकसंबन्ध एव न स्यात्। तस्माद्यौगपद्यं स्वर्गयागयोः। एवमेव करणेतिकर्तव्यतयोः। तस्मादेषां तुल्यकालता। न चावान्तरक्रियाः परस्याभिप्रेताः। भिन्नकाला अपि सत्यः प्रयाजादिक्रिया एवाभिप्रेताः। तच्चायुक्तं, स्वरूपाणां भिन्नत्वादिति ॥ ३५ ॥ [ ३६ ॥

---

१ शासनम्। प्रधानानां—क. ख.। २ न चाङ्गानि—क. ख.। ३ पितृयज्ञे हि—मु०। ४ अनुयाजेषु—ग.।

अनभ्यासत्वज्ञानां यथोक्तेन न्यायेन । यत्तु छेदनादिषु वचनाऽसकृत्त्वस्यान्यत्राभ्यासो विज्ञायत इति । अत्र ब्रूमः । यद्यप्यनभ्यासस्तथाऽपि छेदनादिषु वाच्यं सकृत्त्वम् । दर्शपूर्णमासयोः, असकृदाच्छिन्नं बर्हिर्भवतीति वचनात् । तत्प्रकृतित्वात्[1]पितृयज्ञेऽप्यसकृत्प्राप्तम् । तथा प्राप्ते सकृत्त्वं वाच्यम् । एवं प्रयाजेषु त्रिः संमार्ग उक्तः । सोऽनुयाजेषु पुनरावर्तते । तत्रापि त्रित्वे प्राप्ते सकृत्त्वं विधातव्यम् । तथा, द्विर्हविषोऽवद्यतीत्यविशेषेणोक्ते स्विष्टकृत्यपि द्वित्वं प्राप्तम् । तत्र सकृत्त्वं विधीयते । तस्माच्छेदनादिषु सकृद्वचनान्नान्यत्राभ्यासो विज्ञातुं न्याय्य इति ॥ ३७ ॥

( कपिञ्जलाधिकरणम् ॥ ८ ॥ )

## [ ८ ] बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥ पू०

वसन्ताय कपिञ्जलानालभत[2] इति श्रूयते । तत्र विचार्यते । किं तत्र त्रयश्चत्वारः पञ्च वा विकल्पेनाऽऽलब्धव्याः, अथवा त्रय एवेति । किं प्राप्तम् । विकल्पेनाऽऽलब्धव्याः । कस्मात् । सर्वप्राप्तेः । सर्व एते संख्याविशेषा बहुवचनेन प्राप्यन्ते । सर्वे तस्य वाच्याः । सर्वत्र प्रयोगात्[3] । न च समुच्चयेन संभवन्ति । अशक्यत्वात् । तस्माद्विकल्पः । नन्वेवं सत्येकस्य शब्दस्यानेकार्थताऽऽश्रिता भवति । न चैष न्याय्यः[4]। उच्यते । सत्यमेवम् । अगत्याऽऽश्रीयते । यद्यगत्याऽऽश्रीयते[5], सत्यां गतौ नाऽऽश्रयितव्या । अस्ति त्वियं गतिः, यत्त्रित्वं बहुवचनस्यार्थः स्यात् । तद्योगाच्चतुरादिष्वपि वर्तते । सर्वेषु तेषु त्रित्वमस्तीति ।

नैतद्युक्तम् । यदि बहुवचनस्य त्रित्वमर्थः स्यात्ततश्चत्वारो ब्राह्मणा इति सामानाधिकरण्यं नोपपद्येत । ब्राह्मणा इत्यस्य त्रयोऽर्थः । चत्वार इत्यस्य चत्वारः । तयोः सामानाधिकरण्यं न प्राप्नोति । न हि भवति चत्वारस्त्रय इति । एवं सर्वत्र लक्षणया भविष्यति । यथा न्यग्रोधः क्षेत्र-

---

३७ ॥ ]

' वसन्ताय कपिञ्जलानालभेत ' इत्यत्र पूर्वः पक्षः । यथाऽक्षशब्दः साधारणवचनो विदेवनादिषु, एवं बहुवचनं साधारण्येन वर्तते त्रित्वादिषु ।

---

१ पितृयज्ञेऽसकृत—ग. । २ आलभेत—मु. । ३ प्रयोगाच्च—ग. । ४ न्यायः—क. ख. ग. । ५ यद्यसत्यां गतावाश्रीयते—क. ख.

मिति । त्रित्वं हि चतुष्टादीनि साहचर्याच्छक्नोति लक्षयितुम् । सिध्यति । लक्षणा त्वाश्रिता भवति । किं क्रियताम्, अगत्याऽऽश्रीयते । सत्यां गतौ नाऽऽश्रयितव्या । अस्ति चेयं गतिः, यद्बहुत्वं बहुवचनस्यार्थः स्यात् । सर्वेऽपि ते बहव इति श्रुत्यैव सामानाधिकरण्यम् । यदि बहुत्वं विज्ञायेत, किं तद्बहुत्वमिति उच्यते । बहुत्वं—वृद्धिः, उपचयः, आधिक्यमित्यर्थः । कथं कृत्वा । बृंहतिरयं वृद्ध्यर्थः । तस्यौणादिक उकारः प्रत्ययः, बृंहेर्नलोपश्चेति । तस्य रूपं बह्विति । बहु—वृद्धमधिकमित्यर्थः । सर्वे चैते त्र्यादयोऽधिकाः । तस्मात्सर्वे बहुशब्दवाच्याः ।

नन्वापेक्षिकमेतद्बह्वधिकमिति । यदेव हि बहु तदेवान्यापेक्षयाऽबहु भवति । सत्यमेवम् । यत्तु यदपेक्ष्य बहु न तत्तदेवापेक्ष्याबहु । तद्यथा, उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा इत्युच्यते । न च ततोऽन्ये उत्तरा देशा न सन्ति । अथ च नियतापेक्षत्वादुत्तरत्वं न जहाति । एवं त्रिप्रभृतयो द्वित्वमपेक्ष्य बहुत्वं लभन्ते । न च ते ततः कदाचिदप्यबहवः । कथं पुनर्ज्ञायते द्वित्वापेक्षं त्रिप्रभृतीनां बहुत्वमिति । उच्यते । अपेक्षा तावत्समानजातीयेषु भवति । यथा बलवान् देवदत्त इति न हस्तिनं सिंहं वाऽपेक्ष्य भवति । किं तर्हि । समानजातीयान् पुरुषानपेक्ष्य । एवं संख्याऽपि संख्यामेवापेक्ष्य बहुत्वं लब्धुमर्हति । तत्रैकत्वं तावन्नापेक्षते । द्वयोर्बहुवचनस्यादर्शनात् । त्र्यादिषु च सर्वेषु दृश्यते । तेन विज्ञायते द्वित्वापेक्षमिति । तच्च बहुवचनेनोपलभ्यते । कुतः । तद्भावे भावात्, तदभावेऽभावात् । तद्भावे त्रित्वादिषु भवति । तदभावे च द्वयोरेकस्मिंश्च न भवति । एवं बहुवचनमिति समाख्याऽन्वर्था भवति । अभियुक्तवचनं च, बहुषु बहुवचनमिति । यदि त्रित्वं बहुवचनस्यार्थः स्यात् । त्रिषु वचनमित्येव ब्रूयात् । लाघवादसंदेहाच्च ।

---

अथवा यत्रैकत्वद्वित्वे न स्तस्तत्रायं वर्तते । एतस्मिन्पक्षे सामान्यवचनोऽयम् ।

---

१ त्वाश्रीयते—ग. । २ विज्ञायते—क. ख. । ३ मित्युच्यते—क. ख. । ४ न तदेव—क. ख. । ५ ते कदाचिदबहवः—क. ख. । ६ अपेक्ष्यते—ग. । ७ वाऽभावात्—ग. । ८ पा० सू० (१—४—२१) । ९ तद्ब्रूयात्—क. ख. । १० सामान्यवचन इति—पूर्वस्मिन् पक्षे बहुवचनस्य मानार्थत्वापत्तेस्तत्परिहारार्थं द्वित्वाधिक्यरूपं सामान्यं निमित्तीकृत्य द्वित्वाधिकसंख्यायामेव शक्त्यङ्गीकारो युक्त इति भावः ।

तस्माद्बुद्धित्वमपेक्ष्यैते बहवः । अतोऽवस्थितं त्र्यादीनां बहुत्वम् । एवं च सति नैकः शब्दोऽनेकार्थो भवति । सर्वेषां च बहुत्वान्न कश्चिल्लक्षणया प्रयोगः ।

अथोच्यते । त्रिषु निरुपपदं प्रयुज्यते । चतुरादिषु तु सोपपदम् । चत्वारो ब्राह्मणा इति । तच्च मिथ्या । त्रिष्वपि सोपपदं प्रयुज्यते । यथा, त्रयो लोकास्त्रयो वेदा इति । यदि च निरुपपदं त्रित्वं प्रत्याययेत्ततो, वसन्ताय कपिञ्जलानित्युक्ते विचार एवायं न प्रवर्तेत । यथाऽत्रैव न विचार्यते—किं कपिञ्जला आलब्धव्या उत मयूराः, कपोता वेति । [1]तस्य हेतोः । यतः कपिञ्जलशब्दस्य न मयूराः कपोता वा वाच्याः । इहापि यदि बहुवचनस्य त्रित्वमेव वाच्यं स्यान्नेतराः संख्याः, पूर्ववद्विचार एवायं न स्यात् ॥ ३८ ॥

दृष्टः प्रयोग इति चेत् ॥ ३९ ॥

अथोच्येत । दृष्टो बहुवचनस्य प्रयोगश्चतुरादिषु, चत्वारो ब्राह्मणा इति । ततो विचार इति ॥ ३९ ॥

[2]तथेह ॥ ४० ॥

इहापि कपिञ्जलशब्दस्य दृष्टः प्रयोगः कपोते मयूरे च । महान् कपोत उच्यते कपिञ्जलोऽयं न कपोत इति । तथाऽल्पो मयूरः, कपिञ्जलोऽयं न मयूर इति ॥ ४० ॥

भक्त्येति चेत् ॥ ४१ ॥

आह । भक्त्या तत्र कपिञ्जलशब्दः प्रयुज्यते । न च [3]भाक्ते प्रयोगे शब्दार्थशङ्का [4]भवति ॥ ४१ ॥

तथेतरस्मिन् ॥ ४२ ॥

इतरस्मिन्नपि चत्वारो ब्राह्मणा इति लक्षणया प्रयुज्यत इत्युक्तम् । न च लक्षणाप्रयोगे शब्दार्थशङ्का भवति । अपि च प्रातिपदिकार्थस्य या संख्या सा वचनेनाभिधीयते । यथा ब्राह्मणा इति । प्रातिपदिकार्थ एव वा, यथा द्वावेक इति । न च त्रित्वं प्रातिपदिकस्यार्थः, न

---

सिद्धान्तेऽप्ययमेव शब्दार्थो न व्यावर्तते ॥ ३८ ॥ [ ३९ ॥ ४० ॥ ४१ ॥

---

१ कस्य—क. ख. । २ इदं च सूत्रं मुद्रितपुस्तकेषु कुत्राप्यप्रकाशितमपि श्रीसंज्ञकेऽस्मत्पुस्तकेभात्प्रकाशितं ज्ञेयम् । ३ भक्ति—ख. । ४ भवतीति—ग. ।

तत्संख्या इति । तस्माच्चत्वार इति बहुवचनं न प्राप्नोति । अथो- च्यते । अस्ति चतुर्ष्ववयवभूतं त्रित्वं, तदपेक्षं बहुवचनमिति । द्वित्व- मपि तत्रास्ति, एकत्वं च । काममनेनैव हेतुना द्विवचनमेकवचनं चो- त्पद्येत । तस्मान्न त्रित्वयोगाच्चतुरादिषु बहुवचनप्रयोगः । बहुत्वादेव तेषां बहुवचनम् । अतः सर्वे त्र्यादयः परार्धपर्यन्ताः बहुवचन- स्यार्थः । सर्वे चेदर्थः, कपिञ्जलानालभेत, इति सर्वे प्राप्यन्ते । तस्मा- द्विकल्पः ॥ ४२ ॥

**प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४३ ॥ सि०**

प्रथमं वा बहुत्वं त्रित्वं नियम्येत । किं कारणम् । न हि कश्चि- च्चतुर उपाददानो न त्रीनुपादत्ते । यत्कारणम् । अनुगतास्त्रयश्चतुर्षु । त्रिषु चोपात्तेषु कृतः शब्दार्थः । बहूनालभेतेति श्रुतम् । आलभ्यमानाश्च बहवः । एवं सति कारणादतिक्रमः स्यात् । यदि च यथाश्रुतानुपा- दाने किंचिदन्यत्कारणं त्रित्वातिक्रमे स्यात्ततोऽतिक्रमः । न तदस्ति । तस्मात्त्रित्वं नियम्येत । ननु फलभूयस्त्वं कारणं भविष्यतीति । नैत- दस्ति । यत्र बहवः कल्पाः श्रूयन्ते, तेषां कश्चिल्लघुः कश्चिद् गुरुः । तत्र गुरोः कल्पस्यानुष्ठानाम्नानसामर्थ्यात्तदनुष्ठानात्फलभूयस्त्वमनुमी- यते । यथा, एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति । इह तु एक एव कल्पो बहूनामालम्भः । स त्रिभिश्चतुरादिभिस्तुल्यः । अतस्तत्र यो लघुमुत्सृज्य गुरुकल्पमातिष्ठेत तस्य फलभूयस्त्वं न भवि- तुमर्हति ॥ ४३ ॥

**श्रुत्यर्थाविशेषात् ॥ ४४ ॥**

---

४२ ॥ ]

अनेन तु नियमः । प्रकृतिरियं लोके । यथा न्यग्रोधतले स्थातव्यमिति प्रथम एव न्यग्रोधेऽवतिष्ठते, एवमिहापि ॥ ४३ ॥

---

१ ताः संख्या इति—क. । २ अनेनैव द्विवचनं—क. ख. मु. । ३ अतिक्रम्य वर्तते-ग. । ४ अतिष्ठते—ग. । ५ इदं च सूत्रं श्रीसंज्ञके केवलसूत्रपाठे, शास्त्रदीपिकादिमुद्रितपुस्तकेषु च नोप- लभ्यते । अतो भाष्यकारवचनमेवैतत्स्यादिति भाति । ६ वक्ष्यमाणेन तु न्यायेन बहुवचनस्थले त्रित्वनियमः सिध्यतीति सिद्धान्तमाह—अनेन त्विति । ७ प्रकृतिरियम्—स्वभावोऽयं लोके, यदसति कारणे प्रथमानियम इत्यर्थः । ८ एवमिहापीति—अयं भावः । यद्यपि द्व्यधिकसंख्यैव बहुवचनस्यार्थः, तथाऽपि चतुरादिग्रहणे त्रिग्रहणस्याऽऽवश्यकत्वात्प्रथमातिक्रमे कारणाभावेन त्रिभिरेव शास्त्रार्थोपपत्तेर्नाधिकग्रहणं प्रमाणवदिति ।

यथा, पशुमालभेतेति श्रुते यो महान्तं महार्घं वा पशुमालभेत, न तस्य फलभूयस्त्वं भवति । यस्तु मांसीयन् शिष्टमतिक्रामेत्स यदि तावद्वैदिकीष्वपि हिंसासु प्रत्यवायस्ततः प्रत्यवेयात् । अथाप्रत्यवायस्तथाऽपि शिष्टविगर्हणं च लभेत । कृते श्रुत्यर्थे मांसीयन् पशून् हन्तीति । तस्मात्त्रयः कपिञ्जला आलब्धव्याः ॥ ४४ ॥

तथा चान्यार्थदर्शनम् ॥ ४५ ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति, यथा न्याय उपदिष्टः । यथा, कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः, तेषामैन्द्राग्नो दशम इति । यदि च त्रय एते त्रिका एवं नियोगत ऐन्द्राग्नो दशमः संपद्यते । इतरथा पाक्षिकः स्यात् । तस्मादपि त्रित्वनियमः ॥ ४५ ॥

प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४६ ॥

प्रकृत्याऽग्नीषोमीयेणैकत्वं प्राप्यते तस्याऽऽसत्तिर्भविष्यति त्रित्व उपादीयमाने । इतरथा विप्रकर्षः स्यात् । इदं चापि लिङ्गम् । गृहमेधीये श्रूयते, ओदनानुद्धरतीति । तत्र मध्यमस्येति त्रयाणां निरुपपदं भवति । अन्यत्र सोपपदं, पञ्चानां मध्यमः, अष्टानां मध्यम इति ॥ ४६ ॥

(उत्तरागोदोहाधिकरणम् ॥ ९ ॥)

[९] उत्तरासु न यावत्स्वमपूर्वत्वात् ॥ ४७ ॥ पू०

सांनाय्ये दोहनं प्रकृत्य श्रूयते, वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्योत्तरा (दोहयतीति । किमयं विधिरनुवाद इति । किं प्राप्तम् । अपूर्वार्थत्वाद्विधिरिति । अनुवादो ह्यनर्थकः स्यादिति प्राप्त उच्यते ॥ ४७ ॥)

[ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

१ त्रित्वं—ग. । २ वैदिकीषु—क. ख. । ३ तस्मात्त्रित्व—क. ख. । ४ सांनाय्य—ग. । ५ (दोहयतीति । तत्र विचार्यते, किं तिस्रो दोहयितव्या उत यावत्स्वमिति । कथं संदेहः । उत्तरासां विध्यनुवादाशङ्कानाम् । किं प्राप्तम् । तिस्रो दोहयितव्या इति । बहुवचनश्रुतेः । तिसृषु बहुत्वलाभात् । तदुक्तं—प्रथमं वा नियम्येतेति । यो हि चतस्रो दोहयति दोहयत्यसौ तिस्रः । तदनुगमात् । तिसृषु बहुत्वयोगात्कृते च श्रुत्यर्थे चतुरादिषु कारणं नास्ति । न च फलभूयस्त्वं कारणं युक्तम् । अपि च, उत्तरा दोहयतीति श्रुतिः । विसृष्टवागिति वाक्यं स्यात् । तस्मात्तिस्रो दोहयितव्या इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः ॥ ४७ ॥ ) ग. ।

यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ॥ ४८ ॥ सि०

अनुवादः स्यात् । नायं विधिः, उत्तरा दोहयतीति । अन्योऽत्र विधिः, विसृष्टवागनन्वारभ्येति । यद्येषोऽपि विधिः स्याद्वाक्यं भिद्येत । उत्तरा दोहयति, ताश्चानन्वालभ्येति ॥ ४८ ॥

अथ कुतः प्राप्तेऽनुवादः—

साकल्यविधानात् ॥ ४९ ॥

साकल्यमत्र विधीयते गवां दोग्धव्यानाम् । नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्, कुमाराश्च न पयो लभेरन्निति । ननु कुमाराणां पयोदानप्रतिषेधोऽयम् । न हि पयःप्रतिषेधे किंचिद् दृष्टमस्ति । अदृष्टं कल्पयितव्यम् । नन्वितरत्रापि लक्षणाऽऽश्रयणीया । बाढम्। अदृष्टार्थाच्छब्दवृत्तिर्लघीयसीति । तस्मात्साकल्यविधिर्गवां पयःप्रतिषेधेनायं लक्षणया । ततः प्राप्तेऽनुवादः ॥ ४९ ॥

बह्वर्थत्वाच्च ॥ ५० ॥

बहुदुग्धीन्द्राय देवेभ्यो हविरिति च मन्त्रस्य सर्वासु दुह्यमानास्वपाक्षिकत्वं भविष्यति । बहुत्वं च शक्त्यपेक्षम् ॥ ५० ॥

अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५१ ॥

अग्निहोत्रे च श्रूयते, नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्, यथाऽन्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात्तादृक् तत्स्यात्, यवाग्वा जुहुयादिति । सर्वस्य पयसः सांनाय्यार्थतां दर्शयति ॥५१॥

तथा पयःप्रतिषेधः कुमाराणाम् ॥ ५२ ॥

इति व्याख्यातम् ॥ ५२ ॥

सर्वप्रापिणाऽपि लिङ्गेन संयुज्य देवताभिसंयोगात् ॥ ५३ ॥

वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुराऽऽप्याययन्ते । अथैतर्हि देवेभ्य एवैता आप्याययन्तीति, सर्वप्राप्तेरेतल्लिङ्गम् । कथम् । या वत्सेभ्यो मनुष्येभ्यश्च पुराऽऽप्याययन्ते ता एतर्हि देवेभ्य आप्यायय-

४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

१ आलभ्य–क. मु. । २ अदृष्टार्थाद्दृष्टार्था लक्षणा लघीयसीति–ग. । ३ संयुज्यते—मु. ।

न्तीत्याह । सर्वांश्च ता वत्सेभ्यश्च मनुष्येभ्यश्चाऽऽप्यायन्ते । तस्मात्सर्वप्राप्तेरेतल्लिङ्गम् । अतो यावत्स्वमुत्तरासु दोहनं स्यात् ॥ ५३ ॥

( दर्शपूर्णमासादिषु तन्त्रेणाऽऽघाराद्यङ्गानुष्ठानाधिकरणम् ॥ १० ॥ )

## [ १० ] प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५४ ॥ पू०

दर्शपूर्णमासयोः प्रधानान्याग्नेयादीनि । तेषामङ्गान्याघारादीनि । तेषु चिन्त्यते । किं तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः, अथवा सर्वेषां तन्त्रेणेति । अथ तत्र किं वृत्तं, क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यादिति । तत्र कृत्स्नौ दर्शपूर्णमासावुद्दिश्य कथा कृता । इह तु तत्तत्प्रधानं प्रति चिन्त्यते । किं प्राप्तम् । प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ।

अङ्गानां प्रयोगे कर्मभेदः स्यात्—क्रियाभेदः । तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः । कुतः । प्रधानकर्मार्थत्वात् । प्रधानार्थत्वादित्यर्थः । प्रधानार्थेन ह्यङ्गान्युपदिश्यन्ते । अङ्गवन्ति प्रधानानि कथं स्युरिति । अङ्गसंबन्धे च प्रधानानां सहत्वं न विवक्ष्यते । न हि तत्र प्रधानानि विधीयन्ते । किं तर्हि । अङ्गानि । न चाविधीयमानस्यार्थस्य गुणो विवक्षितो भवति । यथा, ग्रहं संमार्ष्टीत्येकत्वम् । एवं चेदेकैकस्य प्रधानस्याङ्गैः संबन्धः कर्तव्यः । तानि यदि सकृत्क्रियेरन्, न विभागेन संबध्येरन् । यथा प्रायणीयोदयनीययोरेकादशिन्याः समस्तैश्च संबन्धः कर्तव्य इत्युक्तं, विधेस्त्वेकश्रुतित्वादित्यत्र । तस्मात्प्रतिप्रधानमङ्गभेदः ॥ ५४ ॥

---

५३ ॥]

भावनयेतिकर्तव्यता करणमनुगृह्णती संबध्यत इत्युक्तम् । इदानीं तु विचार्यते, किमाग्नेयादीनां तन्त्रेणेतिकर्तव्यतोपकरोत्युत भेदेनेति । भेदेनेति ब्रूमः । कथम् । आग्नेयादीनां सर्वेषामितिकर्तव्यतोपकरोति । उपकारवेलायां च प्रधानभूतानां तेषां साहित्यमविवक्षितम् । तस्मादेकैकस्येति ॥ ५४ ॥

---

१ ( अ० ११ पा० १ अ० ७ सू० २९ ) । १ क्रतुवद्वा—ग. । २ उदवसानीययोरेकादशिन्यां—ख. ग. । ३ ( अ० ११ पा० १ अ० २ सू० १६ ) ।

## क्रमकोपश्च यौगपद्ये स्यात् ॥ ५५ ॥

प्रधानानि च क्रमवन्ति । तानि च यथाक्रमं साङ्गानि कर्तव्यानि । तत्र यदि तन्त्रमङ्गानि स्युः, ततोऽकृत्वाऽऽग्नेयं साङ्गमग्नीषोमीयः प्रक्रान्तः स्यात् । तथा च प्रधानानां क्रमकोपः स्यात् । अथ तु भेदस्ततः साङ्गमाग्नेयमपवृज्याग्नीषोमीयः साङ्गः प्रक्रान्तः क्रियत इति नास्ति क्रमकोपः । अपर आह । यदि तन्त्रं भवेयुरङ्गानि ततो यावत्तनूनपादाग्नेयस्योपकरोति तावत्समिधाऽग्नीषोमीयस्योपकर्तव्यम् । स एष उपकारक्रमकोपः । अपि चाङ्गारापोहनादीनि संस्पर्शादीनि प्रतिप्रधानं भिद्यन्ते । तैश्चाऽऽघारादीनामत्रैलक्षण्यं भविष्यति ॥ ५५ ॥

## तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् ॥ ५६ ॥ सि०

तुशब्दः पक्षान्तरं परिजग्राह । न चैष पक्षः श्रेयान्, भेद इति । किं तर्हि । यौगपद्यं, सकृत्प्रयोगः स्यात् । सकृदेव प्रयुक्तान्यङ्गानि सर्वैः प्रधानैर्युगपत्संबध्यन्ते । तुल्यानामेकशब्दोपदिष्टानां चेदमर्थं प्रति विशेषाग्रहणात् । इमानि कर्तृतो देशतः कालतश्च तुल्यानि । दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः । समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति । प्रधानैश्च सहाङ्गानामेकदेशकालकर्तृकत्वं वक्ष्यति, अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्नित्यत्र । एकेन च शब्देन प्रधानानि फलं प्रत्युपदिष्टानि, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । किमतः । अतस्तेषां फले संभूयकारित्वम् । तेन स्वर्गकामस्य सर्वेषां युगपच्चिकीर्षा, नैकशः । सर्वचिकीर्षया त्वाघारादीनां क्रियमाणानां तुल्यकर्त्रादीनां न गृह्यते विशेषः, कस्यैतानि, आग्नेयस्याग्नीषोमीयस्य वेति । सर्वेषां च युज्यन्ते । तस्मात्सर्वार्थानि भवन्ति । तस्मादनावृत्तिः ॥ ५६ ॥

---

११ ॥ ]

एकदेशकालकर्तृकत्वं वक्ष्यत्यङ्गप्रधानानाम् । तेनागृह्यमाणविशेषत्वात्सकृदेव प्रयुक्तोपकरोतीति । तस्मात्तन्त्रमङ्गानामनुष्ठानम् ॥ ५६ ॥

---

१ यौगपद्यात्स्यात्–सु० । २ (अ० ११ पा० २ अ० १ सू० ८) ।

## ऐकार्थ्यादव्यवायः स्यात् ॥ ५७ ॥

यच्च, क्रमकोपश्च यौगपद्ये स्यादिति । तत्र ब्रूमः । ऐकार्थ्यादव्यवायः स्यात् । न क्रमकोपः । कुतः । ऐकार्थ्यात् । संभूयकारीण्येतानीत्युक्तम् । तेषां सह क्रिया, नैकशः । न हि तत्रैकेन कृतेन कश्चिदर्थः । एकसंबन्धक्रियायामानुपूर्व्यं स्यात् । तस्मान्न तेषां प्रयोगे क्रमः । कुतः क्रमकोप इति । यच्चोपकारे क्रमकोप इति । तत्रापि नाऽऽघारः कृतमात्र एव प्रधानेपूपकरोति । यत्कारणम् । तस्मिन् काले प्रधानान्येव न सन्ति । यदा तु सर्वाण्यङ्गानि कृतानि तदा तज्जन्यापूर्वाणि संभूय प्रधानेपूपकुर्वन्ति । अङ्गानामपि हि संभूयकारित्वमुक्तम्, अथेहैकार्थ्यादेककर्म्यमिति । तस्मादुपकारेऽपि नास्ति क्रमकोपः ॥ ५७ ॥

## तथा चान्यार्थदर्शनं कामुकायनः ॥ ५८ ॥

तथा चान्यार्थदर्शनं भवति, यथा न्याय उपदिष्ट इति कामुकायन आचार्यो मन्यते स्म । किं पुनस्तत् । चतुर्दश्यां पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश्याममावास्यायामिति । यद्याहुतिः स्यान्न त्रयोदश चतुर्दश वा व्यवतिष्ठेरन् ॥ ५८ ॥

यच्च संस्पर्शवदारादुपकारिणामप्यावृत्तिरस्त्विति । तत्र ब्रूमः—

## तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५९ ॥

स हि न्यायः संभूयकारिणां सहक्रियेति । तन्न्यायेन सर्वत्रैव सहक्रिया । अशक्तेस्तु धर्मसंस्पर्शेष्वानुपूर्व्यं स्यात्, भेदेन क्रिया । न शक्यत एकस्याङ्गारापोहनेन सर्वेषां पाकः कर्तुम् । न चैकस्मिन् पुरोडाशे प्रथिते सर्वे प्रथिता भवन्ति । संस्कारस्य तदर्थत्वात् । संस्कारोऽयं पाकार्थो विधीयते । तत एवं प्रत्यक्षोपकारिणः प्रतिप्रधानमावृत्तिः स्यात् । अन्यथा याग एव न संवर्तेत ॥ ५९ ॥

---

[ ५७ ॥ ५८ ॥ ५९ ॥

## असंसृष्टोऽपि तादर्थ्यात् ॥ ६० ॥

असंसृष्टोऽप्याघारादिः प्रतिप्रधानमावर्तते। कुतः। तादर्थ्यात्। यस्य समीपे कृतस्तदर्थ इति गम्यते विशेषः। आघारादीन्याज्यभागान्तान्याग्नेयस्य, स्विष्टकृदादीन्यग्नीषोमीयस्येति गृह्यमाणे विशेषे भेदः। तस्मादुपांशुयाजादीनां समीपे प्रागाघारादीनि, ऊर्ध्वं स्विष्टकृदादीनि कर्तव्यानि। एवं च संस्पर्शिभिरितरेषामवैलक्षण्यं भविष्यति ॥ ६० ॥

## विभवाद्वा प्रदीपवत् ॥ ६१ ॥

यदुक्तं यस्य संनिधौ प्रयुक्तानि तस्येमानीति गृह्यते विशेषः। तस्मादावृत्तिरिति। नैतद्युक्तम्। विभवात्। कुतः। विभविष्यन्त्येतान्येकस्यापि संनिधौ क्रियमाणानि[1] सर्वेषामुपकर्तुम्। प्रदीपवत्। तद्यथा—प्रदीप एकस्मिन् प्रदेशे भुञ्जानानां ब्राह्मणानामेकस्य संनिधौ प्रज्वलितः सर्वेषामुपकारं करोतीति[2]। तस्मादनावृत्तिः ॥ ६१ ॥

## अर्थात्तु लोके विधितः[3] प्रतिप्रधानं स्यात् ॥ ६२ ॥

उपवर्णनापरिहारः पूर्वं न कृत इति स तावद्वर्ण्यते। यदुपवर्णितं प्रदीपवदिति। तदयुक्तम्। अर्थाल्लोके प्रदीपस्य सकृदसकृद्वा क्रिया। यदि सकृत्कृतः सर्वं[4] प्रकाशयति सकृत्क्रियते, अथ न प्रकाशयति ततोऽसकृत्। ततश्चास्य प्रत्यक्षसामर्थ्यम्। अथेह विधित उपकारोऽनुपकारो वा गम्यते, न प्रत्यक्षेण। न चास्ति विधानमस्योपकरोतीति। संनिधानाद्विशेषग्रहणं गम्यते[5], यस्य संनिधौ प्रयुक्तस्तस्योपकरोतीति। तस्मादावृत्तिः ॥ ६२ ॥

## सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६३ ॥

अथ यदुक्तं सकृदिज्यां कामुकायन आचार्यो मेने, चतुर्दश त्रयोदशेत्याहुतिपरिमाणस्य विरोधादिति[6]। तस्य कः परिहारः। आभाषान्तं सूत्रम् ॥ ६३ ॥

१० ॥ ११ ॥ १२ ॥ १३ ॥

१ क्रियमाणः—मु.। २ करोति, तद्वत्—ग.। ३ विधिः—क. ख, ग.। ४ सर्वान् ग.
५ मन्यते। न चैवं चतु—क. ख.। ६ विरोधः स्यात्—क. ख.।

विधेस्त्वितरार्थत्वादसकृदिज्या श्रुतिव्यतिक्रमः स्यात् ॥ ६४ ॥

विधीयत इत्यङ्गं विधिशब्देनोच्यते । अङ्गस्येतरार्थत्वात् । यदे- तत्स्थितं यत्संनिधौ यत्कृतं तदर्थमेव तदिति, तदाऽऽवृत्त्याऽङ्गानां प्रयोगः। तत्र चतुर्दश त्रयोदशेत्याहुतिसंख्या नोपपद्यते । आहुतिविषयस्तु चतुर्दश त्रयोदश । तेषां लक्षणया वचनमुपपद्यते । चतुर्दश पौर्णमा- स्यामाहुतिविषयः । त्रयोदशामावास्यायामिति । नैतत्संख्याविधानम् । प्रचयेनैव संख्यायाः प्राप्तत्वात् । अनुवादस्त्वयम् । अनुवादश्च लक्ष- णयोपपद्यते । विदितस्य स भवति । आहुतिविधीनां चेयं संख्या विहिता, नाऽऽहुतीनाम् । तस्मात्तेषामनुवादः ॥ ६४ ॥

विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥६५॥

तन्त्रेण प्रयोगं बादरायणो मन्यते स्म । कुतः । प्रकरणाविभागात् । सर्वेषां प्रधानानामविभक्ता प्रक्रिया, संभूयकारित्वादित्युक्तम् । तत्रैदमर्थ्यं प्रति न गृह्यते विशेषः । यत्तु संनिधिप्रयोगेण विशेषग्रहण- मुक्तं, तदयुक्तम् । किं कारणम् । विशेषो यः संनिधिक्रमः स प्रकर- णेन बाध्यते । विधिवत् । यथा विधौ तुल्यत्वात्प्रकरणस्य सर्वार्था- न्यङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि । क्रमस्य प्रकरणेन बाधितत्वात् । अपि चैकेन संनिधानमविशेषको हेतुः । यदाऽपि सर्वार्थाः, तदाऽप्येकस्य कस्यचिदवश्यं संनिधौ कर्तव्याः । तस्मान्न विशेषः संनिधेरेकान्ततः शक्योऽवधारयितुम् । अतस्तन्त्रेण प्रयोगः । बादरा- यणग्रहणं कीर्त्यर्थं, नैकीयमतार्थम् ॥ ६५ ॥

---

६४ ॥ ६५ ॥

---

१ सकृदिज्या श्रुति—श्री. क. ख. । २ 'अपि चैकेन संनिधानमविशेषको हेतुः' इत्येवं ग्रन्थः काशीमुद्रितपुस्तके सूत्रपाठक्रमे संयोज्य प्रकाशितः । परंतु श्रीसंज्ञके पुस्तके शास्त्रदीपि- कादिमुद्रितपुस्तकेषु चानुपलम्भाद्भाष्यग्रन्थ एवायं स्यादिति तथैव प्रकाशितः । यदि सूत्रमेवैत- त्स्यात्तदा पूर्वसूत्रस्थबादरायणपदव्याख्यानमेतत्सूत्रव्याख्यानान्ते क्रियमाणमसंगतं स्यात् । अतो भाष्यमेवैतदिति भाति । तदत्र सुधियः सूक्तमालोचयन्तु । ३ तन्त्रकीर्त्यर्थं—ग. ।

क्वचिद्विधानान्नेति चेत् ॥ ६६ ॥

नैतद्युक्तं, सकृत्क्रियेति । कुतः । क्वचित्सहत्वमाहत्य विधीयते । सहावघ्नन्ति, सह पिंषन्ति । तदनावृत्तौ सर्वतः प्राप्तायां परिसंख्यार्थं भवति । इहैव सहत्वं नान्यत्रेत्युच्यते ॥ ६६ ॥

न विधेश्चोदितत्वात् ॥ ६७ ॥

न तत्र परिसंख्या युज्यते । प्राप्तस्य पुनर्वचनं परिसंख्यार्थं भवति । न चेह सहत्वं प्राप्तम् । कुतः । भेदेन निर्वापस्य चोदितत्वात् । आग्नेयाग्नीषोमीययोर्भेदेन निर्वापस्तूक्तः । तयोर्भेदेनैवावहननपेषणे प्राप्नुतः । तत्रावश्यं विधेयं सहत्वम् । तस्मान्न क्वचित्सहत्वविधाना-दन्यत्र भेदेन क्रिया विज्ञायेतेति ॥ ६७ ॥

( आग्नेयद्वयस्याऽऽवृत्त्या प्रदानानुष्ठानाधिकरणम् ॥ ११ ॥ )

[११] व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणवि-
शेषाणाम् ॥ ६८ ॥ पू०

क्वचिच्छ्रूयते, आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान इति । तत्र विचार्यते । किं कृष्णग्रीवस्य प्रथमस्य तृतीयस्य च सह प्रदानं कर्तव्यम्, अथवा भेदेनेति । किं प्राप्तम् । व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् । व्याख्यातं प्रयोगे यौगपद्यमिति । तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्यादिति । इह तु कृष्णग्रीवयोरेकदेवतत्वात्सह प्रयोगे क्रियमाणे न गृह्यते विशेषः । सहक्रिया चैकफलत्वात्प्राप्ता । तस्मात्सहप्रदानम् ॥ ६८ ॥

भेदस्तु कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां
विधिः प्रधानकालत्वात् ॥ ६९ ॥ सि०

भेदस्तु प्रदानस्य युक्तो न तन्त्रता । कुतः । कालभेदात् । कथं कालभेदः । चोदनाव्यवायात् । सौम्यचोदनया व्यवहिते कृष्णग्रीव-चोदने । तत्र पाठक्रमादेकस्य पुरस्तात्सौम्यस्य प्रयोगः प्राप्तः, एक-

---

६६ ॥ ६७ ॥ ६८ ॥

१ ( अ० ११ पा० १ अ० १० सू० ५६ ) । २ व्यवेते—ग० ।

स्योत्तरत्र । तयोर्यदि सह प्रदानं क्रियेत क्रम उपरुध्येतान्यतरस्य । पुरस्तात्क्रियायामुत्तरस्य उपरिष्टात्पूर्वस्य । तस्माद्भेदेन प्रयोगः । ६९॥

तथा चान्यार्थदर्शनम् ॥ ७० ॥

अभितः सौम्यमाग्नेयौ भवत इति ॥ ७० ॥

विधिरिति चेन्न वर्तमानापदेशात् ॥ ७१ ॥

अथ विध्यभिप्रायं कल्प्येत । श्रुत्यर्थमुत्सृज्य लक्षणार्थः परिगृहीतः स्यात् । तस्मात्प्रदानभेदः ॥ ७१ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्य एकादशाध्यायस्य प्रथमः पादः ।

---

अथैकादशाध्यायस्य द्वितीयः पादः ।

---

( आग्नेयादिप्रधानानामेकदेशकालकर्तृकत्वाधिकरणम् ॥ १ ॥ )

[ १ ] एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥ सि०

दर्शपूर्णमासयोराग्नेयादीनि प्रधानानि । तत्र देशकालकर्तारः, समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत, दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विज इति । तथा चातुर्मास्ये, प्राचीनप्रवणे वैश्वदेवेन यजेत, वसन्ते वैश्वदेवेन यजेत, चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति । तत्र विचार्यते, किमाग्नेयादीनां प्रधानानां तन्त्रं देशकालकर्तारः, अथवा भेदेनेति[1] । तत एता-

---

६९ ॥ ७० ॥ ७१ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामेकादशाध्यायस्य प्रथमः पादः ॥

---

किमाग्नेयोऽग्नीषोमीयादिनिरपेक्षो देशादिभिः संबध्यत उताग्नीषोमीयादिसहित इति । अत्र पूर्वः[2] पक्षः । आग्नेयादयः प्रज्ञाताः[3] । ताननूद्य देशादयोऽप्रज्ञाता विधीयन्ते[4] ।

1 भेद एवेति–ख० मु० । २ पूर्वपक्षः—ध. । ३ प्रज्ञाता इति—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिभिरुत्पत्तिवाक्यैरिति शेषः । ४ विधीयन्त इति—'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादिभिर्वाक्यैरिति शेषः ।

यत्नः परीक्ष्यम् । किं चोदनाविधिशेषा देशादयोऽपि, यदाग्नेयोऽष्टाकपाल इत्येवमादय आग्नेयादिचोदनाविषयः, तेषामिमे समादिविषयः शेषाः । आग्नेयोऽष्टाकपालः समे भवति, एवं सर्वत्र । अथवा प्रयोगाङ्गं देशादयः । स एषामाग्नेयादीनां प्रयोगः फलसाधनार्थस्तदङ्गमिति । किंचातः । यदि प्रयोगाङ्गं ततस्तन्त्रम् । अथ चोदनाविधिशेषास्ततो भेदेनेति । किं प्राप्तम् । एकदेशकालकर्तृत्वं मुख्यानां तन्त्रमित्येषा प्रतिज्ञा । तत एवं तावद्वर्णयन्ति, प्रयोगाङ्गं देशादय इति । कुतः । न तावदृते देशकालकर्तृभ्यः प्रयोगो भवति । यच्च येन विना न भवति तत्तदङ्गमित्यवगम्यते । तस्मात्प्रयोगाङ्गं देशादयः । यदा

---

तेषां चोद्दिश्यमानानामितिकर्तव्यतया संबन्धः । तस्मिंश्चाऽऽग्नेयोऽग्नीषोमीयादिनिरपेक्ष इतिकर्तव्यतया संबध्यते । तस्माद्देशकालकर्तृवादितिकर्तव्यता चाग्नीषोमीयादिनिरपेक्षस्यैवाऽऽग्नेयस्य न्याय्येतीतिकर्तव्यताया आवृत्तिः ।

अत्र चोद्यते । यद्याग्नेयमन्वाधानादि ब्राह्मणतर्पणान्तं कृत्वाऽग्नीषोमीय आरभ्यते तदैतयोर्यः फलं प्रतीतरेतरयोगः सोऽत्यन्तं बाधितः स्यात् । यथा सौर्ये, आग्नेयेनेतरेतरयोगाशङ्का नास्ति, एवमिहापि प्रसज्यते । तस्माद्यदि तन्त्रेणेतिकर्तव्यता क्रियते, एवमितरेतरयोगः संपादितो भवति नान्यथा ।

उच्यते । इतरेतरयोगादयमर्थो लभ्यते । एकेनाप्यक्रियमाणेन यागेन फलं न प्राप्यते । तस्मादेकैकस्य क्रियमाणा कृत्स्नेतिकर्तव्यतेतरेतरयोगं न बाधते ।

सिद्धान्तस्तु—यद्यप्ययं कालः कारकविभक्तियुक्तः श्रूयते, तथाऽप्यनुपादेयः । अवश्यं च क्रियया सहास्य संबन्धः करणीयः । तस्मिंश्चानुपादेयं कालं प्रति यागा उपादीयन्ते । तस्मादितरेतरयोगादि विवक्षितम् । करणविभक्तिश्चेतिकर्तव्यतया विना नोपपद्यते । तस्मादितरेतरयुक्तास्त्रयो यागाः पौर्णमास्यां सेतिकर्तव्यताका विधीयन्ते । एवममावास्यायामपि । एवं च धात्वर्थोऽन्यत्र विहितो भवति । तत्र श्रुतिरनुगृहीता । इतरथा धातुः परार्थमुच्चार्येतेति । एवं देशेऽपि द्रष्टव्यम् ।

१ एतावत्तु—ख. । २ देशादयः—ख. । ३ एवं—ख. मु. । ४ वर्णयन्ति—ग. । ५ इतिकर्तव्यताया इति—अन्वाधानादिकाया अपीतिकर्तव्यताया इत्यर्थः । ६ तथा चाङ्गानामपि प्रधानकालत्वादि सिध्यतीत्याह—करणेत्यादिना । ७ श्रुतिरिति—पदश्रुतिरित्यर्थः । ८ परार्थमिति—कालविधानार्थमित्यर्थः ।

**प्रयोगाङ्गं तदा तन्त्रभावः। कस्मात्। एकशब्दोपदेशात्। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, इत्येकशब्दोपदेशादेकं फलम्। एकफलत्वात्सहप्रयोगः। तत्र न गृह्यते विशेषो देशादीनामैदमर्थ्यं प्रति।**

कर्तारस्तु सेतिकर्तव्यताके प्रयोगे विज्ञाते कथमेनं करिष्यतीत्येतस्यामवस्थायां यजमाने प्राप्ते वचनादध्वर्य्वादयो विधीयन्ते। तस्मात्प्रत्येकैकमितरेतरनिरपेक्षं करोति, तथा सति देशं प्रति विधीयमानानामितरेतरयोगो बाधितः स्यात्। कालेऽपि। अङ्गैर्विना करणविभक्तिर्बाधिता स्यात्। तस्माद्वचनात्तन्त्रता।

ननु 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनेन कालविधानं न क्रियते। उत्पत्तिवाक्येनाऽऽग्नेयादीनां कालस्य प्राप्तत्वात्। फलसंबन्धोऽपि न क्रियते। दर्शपूर्णमासवाक्येन प्राप्तत्वात्। अपि च फलसंबन्धाशङ्काऽपि नास्ति। फलाश्रवणात्।

उच्यते। एतेन वाक्येन विना, एकैकस्येतिकर्तव्यता काण्डमावर्तेत। सति त्वस्मिन्वाक्ये ये यागा उत्पन्नास्ते करणविभक्तिसंयुक्ताः फले विधीयन्ते। करणविभक्तिश्चेतिकर्तव्यतामन्तरेण न संभवति। उपादीयमानत्वात्साहित्यविवक्षा। तस्मात्प्रत्येकैकं कृत्स्नेतिकर्तव्यताकं क्रियेत यत्तत्साहित्यमवगतं तद्बाध्येत। तेनेतिकर्तव्यतां प्रति साहित्यं क्रियते। तस्मादनेन वाक्येनेतिकर्तव्यता तन्त्रेण भवतीत्यमर्थः क्रियते त्रयाणां यागानाम्।

अयं भवतोऽर्थो विवक्षितः। अयं च वाक्यान्तरेण लभ्यत एव। 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यनेन वाक्येनेतरेतरयुक्ताः सेतिकर्तव्यताका देशं प्रति विधीयन्ते। विधीयमानानां च साहित्यं विवक्षितम्। यदीतिकर्तव्यताऽऽवर्तेत, तत्र साहित्यमवगतं तद्बाध्येत। तस्मादस्मिन्वाक्ये सति 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनुवाद एव।

१ ननु देशकालयोरनुपादेयत्वात्तदुद्देशेनोपादीयमानानां यागानामितरेतरयोगस्य तन्त्राभिधानावगतस्य विवक्षितत्वेऽपि कर्तृणामुपादेयत्वाद्यागोद्देशेनैव कर्तृविधानादुद्दिश्यमानानां च यागानामितरेतरयोगस्याविवक्षितत्वात् 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इति कर्तृविधौ तृतीयाया अश्रवणाच्च कथं साङ्गानां सहितानां च कर्तृतन्त्रता सिध्यतीति चेत्तत्राऽऽह—कर्तारस्त्विति। २ प्रयोगे नियुज्यन्ते। क एनं—ष. पु.। ३ कथमिति—ससहायो निःसहायो वेत्यर्थः। ४ प्राप्त इति—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्' (अ० ३ पा० ७ अ० ८ सू० १८) अत्रत्यन्यायेनेति शेषः। ५ तन्त्रतेति—साङ्गसहितप्रधानानि प्रति देशादीनां तन्त्रतेत्यर्थः। ६ आवर्तेतेति—उत्पत्तिवाक्येषु प्रत्येकं कालश्रवणादिति शेषः। ७ चोदयति—अयमित्यादिना।

अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । तस्मात्तन्त्रं देशादयः ॥ १ ॥

**अविधिश्चेत्कर्मणांनाभिसंबन्धः प्रतीयेत तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानंभावः स्यात्॥ २ ॥ पू०**

तत्र केचित्तावद्वर्णयन्ति । प्रधानस्य पौर्णमासीकालोऽवगतः । अङ्गानामनवगमात्कालस्य पञ्चम्यामपि प्रयोगः प्राप्नोति । तस्मादनेनाङ्गानां कालनियमः क्रियत इति । तदयुक्तम् । कथम् । करणमनुगृह्णतीतिकर्तव्यतोपकरोतीत्युक्तम् । यस्मिंश्च काले करणं तस्मिन्नेवेतिकर्तव्यतेत्येतदप्युक्तम् । याँ च संनिपत्योपकारिकेतिकर्तव्यता या चाऽऽरादुपकारिका ते उभे अप्येकेन कथंभावेन संबध्येते । तत्र पौर्णमास्यां प्रधानं कुर्वता संनिपत्योपकारिकेतिकर्तव्यताऽवश्यं करणीया । येन प्रमाणेन संनिपत्योपकारिकां करोषि, तेनैवाऽऽरादुपकारिकामपि । न चेदृशः कश्चिन्न्यायः, येन प्रधानमात्रमेव कर्तव्यं पौर्णमास्यां स्यात् । तस्मादवाच्यमिदम् ।

नैतदेवम् । ‘ समे दर्शपूर्णमासाभ्यां यजेत ’ इत्यनेन षड्यागा इतरेतरयुक्ताः सेतिकर्तव्यताका देशं प्रति विधीयन्ते । तत्र षण्णामपि यागानां तन्त्रेणेतिकर्तव्यता प्राप्नोति, साहित्यस्य विवक्षितत्वात् । तस्माद्ये पौर्णमासीसंज्ञकास्तेषां पौर्णमास्यां क्रियमाणानामाज्यभागान्तानि करिष्यन्ते । एवममावास्यासंयुक्तानामनुयाजादीनि करिष्यन्ते । एवं तन्त्रेणाङ्गप्रयोगे प्राप्ते ‘ पौर्णमास्यां पौर्णमास्या यजेत ’ ‘ अमावास्यायाममावास्यया यजेत ’ इत्यनेनाङ्गानामावृत्तिः प्रतिपाद्यते ।

अपि च ‘ समे दर्शपूर्णमासाभ्यां यजेत ’ इत्यनेनेतरेतरयोगस्य विवक्षितत्वात्तन्त्रेणेतिकर्तव्यता प्राप्यते । तत्र पौर्णमास्यामारब्धं प्रधानममावास्याया समाप्यते । पौर्णमास्यमावास्ययोरन्तराले कुर्वन्नङ्गानि ‘ समे दर्शपूर्णमासाभ्यां यजेत ’ इत्यस्य न किंचिद्बाधते । न च फलवाक्यस्य । तस्मादनेन वचनेन ‘ पौर्णमास्यां पौर्णमास्या यजेत ’ इत्यनियमोऽङ्गानामपनीयते । नियतकालता चोच्यते । तस्मादनेनाङ्गानां कालविधिः क्रियते ॥ १ ॥

१ कर्मणामभि—ख. ग. मु. । २ प्रधानभावः—श्री. मु. । ३ किंच या च संनिपत्योपकारिका या च—च. ज. । ४ अप्यनेन—च. ज. मु. । ५ प्रकारेण—घ. मु. । ६ कुर्विति शेषः । समानकथंभावगृहीतत्वादिति हेतुपूरणम् । ७ कर्तव्यं स्यात्—च. ज. । कर्तव्यं पौर्णमासीसंयुक्तं स्यात्—घ. । ८ पौर्णमासीसंयुक्ताः—घ. । ९ बाध्यते—घ. ।

अविधिश्चेत्—यदि चोदनाविधिशेषो न स्याद्देशादिविधिस्ततः कर्मणामाग्नेयादीनां भेदेन देशादिभिरभिसंबन्धो न प्रतीयेत । चोदनाविधिशेषस्त्वयम् । किं कारणम् । इह, समे दर्शपूर्णमासाभ्यामित्येवमादिभिर्वाक्यैर्देशादयो विधीयन्ते । अप्राप्तत्वात् । ते चेद्विधीयन्ते, आग्नेयादीनां दर्शपूर्णमासशब्देनानुवाद एषितव्यः । अन्यथा, अनेकार्थविधानमेकस्मिन् वाक्ये भवतीति । अनुवादे च तेषां सहत्वं न विवक्ष्यते । विवक्ष्यमाणे वाक्यभेदो भवति । आग्नेयादीनां देशादयः, तेषां च सहितानामिति । कथं पुनः । समे दर्शपूर्णमासाभ्यामित्येवमादिभिर्वाक्यैराग्नेयादिषु देशादयो विधातुं शक्यन्ते । लक्षणार्थाभिसंयोगात् । लक्षणार्थेनाभिसंयोगो विज्ञायते । दर्शपूर्णमासशब्दः समुदायार्थोऽयम् । समुदायश्च समुदायिलक्षणार्थः शक्नोति साहचर्यात्समुदायिनो लक्षयितुम् । न न्वेवमपि लक्षणाऽश्रिता भवति । वरं लक्षणा, नैकवाक्यस्यानेकार्थत्वम् । अनेकार्थत्वेऽगमकत्वम् । लक्षणा[3] तु गमिका । लौकिकत्वात् ।

अपि च श्रुत्या समुदाये देशादयो विधीयेरन् । न च समुदायस्य देशादिभिः संबन्धोऽस्ति । कारकं हि समादयः । कारकस्य कर्मणा संबन्धो न कर्मगुणेन । तस्मादपि लक्षणा । यथा, पौर्णमासीमभिमृशेदिति हविर्लक्षणा । चोदनाविधित्वाच्चेतरेषां देशादीनां प्रति[4]प्रधानं भावः स्यात् । गृह्यमाणविशेषत्वात् । अथ केन समादय आग्नेयादिषु विधीयन्ते । समे यजेत, पौर्णमास्यां यजेतेत्यनेनाऽऽख्यातेन । अत्र हि धातुना यागमनूद्य विभक्त्या तेषु समादीनां विधिः । कर्तारोऽपि यस्त्वेषां यागानां रूपविधानार्थो भवति, अच्युतो भवतीति तेन विधीयन्ते । अथवा, अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति ॥ २ ॥

( अङ्गानां प्रधानैः सहैकदेशकालकर्तृकत्वाधिकरणम् ॥ २ ॥ )

एवं स्थितमपर्यवसितं भवत्यतोऽन्तरा चिन्तान्तरं प्रक्रियते । किं पुनः कारणमेतस्मिन्नपर्यवसिते चिन्तान्तरमारभ्यते । एतस्मिन्न्याये

---

[ २ ॥

---

१ न ह्यनेकार्थं—ग. । २ कथम् । समे—ख. । ३ लक्षणाऽनुगमिका—ग. । ४ प्रतिप्रधानभावः—ग. ।

स्थिते तस्याश्विनाया: पूर्वपक्ष उत्तिष्ठति । अतोऽस्याश्चेदस्यादनन्तर- मुच्यते—

[ २ ] अङ्गेषु च तदभावः प्रधानं प्रति निर्देशाद्यथा द्रव्यदेवतम् ॥ ३ ॥ पू०

अङ्गेष्विदानीं विचार्यते । किं तेषां समादय एव देशकालकर्तारः, अथवाऽनियम इति । किं प्राप्तम् । अङ्गेषु च तदभावः । कुतः । प्रधानं प्रति निर्देशात् । चोदनाविधिशेषत्वेनाऽऽग्नेयादीनि प्रधानानि प्रति समा- दयो निर्दिष्टा नान्यत्र भवन्ति । तस्मादनियमः । यथा द्रव्यदेवतं, यत्प्रधा- नेषु न तदङ्गेषु । एवं देशादयोऽपि ॥ ३ ॥

स्थितादुत्तरम्—

यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात्प्रधाना- र्थाभिसंयोगात् ॥ ४ ॥ अ० १—सि०

यद्याग्नेयादेः कर्मणः समादिविधिसंबन्धः स्यात्ततः स्याच्चोदना- विधिशेषत्वं, भेदेन च समादयः । न तु तदस्ति । कुतः । ऐकशब्द्या- त्प्रधानार्थाभिसंयोगात् । यस्मादाग्नेयादीनां समस्तानामेकः शब्दो वाचकस्तेन समादीनामभिसंयोगः, समे दर्शपूर्णमासाभ्यां यजेतेति, न च व्यस्तानां वाचकाः, यदाग्नेयोऽष्टाकपाल इत्येवमादयः । तत्र प्रत्यक्षं समस्तसंयोगमुत्सृज्य परोक्षो व्यस्तसंयोगः कल्प्यः । सोऽपि लक्षणया । अथ तु प्रधानार्थाभिसंयोगः क्रियेत तत उभयमपि परि- हृतं भवति । कः पुनः प्रधानार्थः । प्रधानं फलं, तत्साधनार्थो यो व्यापारः । कश्चासौ । आग्नेयादीनां प्रयोगः । कथं तेनाभिसंयोगः समादीनां विज्ञायते । उच्यते । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते- त्यनेन समस्तानामाग्नेयादीनां फलसाधनार्थः प्रयोग उक्तः । तस्य च यदि पुनः श्रुत्या समादयो विधीयन्ते, याभ्यामेताभ्यां दर्शपूर्ण-

१ ॥

१ निर्देशात् ॥—क. ख. ग. । २ शेषत्वे—ग. । ३ निर्दिष्टाः प्रधानाङ्गानि भवन्ति । न चान्यत्र निर्दिष्टोऽर्थोऽन्यत्र भवति । तस्मात्—ग. । ४ प्रधानार्थे—क. ख. । ५ क्रियते—ख. ।

मासाभ्यां यजेत ताभ्यां समे यजेतेति, ततो न परोक्षो ऽपरस्तसं-
बन्धः कल्पितो भवति । न च लक्षणा । तस्मात्प्रयोगे विधिरेतेषाम् ।
स च सर्वेषां प्रधानानां साधारणः । तत्रेदमर्थं प्रति न गृह्यते
विशेषः । तस्मात्तन्त्रं देशकालकर्तारः ॥ ४ ॥

तथा चान्यार्थदर्शनम् ॥ ५ ॥

अन्यार्थोऽप्येतमेवार्थं दर्शयति । उग्राणि ह वा एतानि घोराणि
हवींषि यदमावास्यायां संभ्रियन्ते, आग्नेयं प्रथममैन्द्र उत्तर इति ।
संभरणं पौर्वापर्यं चैककालत्व उपपद्यते । तस्मादपि तन्त्रम् ॥ ५ ॥

श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात् ॥ ६ ॥

इतश्च प्रयोगचोदनापुनःश्रुतिरियम् । कुतः । श्रुतिस्तेषां समादीनां
प्रधानानामिव । कथं कृत्वा । कर्मश्रुतेः परार्थत्वात् । याऽत्र कर्मश्रुतिः,
दर्शपूर्णमासाभ्यामिति, सा परार्था । तृतीयायोगात् । तया सामाना-
धिकरण्यात् । यजेतेति यजिरपि परार्थ एव । तदेतदेवमापद्यते, दर्श-
पूर्णमासयागेनान्यत्किमपि कुर्यादिति ॥ ६ ॥

कर्मणोऽश्रुतत्वाच्च ॥ ७ ॥

कर्म च न श्रुतं, कार्यं न श्रुतं, प्रधानं न श्रुतमित्यर्थः । तस्य
स्थाने समादीनि श्रूयन्ते । [2]प्रधानसाधने श्रुतत्वात्, श्रुतिरेषां प्रधान-
वदित्युच्यते । न च तानि प्रधानानि । तत्र यद्याग्नेयादिवाक्यानां
पुनःश्रुतिरियं कल्प्येत गुणभावानुवादो [3]भज्येत । न हि तत्र तेषां
गुणभाव उक्तः । उत्पत्तिमात्राख्यानानि तानि । न च किंचित्कार्यं
निर्दिष्टं, [4]यदपेक्ष्यानुक्तोऽपि गुणभावोऽर्थप्राप्तोऽनूद्येत । प्रयोगचो-
दनायां तु गुणभावो [5]युक्तः । कार्यमपि फलम् । तस्मात्तस्याः पुनः-
श्रुतिरियम् । तथा च तन्त्रभावः सिद्धः ॥ ७ ॥

अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्या-
देकदेशत्वम् ॥ ८ ॥ अ० २ सि०

---

४ ॥ १ ॥ १ ॥ ७ ॥

---

१ व्यस्तसंयोगः—ग. । २ प्रधानस्थाने—मु. । ३ न युज्येत—ग. । ४ यदपेक्षः—क. ख. ।
५ उक्तः—ख. ।

अङ्गेषु स्थितादुत्तरम् । यदा प्रयोगाङ्गं देशादय इत्युपपन्नं तदाऽयमुत्तरः पक्ष उत्तिष्ठति । तस्मात्ततोऽनन्तरमुच्यते । यदुक्तमङ्गेषु देशादीनामनियम इति । तन्न । अङ्गेषु समादिनियम इति । कुतः । यतोऽङ्गान्यपि प्रधानेन फलसिद्धावुपदिश्यमानेन सहोपदिश्यन्ते । कथम् । विधानत्वात् । प्रधानानां फलं साधयतां विधानमेतद्यदुताङ्गप्रयोगः । विधानं कल्प इतिकर्तव्यतेत्यर्थः । अतो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्राङ्गवान् प्रयोगः प्रधानानामुक्तः । यथाविधस्तत्रोक्तस्तथाविधेन पुनःश्रुत्या समादीनां विधिः । अतोऽङ्गानामपि प्रधानैः सहैकदेशकालकर्तृत्वं स्यात् ॥ ८ ॥

द्रव्यदेवतं तथेति चेत् ॥ ९ ॥

अथ यदुक्तं यथा द्रव्यदेवतं प्रधानानामङ्गानां च भेदेन भवति, एवं देशादयोऽपि स्युरिति । तत्परिहर्तव्यम् । आभाषान्तं सूत्रम् ॥९॥

न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ १० ॥

नैतदेवम् । कुतः । चोदनाविधिशेषत्वात् । चोदनाविधिशेषो हि द्रव्यदेवताविधिः । तेन प्रधानेषु द्रव्यदेवताविशेषो नियतः । इहाग्निः पुरोडाशश्च । इहाऽऽज्यमग्नीषोमौ चेति । तथाऽङ्गेष्वपि, आज्येन प्रयाजान् यजति, शेषात्स्विष्टकृतं यजतीति । न चान्यत्र निर्दिष्टोऽन्यत्र भवति । तथेह प्रयोगाङ्गत्वाद्देशादीनां तस्य च प्रयोगस्य साधारण्यात्तन्त्रभाव इत्यपदिष्टो हेतुः । तस्माद्विषमं द्रव्यदेवतेन ॥१०॥

तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ ११ ॥

यदि च समानं द्रव्यदेवतमङ्गानां प्रधानानां च स्यात्ततस्तेषु द्रव्यदेवतेषु समानेषु समवेतानामङ्गानां प्रधानानां च समवायात्तद्वस्थोऽविशेष इति तन्त्रमिज्या स्यात् । भेदस्तु तद्भेदात् । अथ तु भेदो द्रव्यदेवतस्य ततस्तद्भेदात्कर्मभेदः प्रयोगे स्यात् । इज्याकर्मणः प्रयोगे

८ ।, ९ ॥ १० ॥

१ निर्दिष्टोऽर्थः—ग. । २ इत्येवमर्थ—ग. । ३ देवतेनेति—ग. । ४ तदविशेष इति—ख. ।

विशेषग्रहणाद्भेदः स्यात् । तथा चान्यार्थदर्शनं युक्तं भविष्यति, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति । तस्मादपि द्रव्यदेवतस्य भेदः ॥ ११ ॥

( दर्शपूर्णमासचातुर्मास्यादिषु तत्तद्व्याप्यप्रयोगानुरोधेनाङ्गानामावृत्त्यधिकरणम् ॥ ३ ॥ )

[ ३ ] इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ १२ ॥ पू०

दर्शपूर्णमासेष्ट्यां द्वौ समुदायौ दर्शः पूर्णमासश्च । तथा राजसूयेऽनुमत्यादय इष्टयः, पवित्रादयः सोमाः । चातुर्मास्येष्वपि पर्वाणि वैश्वदेवादीनि । तत्र विचार्यते । किं दर्शस्य पूर्णमासस्य च तन्त्रेणाङ्गानां प्रयोगः । तथा राजसूये, इष्टीनां सोमानां च । चातुर्मास्येषु च पर्वणाम्, उत भेदेनेति । किं प्राप्तम् ।

तत्र तत्र तन्त्रेण प्रयोगः । कुतः । ऐककर्म्यात् । एकफलत्वादित्यर्थः । एकं फलमिह तत्र तत्र श्रूयते, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, राजसूयेन स्वाराज्यकामो यजेत, चातुर्मास्यैः स्वर्गकामो यजेतेति । एकत्वात्फलस्यैकः प्रयोगः । तत्र न गृह्यते विशेषः । तस्मात्तन्त्रम् ॥ १२ ॥

कालभेदान्नेति चेत् ॥ १३ ॥

नैतदेवं, तन्त्रमङ्गानीति । किं तर्हि । भेदेन । कुतः । कालभेदात् । क्वचित्कालभेदः, क्वचिद्देशभेदः । दर्शपूर्णमासयोः कालभेदः, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति । तथा, चातुर्मास्येषु पर्वणां, वसन्ते वैश्वदेवेन यजेत, वर्षासु वरुणप्रघासैर्यजेत, हेमन्ते साकमेधैर्यजेतेति । राजसूये देशभेदः, बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे, ऐन्द्र एकादशकपालो राज्ञो गृहे, आदित्यश्चरुर्महिष्या गृह इति । कालभेदाद्देशभेदाच्च गृह्यते विशेषः । पौर्णमासी येषामङ्गानां कालस्तानि पौर्णमास्या उपकुर्वन्ति, नामावास्यायाः । वैगुण्यात् । तस्माद्भेदः ॥ १३ ॥

---

११ ॥ १२ ॥ १३ ॥

---

१ उत तन्त्रभेदेन—क. ख. ग. मु. । २ चातुर्मास्यस्य—ख. ।

नैकदेशत्वात्पशुवत् ॥ १४ ॥

नैतदेवं, भेद इति। कुतः। एकदेशत्वात्। यत्र फलसंबन्धस्तत्राङ्गानां चोदना। यत्कारणम्। फलं साधयतां प्रधानानामङ्गान्युपकारे वर्तन्ते। समुदायचोदनायाः फलसंबन्धः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। राजसूयेन स्वाराज्यकामो यजेतेति। चातुर्मास्यैः स्वर्गकामो यजेतेति। नैकदेशचोदनायां, पौर्णमास्यां पौर्णमास्या यजेत, वसन्ते वैश्वदेवेन यजेत, बार्हस्पत्यश्चरुर्ब्रह्मणो गृह इति। न चेत्तत्राङ्गानां प्राप्तिः, कुतो भेदेन प्रसङ्गः। समुदायस्य तु फलैकत्वादेकः प्रयोगः। तस्माद्यस्मिन् कस्मिंश्चिदवयवे क्रियमाणान्यङ्गानि समुदायेन संभन्त्स्यन्ते। समुदायस्यावयवैरव्यतिरेकात्। पशुवत्। यथा पशौ भिन्नकालेष्वप्येकदेशेषु, वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवन इति नाङ्गानामावृत्तिर्भवति, तद्वत् ॥ १४ ॥

अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ १५ ॥ सि०

अपि वा, न तन्त्रमङ्गानि स्युः। कुतः। कर्मपृथक्त्वात्। तेषां च तन्त्रविधानात्। कर्माणि तावदेतानि भिन्नानि। अन्यः पौर्णमासः समुदायोऽन्य आमावास्यः। एवं सर्वत्र। तेषां च देशकालभेदः, पौर्णमास्यां पौर्णमास्या यजेतेत्येवमादिः। साङ्गानां च तेषां तत्र तत्र देशकालविधिः। ननु नैवात्राङ्गानि प्राप्यन्त इत्युक्तं, कुतस्तेषां देशकालविधिः। उक्तमेतत्। प्रयोगे पुनःश्रुत्या समादयो विधीयन्त इति। तत्र, समे दर्शपूर्णमासाभ्यां यजेतेति, समुदायप्रयोगे पुनःश्रुतिः। पौर्णमास्यां पौर्णमास्या यजेतेत्येकदेशे पुनःश्रुतिः। एवं सति पौर्णमासप्रयोगे कालो विहितः। अविभक्तश्चाङ्गानां प्रधानेन प्रयोगः। तस्मात्पौर्णमास्यङ्गानां पौर्णमासीकालः। अमावास्याङ्गानाममावास्याकालः। तत्र गृह्यते विशेषः। विशेषग्रहणाद्भेदः ॥ १५ ॥

तथा चान्यार्थदर्शनम् ॥ १६ ॥

---

१४ ॥ १५ ॥

---

१ न च तत्र—ग.। २ तेषां च—श्री.। ३ पौर्णमासीसमु—मु।

चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति, तन्त्रभावेन पौर्णमास्यां चतुर्दशाऽऽहुतयः स्युः, नामावास्यायां त्रयोदश। भेदे तूभयत्रोभयं भवति। तस्माद्भेदः ॥ १६ ॥

तदाऽवयवेषु स्यात्[1] ॥ १७ ॥

यदा चैष न्यायस्तदाऽवयवेषु–इष्ट्याद्यवयवेषु, देशकालभेदात्तन्त्रभेदः। तत्र चातुर्मास्यावयवयोरनीकवत्सान्तपनीययोर्बर्हिषः साधारण्यवचनमर्थवद्भवति, यदनीकवतो बर्हिस्तत्सान्तपनीयस्येति। इतरथा सिद्धत्वादनर्थकं स्यात्। तस्मादपि भेदः ॥ १७ ॥

पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १८ ॥

यदुक्तं पशुवदिति। तत्र ब्रूमः। पशौ युक्ता सकृदङ्गानां क्रिया। तत्र ह्येकमेव तन्त्रम्। केवलं प्रचारस्य वचनाद्विप्रकर्षः। तदैक्यं तु चोदनैकत्वात्। एका तत्र चोदना, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोतीति। कर्मचोदनायां ह्यङ्गानां ग्रहणं, न प्रचारचोदनायाम्। तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन[2] निर्वर्त्यते। तदर्थानि च कृतान्यङ्गानि। तेषां पुनःक्रियायां हेतुर्नास्ति। तस्माद्विषम उपन्यासः ॥ १८ ॥

( अध्वरकल्पायां प्रातरादिकालभेदेनानुष्ठीयमानानां त्रयाणां त्रयाणामर्थे भेदेनाङ्गानामनुष्ठानाधिकरणम् ॥ ४ ॥ )

[ ४ ] तथा स्यादध्वरकल्पायां[3] विशेषस्यैककालत्वात् ॥ १९ ॥ पू०

इदं श्रूयते, आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुं, बार्हस्पत्यं चरुम्, आग्नावैष्णवमेकादशकपालं माध्यंदिने, सारस्वतं चरुं, बार्हस्पत्यं चरुम्, आग्नावैष्णवं द्वादशकपालमपराह्णे, सारस्वतं चरुं, बार्हस्पत्यं चरुं, यस्य भ्रातृव्यः सोऽनेन यजेतेति। तत्र चिन्त्यते। किं त्रिषु कालेषु प्रयुज्यमानानामेतेषां कर्मसमुदायानां तन्त्रेणाङ्गानां क्रिया, उत भेदेनेति। किं प्राप्तम्। तथा स्यादध्वरकल्पायां, यथा

११ ॥ १७ ॥ १८ ॥

१ तथा तदवयवेषु—ग. । २ वारद्वयेन—ग. । ३ अध्वरकल्पेष्टौ—मु० ।

पक्षो तन्त्रमङ्गानां प्रयोगः। कुतः। विशेषस्यैककालत्वात्। अङ्गविशेषः कश्चिदेषां भिन्नकालानां समुदायानामेककालः श्रूयते, पुरा वाचः प्रवदितोर्निर्वपेदिति। कथं पुनर्ज्ञायते सर्वेषां निर्वापाणामयं कालविधिरिति। सर्वेषां ह्येषामेकफलत्वादेकं प्रकरणम्। सैषाऽध्वरकल्पेष्टिः। यज्ञमेवैतया प्राप्नोतीति चैकेन शब्देन युगपत्फलं प्रति विधानात्। तस्मिन्नेव काले क्रियमाण उत्तरकालयोः समुदाययोर्निर्वापः प्रतिकृष्येत। स प्रतिकृष्यमाणस्ततः प्राग्भाविनामङ्गानां प्रतिकर्षे वर्तेत, तदादि वाऽभिसंबन्धात्तदन्तमपकर्षे स्यादिति। तानि प्रतिकृष्टानि सर्वेषां तन्त्रं भवन्ति। तेषु तन्त्रेषूत्तरेषामपि तन्त्रभावो युक्तः। कुतः। यदि सर्वाणि तन्त्रं क्रियन्ते नास्ति तन्त्रभावे क्रमभेदः। अथ नु भेदः, ततः पूर्वस्य सर्वं गुणकाण्डमपवृज्योत्तरस्योपक्रमेण भवितव्यम्। तथा निर्वापान्तेषु प्रतिकृष्यमाणेषु क्रमभेदो भवति। न तावत्पूर्वस्य प्रोक्षणादीनि क्रियन्ते यावदुत्तरस्य निर्वापान्तानि न कृतानि। अपि च सहोपक्रमे युगपच्चिकीर्षा। तस्यां च सत्यां यद्यदापतति तत्तदगृह्यमाणविशेषत्वात्साधारणं भवति ॥ १९ ॥

इष्टिरिति चैकवच्छ्रुतिः ॥ २० ॥

सैषाऽध्वरकल्पेष्टिरिति चैकवच्छ्रवणम्। तत्र तावदेकैवेष्टिः। बहव एते यागाः। यदि तु सह क्रियन्ते ततः सर्वसमाप्तौ यतीभावः पर्यवसितो भवतीत्येकवदुपचार उपपद्यते। तस्मात्तन्त्रम् ॥२०॥

अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ २१ ॥ सि०

नैतदेवं, तन्त्रमङ्गानीति। किं तर्हि। भेदेन। कुतः। कर्माणि तावदेतान्याग्नावैष्णवादीनि पृथग्भूतानि। तेषां तन्त्रविधानं नानाकालेषु,

---

१९ ॥ २० ॥

कालभेदादेकैकस्येतिकर्तव्यताया आवृत्तिः। अपि च यस्यापराह्णे करणं प्राप्तं तस्य न प्रातःसामान्यं, नापि प्रातर्विशेषः। यस्य तु पूर्वाह्णे करणं प्राप्तं तस्य

---

१ एकशब्देन—ख. मु.। २ (अ० ५ पा० १ अ० १२ सू० २४)। ३ सर्वेषां प्रति—ग.। ४ अथानुक्रमभेदः—ख.।

प्रातर्मध्यंदिनेऽपराह्ण इति । तत्रैषां साङ्गानामुपदेशः स्यात् । अतः कालभेदादङ्गानां गृह्यते विशेषः । तस्माद्भेदः ॥ २१ ॥

यत्तु विशेषस्यैककालत्वादिति । तत्र ब्रूमः—

## प्रथमस्य वा कालवचनम् ॥ २२ ॥

प्रथमस्य कर्मणो यो निर्वापस्तस्यैतत्कालवचनम्, पुरा वाचः प्रवदितोर्निर्वपेदिति । ननु प्रकरणात्सर्वेषां प्राप्नोति । न प्रकरणं धर्माणां विशेषकम् । किं तर्हि । विनियोजकम् । इदमत्र भवतीत्येतत्प्रकरणस्य सामर्थ्यं, नास्य यत्तस्येदमिति । त्रयाणां च निर्वापाणां क्रमप्राप्तस्य पूर्वस्यैव विज्ञायते । तस्मान्नास्ति विशेषस्यैककालत्वम् । कर्मणां च तन्त्रभेदः कालभेदादिति ॥ २२ ॥

## फलैकत्वादिष्टिशब्दो यथाऽन्यत्र ॥ २३ ॥

यदिष्टिरिति, भिन्नानामपि कर्मणामेकफलानां फलस्यैकत्वमपेक्ष्यैकवचनं भवति । फलान्तरत्वादीहायाः । यथा सर्वपृष्ठेष्टिर्मृगारेष्टिः सुमनानामेष्टिरिति ॥ २३ ॥

( एकदेवताकपशुगणे वसाहोमस्य तन्त्रताधिकरणम् ॥ ५ ॥ )

## [५] वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् ॥ २४ ॥ सि०

एकदेवताः पशव उदाहरणम् । सप्तदश प्राजापत्यान् पशूनालभत इति । अस्ति तु प्रकृतावग्नीषोमीयपशौ वसाहोमः कर्तव्यः, याज्यार्धर्चान्ते वसां जुहोतीति । स इह चोदकेन प्राप्यते । तत्र चिन्त्यते । किं भेदेन वसाहोमः कर्तव्यः, अथवा तन्त्रमिति । किं प्राप्तम् । वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् । वसाहोमः खल्वेकदेवतेषु तन्त्रं स्यात् । कुतः । प्रदानस्यैककालभावात् । एककालं तेषां प्रदानं, वैश्वदेवीं कृत्वा प्रचरन्तीति । देवता चैका प्रजापतिः । अतस्तेषामेकप्रदानत्वम् । प्रदानस्यैकत्वादेकः सर्वेषां साधारणो याज्यार्धर्चान्तः ।

---

प्रातर्विशेषमात्रं विधीयते । सामान्यं प्राप्तमेव । तस्माद्यत्रैको विधीयते स ग्रहीतव्यः । २१ ॥ [ २२ ॥ २३ ॥

---

१ नास्येदं तस्येदं—मु. । २ सुमनानामिष्टिः—ग. । ३ च इति—स एव पशु इत्यर्थः ।

तत्र क्रियमाणस्य होमस्येदमर्थं प्रति न गृह्यते विशेषः । तस्मात्तन्त्रम् ॥ २४ ॥

( भिन्नदेवताकपशुगणे वसाहोमस्याऽऽवृत्त्यधिकरणम् ॥६॥ )

[ ६ ] कालभेदात्त्वावृत्तिर्देवताभेदे ॥ २५ ॥ सि०

देवताभेदे, ऐकादशिनेषु[1] भिन्नप्रदानेषु भिन्ना याज्यार्थचोन्ताः । तेषु गृह्यते विशेषो यस्य प्रदानस्य याज्यार्थचोन्तः कृतः स तदर्थ इति । तस्मात्तन्त्रभेदः[2] ॥ २५ ॥

( यूपैकादशिन्यां यूपाहुतेस्तन्त्रताधिकरणम् ॥ ७ ॥ )

[ ७ ] अन्ते यूपाहुतिस्तद्वत् ॥ २६ ॥ पू०

ज्योतिष्टोमे यूपैकादशिनी, एकादश यूपान् छिनत्तीत्याम्नाता । अस्ति तु प्रकृतावग्नीषोमीये पशौ यूपाहुतिः । सा किं भेदेन कर्तव्या, उत तन्त्रमिति । किं प्राप्तम् । अन्ते यूपाहुतिस्तद्वत् । यद्वन्नानादेवतेषु वसाहोमो भेदेन, तद्वदियमपि भेदेन कर्तव्येत्यर्थः । कुतः । यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति श्रूयते । बहूनां च यूपानां भिन्नान्यन्तिकानि । यस्यैव यूपस्यान्तिके न हूयेत तस्यैव तेन गुणेन वर्जनं स्यात् । तस्माद्भेदेन कार्यम् ॥ २६ ॥

इतरप्रतिषेधो वा ॥ २७ ॥ सि०

अथवा नैव भेदेन कर्तव्येति । किं तर्हि । तन्त्रम् । कस्मात् । इतरप्रतिषेधोऽयम्—आहवनीयप्रतिषेधो नान्तिकविधिः । कथं ज्ञायते[3] । आहवनीये जुहोतीत्युत्सर्गात्सर्वहोमेष्वाहवनीयः प्राप्तः । तत्र, अग्निं मथित्वेति वाच्यम् । तदपि मन्थनं प्राग्वंशे कर्मणः प्रवृत्तत्वात्प्राग्वंशे प्राप्तम् । तत्रेदमपि वक्तव्यं, यूपस्यान्तिकेऽग्निं मथित्वेति । उभयस्मिन्नपि विधीयमाने वाक्यभेदः । मन्थनस्य स्वार्थपरार्थवद्भावात् । तस्मादन्यतरदविवक्षितं, मन्थनमन्तिकं वा । तत्र च मन्थनं विवक्षितमविवक्षितमन्तिकमिति ब्रूमः । कुतः । मन्थनविधिपरत्वाद्वाक्यस्य । एवं ह्याह—यूपमाच्छेत्स्यता होतव्यं, न हि दीक्षितस्याग्नौ जुह्वतीति[4], दीक्षि-

२४ ॥ २५ ॥ २६ ॥

1 एकादशिनेषु—क. ख. ग. । 2 तत्र भेदः क. ख. । 3 ज्ञायते । तदुच्यते ।—ग. । 4 जुहोति—ग. ।

तस्याग्नौ होमे दोषं मन्यते इति । तत्परिहारार्थं कल्पान्तरमुक्तं, वैष्णवीमनूच्याच्छेष्यतीति । तथाऽप्यहोमे दोषमिव मन्यमानः पुनराह— होतव्यमिति, पुरुषस्यैव जुहोत्याहवन इति । तदुभयमपि तत्र न शक्यमिति प्रतिषिध्य तृतीयं कल्पमाह । यूपस्यैवान्तिकेऽग्निं मथित्वा तथा होतव्यम् । तदुभयमपि शक्यं, जुहोत्यथ न दीक्षितस्याग्नौ जुहोतीति ।

तत्र यदि यूपस्यान्तिके जुहोतीत्येतद्विवक्षितं न मन्थनं, ततश्चाऽऽहवनीयमेव यूपस्यान्तिके नीत्वा होमः प्राप्नोति । आहवनीये जुहोतीति नियमात् । तत्र, न दीक्षितस्याग्नौ जुहोतीत्येतन्न संबध्यते । अथ तु, अग्निं मथित्वेत्येतद्विधीयते तत आहवनीयप्रतिषेधो भवति । अन्योऽयमाहवनीयाद्यो मथ्यते । तत्रैतत्समर्थितं भवति, जुहोति च, न चाऽऽहवनीये जुहोतीति । तस्मान्मन्थनं विधीयते, नान्तिकम् ॥ २७ ॥

## अनुवादमात्रमन्तिकस्य ॥ २८ ॥

कुतः प्राप्तेऽनुवादः । सौकर्यात् । सहाग्निना यूपान्वेषणं दुष्करम् । यूपान्तिके त्वग्निं मथित्वा सुकरो होमः । न्यायप्राप्तस्यानुवादः । एवं सति यद्यनन्तिके जुहोति, न दोषः । अथ कस्मान्मन्थनमात्रं कृत्वाऽऽहवनीय एव न हूयते । अदृष्टं कल्पितं भवति । तस्मात्तन्त्रं यूपाहुतिः ॥ २८ ॥

## अशास्त्रत्वाच्च देशानाम् ॥ २९ ॥

न चान्तिकदेशाः शक्याः शासितुम्, आपेक्षिकत्वादन्तिकस्य । अथ परमान्तिकं शिष्येत, तदा यूप उपदह्येत । तच्च प्रतिषिद्धम् । न च शक्यं परमान्तिकेऽग्निमन्थनं कर्तुम् । तस्मादप्यविवक्षितत्वमन्तिकस्य ॥ २९ ॥

२७ ॥ २८ ॥ २९ ॥

१ मन्वते—ग. । २ अच्छेष्यतामिति—ख. । ३ पुनः पुनराह—क. ख. । ४ अत्र 'न पुरुषस्यैव' इति पाठ आवश्यक इति भाति । ५ तत्र—क. ख. । ६ 'अनुवादमात्रमन्तिकस्य' इतीदं सूत्रं काशीमुद्रितपुस्तके भाष्यग्रन्थतया प्रकाशितमस्ति । एवं शास्त्रदीपिकादिमुद्रितग्रन्थेष्वपि नोपलभ्यते, तथाऽपि श्रीसंज्ञके केवलसूत्रपाठे । क-संज्ञके चास्य सूत्रस्योपलम्भात्तत्प्रमाणीकृत्य सूत्रपाठे संयोज्य प्रकाशितं ज्ञेयम् । ७ हूयेत—क. ख. । ८ अशास्त्रत्वाच्च—मु. । ९ उपदह्येत—ग. । १० तस्मादविवक्षाऽन्तिकस्य—ग. ।

(अवभृथेऽप्सु साङ्गप्रधानानुष्ठानाधिकरणम् । ८ ॥)

[८] अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ ३० ॥ पू०

अस्ति ज्योतिष्टोमेऽवभृथः । तस्मिंश्च श्रूयते, अप्स्ववभृथेन चरन्तीति । तत्र विचार्यते । किं प्रधानमात्रमप्सु कर्तव्यमथवाऽङ्गान्यपीति । किं प्राप्तम् । अवभृथे प्रधानेऽग्निविकारः । प्रधानमात्रमप्सु कर्तव्यम् । कुतः । न हि तद्धेतुरग्निसंयोगः । न ह्यङ्गानां प्रधानहेतुकोऽग्निना संयोगः । यदाहवनीये जुहोतीति होममात्रेऽग्निर्विहितः । स यथा प्रधाने तथाऽङ्गेषु । आपस्तु प्रधाने केवले विहिताः । अप्स्ववभृथेन चरन्तीति । अवभृथशब्दो हि वरुणदेवतस्यैककपालद्रव्यस्य यागस्य वाचकः । तदुत्पत्तिवाक्ये श्रुतत्वात्, वारुणेनैककपालेनावभृथं यन्तीति । न चात्र गमनं विधीयते । अर्थगृहीतं तत्, अप्सु प्रचारवचनात् । न चावभृथो नाम कश्चिद्देशोऽस्ति, यं वारुणेनैककपालेन गच्छेयुः । न च वारुण एककपालोऽस्ति, येन गमनमुच्येत । तस्मादेककपालस्य देवतासंबन्धकरणमेवात्रोच्यते । स च यागः । तद्वचनोऽवभृथशब्दः । तस्मिन्नापो विहिताः । तासामङ्गेषु कः प्रसङ्गः ॥३०॥

द्रव्यदेवतवत्[1] ॥ ३१ ॥

यथा द्रव्यमेककपालो वरुणश्च देवता प्रधाने विहितत्वान्नाङ्गेषु भवतः । एवमापोऽपि ॥ ३१ ॥

साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३२ ॥ सि०

साङ्गो वाऽवभृथोऽप्सु वर्तेत । कुतः । प्रयोगवचनैकत्वात् । नात्राऽऽपोऽवभृथे श्रूयन्ते । किं तर्हि । प्रयोगे । न ह्येतद्वचनम् । अप्स्ववभृथ इति । कथं तर्हि । अप्स्ववभृथेनेति । द्वे अपि पदे कारकवचने । न च विशेषणविशेष्यता । उभयोश्चरन्तीति क्रियया संबन्धो न मिथः । चरन्तीति च प्रयोग उच्यते । तस्मात्प्रयोगाङ्गमापः । अविभक्तश्चाङ्गप्रधानानां प्रयोग इत्युक्तम्, अङ्गानि तु विधानत्वात्प्रधानेनोपादि-

१० ॥ ११ ॥

१ इदं च सूत्रं काशीमुद्रितपुस्तके परिभ्रष्टम् । श्रीसंज्ञके पुस्तके इतरादर्शपुस्तकेष्वप्यस्योपलम्भात्प्रकाशितमिति विज्ञेयम् । २ (अ० ११ पा० २ अ० २ सू० ८)।

इयेरन्नित्यत्र । तस्मात्साङ्गोऽवभृथोऽप्सूपदिष्टो न केवलः । अतोऽङ्गान्यपि तत्रैव कर्तव्यानि ॥ ३२ ॥

लिङ्गदर्शनाच्च ॥ ३३ ॥

लिङ्गं चैतमर्थं दर्शयति, अप्सु तृणं प्रास्याऽऽघारमाघारयतीति । यद्यङ्गानामग्नौ वृत्तिः स्यादुभयं विधीयेत, अप्स्वाघारयति, तृणं प्रास्यतीति च । तथा वाक्यभेददोषः स्यात् । अथ यथोक्तो न्यायस्तथाऽप्स्वित्यनूद्य तृणप्रासमं केवलं विधीयत इति नास्ति दोषः ॥ ३३ ॥

अथ यदुपवर्णितं द्रव्यदेवतवदिति । तत्र ब्रूमः—

शब्दविभागाच्च द्रव्यदेवतानपनयः ॥ ३४ ॥

विभक्तः शब्दः, प्रधानस्यावभृथ इति वाचकः । अङ्गानामाघारादयः शब्दाः । अवभृथशब्दसंयुक्तं च द्रव्यदेवतं, वारुणेनैककपालेनावभृथं यन्तीति । तस्मान्न तदङ्गेषु भवति । आपस्तु प्रयोगाङ्गमित्येवमपदिष्टो हेतुः । अतोऽनुपवर्णनमेतत् ॥ ३४ ॥

( वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थं पृथगङ्गानुष्ठानाधिकरणम् ॥ ९ ॥ )

[ ९ ] दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं विक्रियेत ॥ ३५ ॥ सि०

वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं, पृथगग्नी प्रणयन्ति, पृथग्वेदी कुरुत इति । तत्र श्रूयते, अध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति । इह विचार्यते । किं भेदेन दक्षिणविहारेऽङ्गानि कर्तव्यानि, अथवा यान्येवोत्तरे कृतानि तान्येवेतरत्राप्युपकुर्वन्तीति । किं प्राप्तम् ।

भेदेनाङ्गानि कर्तव्यानि । कुतः । देशभेदात् । देशो हि भिद्यते, दक्षिण उत्तर इति । यान्युत्तरे विहारे प्रधानानि तेषां तद्देशान्येवाङ्गान्युपकुर्वन्ति, अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेश-

३२ ॥ ३३ ॥ ३४ ।

१ प्रास्याऽऽघारयतीति–क ग. । २ तद्वाक्यभेद–क. ख. । ३ देवतानपनयः—क. ख. । देवतानय.—मु० । ४ सर्वं तन्त्रं विक्रियते—श्री. ग. । सर्वं । क्रियते–मु० । ५ (अ० ११ पा० २ अ० २ सू० ८)।

स्वामिति । नान्यदेशाया मारुत्याः । तस्मात्तदर्थं दक्षिणे विहारे भेदेन कर्तव्यानीति ॥ ३५ ॥

अचोदनेति चेत् ॥ ३६ ॥

एवं चेत्पश्यसि देशभेदादङ्गानां पृथक्क्रियेति । नैतद्युक्तम् । यत्कारणम् । अचोदनाऽत्र मारुत्याः । यत्र यागः फलं प्रति चोद्यते तत्राङ्गानि गृह्णाति । न चेह मारुत्याः फलं प्रति चोदना । क्व तर्हि । चातुर्मास्यैः स्वर्गकामो यजेतेति । न चेदिह कर्म चोद्यते, अङ्गानां प्राप्तिरेव नास्ति, कुतो भेदस्तन्त्रता वा ॥ ३६ ॥

स्यात्पौर्णमासीवत् ॥ ३७ ॥

स्यादङ्गानां प्राप्तिः । पौर्णमासीवत् । तद्यथा, पौर्णमास्यां पौर्णमास्या यजेतेति न तावत्कर्म[1] फलं प्रति चोद्यते । अन्यत्रैव तच्चोदितं, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । अथ च साङ्गप्रधानं पौर्णमास्यां क्रियत इति । एवमिहापि भविष्यति ॥ ३७ ॥

प्रयोगचोदनेति चेत् ॥ ३८ ॥

अथोच्येत, प्रयोगस्तत्र पौर्णमास्यां चोद्यते यजेतेत्याख्यातेन । प्रयोगश्चाङ्गप्रधानानां विवक्षितः । प्रयोगाङ्गं च कालः । तस्मात्तत्र[2] साङ्गं प्रधानं पौर्णमास्यां क्रियत इति ॥ ३८ ॥

तत्र ब्रूमः—

तथेह[3] ॥ ३९ ॥

इहापि मारुत्याः प्रयोगश्चोद्यत आसादयतीत्यनेनाऽऽख्यातेन । यथा च कालः प्रयोगाङ्गमेवं देशोऽपि । तस्मान्मारुत्यपि साङ्गा दक्षिणविहारे कर्तव्या । ननु नाऽऽसादयतिशब्देन याग उच्यते । कथं तस्य प्रयोगं वक्ष्यति । आह । यागार्थमेतदासादनं, यथा प्रकृतौ । तथा

२९ ॥ ३१ ॥ ३७ ॥ ३८ ॥

१ कर्मफलं चो—क. ख. । २ अत्र—क. ख. । ३ यदत्र काशीमुद्रितपुस्तके 'तथेह' इति सूत्रं भाष्यरूपेण 'इहापि मारुत्याः प्रयोगश्चोद्यते' इति भाष्यं च सूत्ररूपेण प्रकाशितं तत्केवलं प्रमादमूलकमिति ज्ञेयम् । आदर्शपुस्तकेषु, शास्त्रदीपिकादिमुद्रितपुस्तकेषु च तथाऽनुपलम्भात् । यद्यपि शास्त्रदीपिकादिग्रन्थेषु 'अथेह' इत्येवं पाठो दृश्यते तथाऽपि 'तथेह' इत्येव पाठः साधीयानित्यपि ज्ञेयम् ।

दृष्टार्थं भवति । इतरथाऽदृष्टोऽर्थः कल्पयितव्यः स्यात् । यागार्थं चेत्तत्र यागोऽवश्यं कार्यः । सैषा लक्षणया यागचोदना भवति । यथा, सौर्यं चरुं निर्वपेत्, सौम्यं बभ्रुमालभेतेति । तस्मादिहापि मारुत्याः प्रयोगश्चोद्यते । तथा च प्राप्तानामङ्गानां भेदेन क्रिया ॥ ३९ ॥

## आसादनमिति चेत् ॥ ४० ॥

आह । नाऽऽसादयतिशब्देन याग उच्यते । किं तर्हि । आसादनम् । ननु लक्षणया यागं वक्ष्यति । न श्रुतिमुत्सृज्य लक्षणाऽऽश्रयणीया । आसादनस्य दृष्टार्थत्वेनाऽऽश्रयिष्यते । आश्रीयेत, यद्यासादनं दृष्टार्थं संभवति । यदि दक्षिणेऽग्नौ मारुत्या होमः सिद्धः स्यात्तत्समीपे नयनं दृष्टार्थं भवेत् । स त्वसिद्धः । प्रकृतौ त्वेकत्वादाहवनीयस्य तत्रैव सिद्धो होमः । अतस्तत्संनिकर्षे नयनं दृष्टार्थं संभवति । न त्विह तथा । न चेद्दृष्टार्थता युज्यते श्रुत्यर्थ एव ग्राह्यः । तस्मादासादनमासादयतिशब्देनोच्यते न यागः ॥ ४० ॥

## नोत्तरेणैकवाक्यत्वात् ॥ ४१ ॥

नैतददृष्टार्थमासादनम् । कुतः । उत्तरेणैकवाक्यत्वात् । अष्टावुत्तरे विहारे हवींष्यासादयतीत्यनेनोत्तरविहारसंबद्धेन पदसंचयेन, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नित्येतस्यैकवाक्यत्वादेवं ज्ञायते, यथा नाऽऽसादनमदृष्टार्थमिति । कथं कृत्वा । आहवनीयद्वयेऽव्यवस्थया हविषां होमः प्राप्तः । तदनुविधानादासादनमपि तथैव प्राप्तम् । तत्र व्यवस्थामात्रमनेन क्रियते । यथाप्राप्तस्य च व्यवस्था । होमाय च प्राप्तं नादृष्टाय । तस्माद्धोमार्थमासादनम् । अपर आह । एकस्मिन् वाक्य एक एवायमासादयतिशब्द उभयोर्विहारयोरासादनमाह । उत्तरस्मिंश्च व्यक्तं तद्धोमार्थम् । एकस्मिंश्चोच्चारणे दक्षिणे होमार्थं न भविष्यतीत्येतन्नोपपद्यते । तस्मादुभयत्र होमार्थम् । अथोच्येत, आसादनमेवेदं विधीयते ।

---

३९ ॥ ४० ॥

---

१ आश्रयिष्यते । यद्यासादनं दृष्टार्थं भवेत् । तत्र दृष्टार्थं भवति । यदि--ग. । २ पदसमुदायेन--ग. । ३ एतत्--ग. । ४ मिदम् । तत्कथं--क. ग. । ५ व्यवस्था, मारुतीमेव प्रतिप्रस्थाता दक्षिणे विहार इति--ग. । ६ कस्मिंश्च--क. ग. मु. ।

यत्र दृष्टार्थं भवति, तत्र दृष्टार्थम् । यत्र न संभवति तत्रादृष्टार्थमिति । तच्च न । विध्यनुवादयोर्यौगपद्यप्रसङ्गात् । यत्र दृष्टार्थं तत्रानूद्यते, प्रकृतितः प्राप्तत्वात् । यत्रादृष्टार्थं तत्र विधीयते । तदुभयं युगपन्न संभवति । तस्मादयुक्तमेतत् । अथ होमार्थत्वे सति कस्माद्यागचोदना कल्पते, नाऽऽसादनमात्रमेवेति । आह । होमश्चान्यत्रेति । नैवम् । आसादनं हि होमार्थं भवति । नान्यत्राऽऽसाद्यमानमन्यत्र होमार्थं भविष्यति ॥ ४१ ॥

अपि च—

## अवाच्यत्वात् ॥ ४२ ॥

न च होमार्थमासादनं वक्तव्यं, सति होमे प्रकृतित एव प्राप्नोति । यागस्तु वक्तव्यः । स च सति होमे शक्यते लक्षणयाऽऽनेन वक्तुम् । तस्मादत्राप्यासादयतिशब्देन पौर्णमासीवद्यागस्य प्रयोग उच्यते । तथा च तन्त्रभेदः ॥ ४२ ॥

## आम्नायवचनं तद्वत् ॥ ४३ ॥

वैदिकवचनं तद्वद् युक्तं भविष्यति यद्वन्न्यायोऽपदिष्टः, यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोतीति । तथा, यस्मिन्नेव होमस्तस्मिन् ब्रूते देवतायजनमिति, दक्षिणेऽपि विहारे देवतायागं दर्शयति । तद्यागार्थे आसादयतिशब्दो युज्यते । तस्मादप्येवम् ॥ ४३ ॥

( वरुणप्रघासेषु कर्तॄणां तन्त्रताधिकरणम् ॥ १० ॥ )

## [१०] कर्तृभेदस्तथेति चेत् ॥ ४४ ॥ पू०

तत्रैव चिन्त्यते, किं कर्तारो भेदेनोत तन्त्रमिति । किं प्राप्तम् । कर्तृभेदस्तथा, यथाऽङ्गभेदः । अष्टानां हविषां साङ्गानां कर्तृभिरुत्तरे विहारे प्रचरितव्यम् । इतरैर्दक्षिणे । एवं यथादेशं साङ्गानि प्रधानानि कृतानि भवन्ति । तेनोत्तरवैहारिकाः कर्तारो गृह्यमाणविशेषा दक्षिणे विहारे नोपकुर्वन्ति । तस्मात्कर्त्रन्तरैर्भवितव्यम् ॥ ४४ ॥

---

४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

---

१ मेवेत्याह—ग. । २ अवाच्यत्वाच—श्री. ग. ।

न समवायात् ॥ ४५ ॥ सि०

नैतदेवम्, अङ्गवत्कर्तृभेद इति । किं तर्हि । तन्त्रेण कर्तारः स्युः । कुतः । समवायात् । वचनेन हि कर्तारः समवयन्त्यत्र, चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति । समुदायसंबन्धेऽपि सत्यवयवा एव कर्तृभिः संबध्यन्ते । वरुणप्रघासानां च तदवयवत्वात्पञ्चभिरभिसंबन्धोऽभ्युपगम्यते । एकश्चायं वरुणप्रघासानां प्रयोगः । एककालत्वात् । समानोपक्रमोपसंहाराच्च । तद्यावद्वचनं तावदेवात्र भेदेन कर्तव्यं, नान्यदपि । न च कर्तॄणां भेद उक्तः । तस्मात्तन्त्रेण भवन्तीति । तत्रैतत्स्यात् । प्रधानभेद उक्तेऽनुक्तोऽप्यङ्गानां भेदोऽभ्युपगम्यते । कुतः । अङ्गानां प्रधानगामित्वात् । यथैव हि प्रयाजादीनां मारुत्या भेदाद्भेदेन क्रिया, एवमङ्गभूतत्वात्कर्तॄणां प्रयाजादिवत्कस्मान्न भेदोऽध्यवसीयेत इति ।

तत्रोच्यते । अङ्गत्वाविशेषेऽपि सत्यन्यथाजातीयोऽन्यस्याङ्गस्योपकारोऽन्यथाजातीयोऽन्यस्य । प्रयाजादीन्यदृष्टेनोपकारसंबन्धेनोपकुर्वन्ति । बर्हिरादीनि यागद्रव्यधारणेन । अपराण्यधिकरणसंस्कारद्वारेण । तानि यागदेशाधिकरणभेदाद्भिद्यन्ते । कर्तारस्तु क्रियानिर्वृत्त्योपकुर्वन्ति । तेन ते देशभेदेऽपि सति प्राकृतोपकारप्रत्यभिज्ञानात्तन्त्रेण क्रियानिर्वृत्तिं शक्नुवन्ति कर्तुमिति न भिद्यन्ते । कः पुनः प्राकृत उपकार इति । होता तावदग्रतो गार्हपत्यस्य पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन संबोधयन् यागस्य कर्तेत्युच्यते । शक्नोति तद्देशावस्थित एव सामीप्यात्तन्त्रेण क्रमप्राप्तं यागं कुर्वाणमध्वर्युवत्प्रतिप्रस्थातारमपि संबोधयितुमिति । अतो न भिद्यते । तथाऽऽग्नीध्रः समानत्वादुत्करदेशस्य तत्रावस्थित एव प्रत्याश्रावणेनोभौ कर्तारावनुग्रहीतुम् । अतोऽसावपि न भिद्यते । तथा ब्रह्मा दक्षिणतोऽवस्थित उभयोराहवनीययोः समानत्वाद्देशस्य य एवोत्तरस्य दक्षिणः स एव दक्षिणस्य दक्षिण इति तत्रावस्थितः कृताकृतप्रत्यवेक्षणेनानुज्ञावचनेन च शक्नोत्युभावनुग्रहीतुम् । अतस्तस्याप्यभेदः । अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेद उक्त एवेत्यदोषः । तस्मान्न कर्त्रन्तरैर्भवितव्यम् ॥ ४५ ॥

---

४९ ॥

---

१ भिद्यते । नै च—ग. २ अध्यवसीयते—ख. । ३ अत्र—ग. । ४ अन्यजाती—ग. ।

## लिङ्गदर्शनाच्च ॥ ४६ ॥

लिङ्गं चैतमर्थं दर्शयति । प्रवयसमृषभं दक्षिणां ददातीति दक्षिणैकवमाह । तदेककर्तृत्वेनोपपद्यते । अन्यत्र दक्षिणाभावान्न याजयेयुः । नन्वन्वाहार्येण याजयिष्यन्ति । न ज्ञायते कान्वाहार्यः, कर्षभ इति । विशेषाग्रहणादुभयत्रर्षभः । उपादेयत्वेन चोदितस्यैकत्वं विवक्षितम् । तस्माद्दक्षिणैकत्वम् । तथा च तन्त्रं कर्तारः ॥ ४६ ॥

## वेदिसंयोगादिति चेत् ॥ ४७ ॥

अथोच्येत, वेदिसंयोगो होतुः श्रूयते, अन्तर्वेद्यन्यः पादो होतुर्भवति, बहिर्वेद्यन्य इति । एकश्च होतुः पाद उभयत्रोपकर्तुमसमर्थः । तस्मात्कर्तृभेदः ॥ ४७ ॥

## न देशमात्रत्वात् ॥ ४८ ॥

नैतदेवम् । कस्मात् । देशमात्रत्वात् । नात्र होतुः पादो वेदेरुपकारार्थत्वेनोपदिश्यते । किं तर्हि । देशमात्रमेतद्विधीयते । तस्मिन्देशे होत्रा स्थातव्यं, यत्रास्यैकः पादोऽन्तर्वेदि भवति बहिर्वेद्यन्य इति । कुतः । एकवाक्यत्वात्[1] । एकमिदं वाक्यं युक्तं, संनिध्यनुग्रहादेकार्थत्वाच्च । यदि च होतुः पादो वेद्यङ्गत्वेनोपदिश्येत, एकस्मिन्नन्तर्वेदिनिहिते कृतः श्रुत्यर्थ इति द्वितीयस्यानियमः स्यात् । सोऽपि विधातव्यो बहिर्वेद्यन्य इति । कथं पुनरेकोऽन्तर्वेदीत्युक्ते द्वितीयोऽपि तत्र प्रसज्येत । अप्रतिषिद्धत्वात् । यदि द्वयोरन्तर्वेद्यन्यतः प्राप्तिः स्यात्तत एकस्य वचनं द्वितीयनिवृत्त्यर्थम् । न चास्ति प्राप्तिः । तस्मादस्ति प्रसङ्गः । तथा च वाक्यभेदः । अथ तु देशविशेषविधानार्थमेतत्ततस्तदेताभ्यामुभाभ्यां संभूय क्रियत इत्येकार्थत्वादेकवाक्यत्वमुपपन्नम् । तस्मान्न होतृपादो वेदेरुपकारकः[2] । अतो नोभयत्र विधेयः ॥ ४८ ॥

---

४६ ॥ ४७ ॥ ४८ ॥

---

१ यदत्र 'एकवाक्यत्वात्' इति भाष्यं काशीमुद्रितपुस्तके सूत्ररूपेण प्रकाशितं तदस्माभिः समादृतेष्वादर्शपुस्तकेषु कुत्रापि तथाऽनुपलम्भादानन्दाश्रमीयजैमिनीयन्यायमालादिमुद्रितपुस्तकेष्वपि तथाऽदर्शनाद्वस्तुतः सूत्रभेदाप्रतीतेश्चायुक्ततरं मत्वोपेक्षितम् । २ कारकः । नोभयत्र–क. ख. ।

( वरुणप्रघासेष्वापराग्निकानां पत्नीसंयाजानामावृत्त्याधिकरणम् ॥ ११ ॥ )

[ ११ ] एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४९ ॥ पू०

इदमपरं तत्रैव चिन्त्यते । किमापराग्निका होमास्तन्त्रं कार्या उत भेदेनेति । किं प्राप्तम् । तन्त्रमिति । कुतः । एकाग्नित्वात् । पौर्वाग्निकानामग्निभेदाद्भेद उक्तः । इह स हेतुर्नास्ति । एकाग्नित्वादेतेषाम् । तस्मादेते तन्त्रं भवेयुः ॥ ४९ ॥

नाना वा कर्तृभेदात् ॥ ५० ॥ सि०

नाना भवेयुः । कुतः । कर्तृभेदात् । मारुत्या यान्यङ्गानि तानि प्रतिप्रस्थात्रा कार्याणि । इतराण्यध्वर्युणा । तन्त्रभावेऽन्यतरेषां कर्तृकृतं वैगुण्यं स्यात् । तस्माद्भेदः ॥ ५० ॥

(ब्रह्मसामकाले प्राजापत्यानां पशूनामालम्भोत्कर्षमात्रविधानाधिकरणम् ॥१२॥)

[ १२ ] पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ५१ ॥ पू०

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते, तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभन्त इति । तत्र विचार्यते । तान् पर्यग्निकृतानुत्सृजन्तीति, किमयं कर्मशेषप्रतिषेधः, ब्रह्मसाम्न्यालभत इति कर्मान्तरचोदना, अथवा पूर्वः पर्यग्निकरणात्परेषां संस्काराणां प्रतिषेधार्थः, उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थ इति । किं प्राप्तम् । कर्मोत्सर्गः । कर्मशेषप्रतिषेध इत्यर्थः । श्रुतिसामान्यादारण्यवत् । यथा, पर्यग्निकृतानारण्यानुत्सृजन्तीत्ययं कर्मशेषप्रतिषेध इत्युक्तं, शेषप्रतिषेधो वाऽर्थाभावादिहान्तवदिति । तया श्रुत्या तुल्येयं श्रुतिः । किमनयोस्तुल्यत्वम् ।

---

४९ ॥ ५० ॥ ]

'पर्यग्निकृतानुत्सृजन्ति' इति पर्यग्निकरणान्ताङ्गरीतिर्विधीयते । तथैते प्राजापत्या निराकाङ्क्षी क्रियन्ते गृहमेधीयवत् ।

---

१ 'उत्सृजति, ब्रह्मसाम्न्यालभते' इति भाट्टदीपिकादिधृतः पाठः । २ ( अ० ९ पा० ४ अ० १२ सू० ५२ ) । ३ तुल्यम्—क. ख. ।

तत्र कर्माणि चोदितानि, वसन्ताय कपिञ्जलानालभेतेति । तेषु सर्वेषु प्राकृता गुणाः प्राप्ताः । तेषु प्राप्तेषु पर्यग्निकरणान्तं गुणकाण्डं पुनः श्रुतं, पर्यग्निकृतानुत्सृजन्तीति । निर्गुणं पुनर्वचनमितरपरिसंख्यापर्कं भवतीति कर्मशेषस्य प्रतिषेधकं विज्ञायते । एवमिहापि, प्राजापत्यानालभेतेति चोदितानां कर्मणां तथैव सर्वाङ्गेषु प्राप्तेष्विदं पर्यग्निकरणान्तस्य गुणकाण्डस्य निर्गुणं पुनर्वचनं कर्मशेषस्य निवर्तकम् । यस्माच्चैवं तस्मात्, ब्रह्मसाम्न्यालभत इति कर्मान्तरचोदना स्यात् । पूर्वापेक्षया ब्रह्मसाम्न्यालभते सप्तदश प्राजापत्यानिति ॥ ५१ ॥

## संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥५२॥ सि०

न वा कर्मशेषप्रतिषेध इति । किं तर्हि । संस्काराणां प्राप्तावसराणाम् । तस्मादवसरात्प्रतिषिध्य ब्रह्मसाम्नि प्रतिप्रसवः । किं कारणम् । वाक्यैकत्वे क्रतुसामान्यात् । एकमिदं वाक्यं, तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभत इति । कथं ज्ञायते । आलभत इति द्रव्यदेवतस्याश्रवणात् । समाने च क्रतौ वाक्यैकत्वं भवति । तदा हि केवल आलम्भो वक्तव्यः, द्रव्यदेवतस्योक्तत्वात् । अथ वाक्यभेदः स्यात्, ततः पूर्वेण कर्मशेषः प्रतिषिध्येत, परेण कर्मान्तरं चोद्येत । तत्र द्रव्यदेवतं वक्तव्यम् । यत्तु पूर्वोक्तं संपन्नस्यत इति । तत्तत्रैव कृतार्थत्वादिह न संबध्येत । तस्मादेकं वाक्यम् । नन्वेकस्मिन्नपि क्रतौ पूर्वेण संस्काराः प्रतिषिध्यन्ते, परेण विधीयन्त इत्यर्थभेदाद्वाक्यभेद एव भवति । न हि । ब्रह्मसाम्न्यालभत इत्युक्तेऽर्धादेव पर्यग्निकरणान्त

---

'ब्रह्मसाम्न्यालभते' इति कर्मान्तरम् । तत्र यदेव द्रव्यदेवतं पूर्वेषु तदेवानुपज्यते ॥ ५१ ॥

यथावसरं प्राप्ताः संस्कारा अस्मिन्काले न कर्तव्या इत्येवमपि वाक्यार्थ उपपद्यमानेऽङ्गरीतिविधानं न गृह्णीमः । वाक्यभेदादहष्टकल्पनाभयाच्च । अपि चास्मिन्काले संस्कारा न कर्तव्या इत्ययमर्थ प्राप्तानुवाद एव । यदा ह्यालम्भोऽन्यस्मिन्काले विहि-

---

१ प्रतिषेधः ।—ग. । २ 'वाक्यैकत्वे क्रतुसामान्यात्' इति सूत्रावयवः पृथक्सूत्रत्वेन काशीपुस्तके प्रकाशितः स प्रमादकृत इति ज्ञेयम् । ३ एवमपि—ख. । ४ पर्यग्निकरणान्तः—क. ख.। ५ संस्कारा इति—पर्यग्निकरणोत्तरकालं कर्तव्यतया प्राप्ता आलम्भादयः संस्कारा इत्यर्थः ।

उत्सर्गः सिद्धः। स न विधीयते। तमनूद्याऽऽलम्भः केवल उत्कृष्यतेति नास्ति क्रतुसामान्ये वाक्यभेदः ॥ ५२ ॥

## वपानां चानभिघारणस्य दर्शनात् ॥ ५३ ॥

सव्या वा एतर्हि वपा यदनभिघृता ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते, तेनासव्यास्तेनाभिघृता इति। यदि संस्कारप्रतिषेधः, ततो जुह्वाः सवनीयप्रचारेण रेचितत्वात्प्रयाजशेषो नास्ति। तदभावादनभिघृतत्वं युज्यते। अथ कर्मशेषप्रतिषेधस्ततो ब्रह्मसाम्न्यालम्भः कर्मान्तरे। तत्र प्रयाजाः पुनरिज्यन्ते। तेषां शेषोऽस्ति। तेनाभिघारणं स्यात्। अनभिघारणदर्शनं नोपपद्येत।

---

तस्तदा न्यायादेव सर्वसंस्काराणामुत्कर्षात्कः प्रसङ्गोऽन्यस्मिन्काले संस्काराणां, येन प्रतिषिध्येरन् ॥ ५२ ॥

यस्यापि 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरं, तस्यापि पुरोडाशस्येव प्रासङ्गिकाः प्रयाजाः। तस्मादेतद्दर्शनमयुक्तं, द्वयोरपि तुल्यत्वात्।

तत्र केचिद्वर्णयन्ति। तेषां द्वौ पक्षौ। एकः पक्षो ब्रह्मसामकाले, आलम्भः। द्वितीयः सह क्रतुपशुभिः समाप्तिः। अस्मिन्द्वितीये पक्षे वपानामभिघारणं विद्यते। यदा च माध्यंदिन आलम्भस्तदा यत्तद्वपाभिघारणं तन्नास्ति, वपाया अनुत्पन्नत्वात्। यागैकत्वे योऽसावभिघारणसंस्कारो नान्तरीयको हविष्यनुभूतस्तस्येदानीमविद्यमानत्वादाशङ्कावचनमुपपद्यते। कर्मान्तरपक्षे तु स धर्मोऽननुभूतपूर्वः। तत्र शङ्कैव नास्तीति।

इदमपि नोपपद्यते। कर्मान्तरवादिनोऽपि हविषां चोदकेन संस्कारः प्राप्नोतीति स

---

१ सवनीयप्रचारेण रेचितत्वादिति—क्रतुपशुवपाभिघारणेन रिक्तत्वादित्यर्थः। २ द्वयोरपीति—द्वयोरपि वादिनोः प्रयाजाभावेनानभिघारणस्य तुल्यत्वादित्यर्थः। ३ तेषां—प्राजापत्यपशूनाम्। ४ एक इति—आश्विनग्रहग्रहणानन्तरं क्रतुपशुभिः सहोपकृतानां प्राजापत्यानां पशूनां पर्यग्निकरणान्तं कृत्वा तत उत्सृज्य ब्रह्मसामकाले, आलम्भ इत्येकः पक्ष इत्यर्थः। ५ आशङ्कावचनमिति—'सव्या वा एतर्हि वपा' इति दोषाशङ्कावचनमित्यर्थः। ६ नास्तीति—अभिघारयितव्यानामनभिघारणे दोषाशङ्का भवति। अकर्मान्तरत्वे स्विदमुपपद्यते। कर्मान्तरत्वपक्षे तु तदीयवपाभिः कदाचिदप्यभिघारणाख्यस्य धर्मस्याननुभूतत्वाद्दोषाशङ्कैव नोदेतीत्याशयः।

तस्मादपि संस्कारप्रतिषेधः ॥ ५३ ॥

( पञ्चशारदीये—उक्षवाक्ये कर्मशेषप्रतिषेधविधानेन प्रतिसंवत्सरं भिन्नानामेवोक्ष्णामानयनाधिकरणम् ॥ १३ ॥ )

[१३] पञ्चशारदीयास्तथेति चेत् ॥ ५४ ॥ पू०

अस्ति पञ्चशारदीयोऽहीनो मारुतीयः पञ्चशारदीयः, यः कामयेत बहु स्यामिति स एतेन यजेतेति । तत्र श्रूयते, वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोतीति । सप्तदश पृश्नीनुक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानितरा आलभन्ते, प्रेतरानुत्सृजन्तीति । ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्ष्णस्तान् पर्यग्निकृतानितरा आलभन्ते प्रेतरानुत्सृजन्तीति । तत्र सैव चिन्ता । किमुक्ष्णामुत्सर्गे आरण्यवत्कर्मशेषप्रतिषेधः, अथ वा प्राजापत्यवत्संस्कारकर्मप्रतिषेधः । तेषां च सुत्यासु प्रतिप्रसवः, त्रींस्त्रीनुक्ष्ण एकैकस्मिन्नहन्यालभन्ते, पञ्चोत्तम इति । यदि कर्मशेषप्रतिषेधः प्रतिवर्षमन्य उक्षाणः । अथ संस्कारप्रतिषेधः, ततस्त एव पञ्चवर्षाण्युपरुध्यन्ते, पुनः पुनः संस्क्रियन्ते । अन्त्यासु सुत्यास्वालभ्यन्त इति ।

---

इह नास्तीत्याशङ्कावचनमुपपद्यत एवेति ॥ ५३ ॥

'सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोति, सप्तदश पृश्नीनुक्ष्णः' इति पूर्वासु त्रिहायनीषु या देवता साऽत्रानुषज्यते । तस्माद्द्रव्यदेवतासंयोगाच्चतुस्त्रिंशत्कर्माण्येतानि । द्वितीयं वाक्यं 'तान्पर्यग्निकृतान्प्रोक्षितान्, इतरा आलभन्ते, प्रेतरानुत्सृजन्ति' इति । तत्र तानिति प्रकृताः परामृश्यन्ते । इतराशब्देन वत्सतर्य उच्यन्ते । तासामालम्भविशसनादि कृत्स्नं चोदकप्राप्तं क्रियते । अतस्तासु संदेह एव नास्ति । 'प्रेतरानुत्सृजन्ति' इत्यनेनानड्वाह उच्यन्ते । तेष्वेव संदेहः । किं पर्यग्निकरणान्ताङ्करीत्याऽनड्वाह एकवाक्यतां गत्वा चोदकेनाङ्गानि न गृह्णन्ति, यथाऽऽरण्याः । उत प्राजापत्यानामिव प्रातःसवनकाले संस्काराणां प्रतिषेध इति ।

---

१ त्रिवत्साः—त्रिवत्सरा इत्यर्थः । २ अप्रवीताः—अप्रसूता इत्यर्थः । ३ पृश्नीन्—अल्पशरीरानित्यर्थः । ४ उपपद्यत एवेति—तस्मादयुक्तमेवेदं लिङ्गं परमतत्वेन नेयमिति वार्तिककाराशयः । वस्तुतस्तु प्राजापत्यानां क्रतुपशुभिः सहकरणपक्षे 'सह पशूनालभते वपानामभिघृतत्वाय' इत्येवमुत्कर्षपक्षेऽभिघारणाभावमात्रदर्शनमुपपद्यते । पर्यग्निकरणान्ताङ्करोतिविधाने तु वपानामेवाभावादभिघारमात्राभावदर्शनमसमञ्जसं स्यात् । अत एतल्लिङ्गाभिप्रायकमेव च 'वपानां चानभिघारणस्य दर्शनात्' इति सूत्रं, ननु भाष्यकारोक्तलिङ्गाभिप्रायकमित्येवं श्रीखण्डदेवाभिप्रायः ।

किं तत्र प्राप्तम् । पञ्चशारदीयास्तथेति चेत् । इति चेत्पश्यसि । कथम् । पञ्च शारदीया इति । पञ्च शारदीयास्तथा, यथाऽनन्तराः प्राजापत्याः संस्कारप्रतिषेध इत्यर्थः । एवं प्रकृतप्रत्ययो भवति । स एवमनुग्रहीष्यते । इतरथा प्रकृतहानमप्रकृतप्रत्ययश्च भवेत् । एवं च तांश्चैवोक्ष्ण इत्यपेक्षावचनं युक्तं भविष्यतीति । प्रायश्चित्तविधानं च, यदि कूटः काणो वा भवेद्बार्हस्पत्यं चरुं निर्वपेत्, यदि प्रपतेद्वायव्यं चरुं, यद्यवसीदेन्नैर्ऋतं चरुमिति । निरुद्धानामेतानि निमित्तान्युत्पद्येरन् । तस्मात्संस्कारप्रतिषेधः ॥ ५४ ॥

## न चोदनैकवाक्यत्वात् ॥ ५५ ॥ सि०

नैतदेवं, संस्कारप्रतिषेध इति । कथं तर्हि । कर्मशेषप्रतिषेधः । कुतः । चोदनैकवाक्यत्वात् । सप्तदश मारुतीरुपाकरोतीति कर्मचोदनैषा । द्रव्यदेवतासंबन्धात् । तयैकवाक्यमेतत्, सप्तदश पृश्नीनुक्ष्ण इति । कथं ज्ञायते । सप्तदश पृश्नीनुक्ष्ण इत्येतावदपरिसमाप्तम् । तत्पूर्वापेक्षया परिसमाप्यते, मारुतानालभत इति ।

एवं सत्यनुषङ्गोऽवश्यं भवति । तथा च समत्वाद्वाक्यभेदः । किमुच्यते चोदनैकवाक्यत्वादिति । आह । यद्यसावस्य शेषत्वेनापेक्ष्यते

---

किं तावत्प्राप्तम् । संस्काराणां प्रतिषेधोऽयम्, अस्मिन्कालेऽनडुहामालम्भादयो न कर्तव्याः संस्कारा इति । यथा प्राजापत्यानाम् । त्रींस्त्रीनुक्ष्ण एकैकस्मिन्नहन्यालभेतेति सुत्यासु प्रतिप्रसव इति । यथा 'ब्रह्मसाम्न्यालभते' इति । कर्मशेषप्रतिषेधे तु 'तांस्तान्' इति च कर्मान्तरं कल्प्येत प्रतिसंवत्सरम्[१]। 'त्रींस्त्रीन्' इति च । तत्र बहुदृष्टं कल्प्येत । संस्कारप्रतिषेधे तु तेषामेव द्वितीये[२] संस्कारमात्रं विधीयते न याग इति ॥ १४ ॥

'सप्तदश मारुतीः पृश्नीरुपाकरोति इति' द्रव्यदेवतासंयोगाद्यागचोदनैषा । 'सप्तदश पृश्नीनुक्ष्णः' इत्यस्य सापेक्षत्वान्निराकाङ्क्षीकरणेन भवितव्यम् । तत्र 'मारुतीरालभते' इति मनसि विपरिवर्तमानेनैव निराकाङ्क्षी क्रियते । अत्र च द्वयी गतिः ।

---

१ इति चेति—कर्मान्तरं कल्प्येतेत्यस्यानुषङ्गः । २ द्वितीये—द्वितीयादिसंवत्सर इत्यर्थः । एवं पञ्चमेऽपि संवत्सरे प्रतिसंवत्सरं पर्यग्निकृतानामेवानडुहां सुत्यास्वालम्भमात्रविधानं, न तु यागान्तरविधानमित्यपि लाघवं ज्ञेयम् ।

ततोऽनुषङ्गः। अथायं तस्य, तत एकवाक्यत्वम्। इदं तस्य शेषत्वेनापेक्षिष्यामहे। एतच्चात्र युक्तं, यदयं तस्य शेषः स्यात्, नासावस्य। तच्छेषत्वेऽपेक्षामात्रम्। इतरत्रापेक्षाऽनुषक्तव्यं[1] च। अर्थेन च संबध्येत। सप्तदश पृश्नीर्मारुतीरुपाकरोति, सप्तदश च पृश्नीनुक्ष्ण इति चार्थो न वक्तव्यः। प्रत्ययादेव गम्येत। तस्मादेकेनानेन वाक्येन चतुस्त्रिंशदेतानि कर्माणि चोद्यन्ते। तेषां सप्तदशानां पर्यग्निकरणान्त उत्सर्गः क्रियते। सप्तदशसु यथाप्रकृति। एवमुत्तरास्वपि चोदनासु। न चोत्सृष्टानां कर्मान्तर उपयोगो युज्यते। अप्रत्वाद्यातयामत्वाच्च[2]। तस्मादारण्यवत्कर्मशेषप्रतिषेधः। अन्ये चान्ये चोक्षाणः। पूर्वेषामुक्ष्णामभावात्प्रकृतहानम्। प्रायश्चित्तमप्युपाकृतानां प्रागुत्सर्गात्। अपेक्षावचनमपि तेषामभावादन्यांस्तादृशानेवापेक्ष्य भवेत्, पृश्नीन्मारुतांश्च। यथा

यदि वाऽनड्डुहः प्रति 'मारुतीरालभते' इत्यनुषज्यते। अथवा 'मारुतीरालभते' इत्येतत्प्रत्यनड्वाहो नीयन्ते। तत्रानड्वाहः सापेक्षाः। यस्मिन्नेव[3] क्षणे त्रिहायन्यः संबध्यन्ते, तस्मिन्नेवानड्वाहोऽपीति। एवं परस्परापेक्षितः संबन्धो भविष्यति। एकवाक्यत्वं च। इतरथा पूर्वस्मिन्वाक्ये निराकाङ्क्षीकृतस्य[4] पुनराकाङ्क्षा कल्पनीया। ततः पुनः संबन्धः।

तस्मादेकेन वाक्येन चतुस्त्रिंशत्कर्माणि विधीयन्ते। ननु पूर्वपक्षवाद्यपि चतुस्त्रिंशत्कर्माण्येकवाक्यत्वं चेच्छत्येव, कर्मशेषप्रतिषेधं नेच्छति। न चानेन[5] स निराक्रियते। तस्मात्[6]कथमेतत्। प्राजापत्येषु यः संस्कारप्रतिषेधः स 'ब्रह्मसाम्न्यालभते' इत्यस्य सामर्थ्यात्। अस्मिन् सत्यनुवादो वा प्रतिषेधो वा 'पर्यग्निकृतानुत्सृजन्ति' इति। इह[7] तु न शक्यः सुत्याकाले प्रतिप्रसवः कर्तुम्। तत्र यदालभते तान्पञ्च, तांश्चोत्तमेऽहनीति वाक्यभेदः स्यात्। एवं त्रींस्त्रीनित्यपि योज्यम्। तस्मादेतत्सुत्याकालिकं कर्मान्तरम्।

अपि च यस्य[8] संस्काराः प्रतिषिध्यन्ते, तस्य द्वितीये संवत्सरे पर्यग्निकरणं न

१ अपेक्षयाऽनुषक्तव्या—ग.। २ 'यातयामत्वाच्च' इति यत्सूत्रत्वेन काशीमुद्रितपुस्तक एव प्रकाशितं तदनवधानमूलकमिति ध्येयम्। ३ यस्मिन्निति—अत इति पूर्वं शेषः। ४ भूतस्य—च. ज.। ५ अनेन स इति- भाष्यकारीयेणैकवाक्यत्वव्याख्यानेन पूर्वपक्ष्यभिमतः संस्कारप्रतिषेध इत्यर्थः। ६ अतः कथमेतत्सूत्रं व्याख्येयमित्याह—तस्मादिति। ७ इहत्विति—'त्रींस्त्रीन्नवहमालभेत पञ्चोत्तमेऽहनि' इति वाक्य इत्यर्थः। ८ यस्य—मते, इति शेषः।

तामेव यवागूं त्र्यहं पिबतीति । तान्येवौषधानि, स एव तिसिरि-
रिति ॥ ५५ ॥

संस्काराणां च दर्शनात् ॥ ५६ ॥

संस्कारांश्च प्रतिवर्षं दर्शयति । तान् पर्यग्निकृतान् प्रोक्षितानितरा आलम्भन्ते प्रेतरानुत्सृजन्तीति । ननु वचनमेतद्भविष्यतीति । न । वाक्यभेदप्रसङ्गात् । पर्यग्निकरणं करोति, पर्यग्निकृतांश्चोत्सृजन्तीति । अपि च वत्सतरीणामुक्ष्णां च युगपत्पर्यग्निकरणमुच्यते । तद्वत्सतरीषु प्रकृतितः प्राप्तत्वादनूद्यते । इतरेष्वप्राप्तत्वाद्विधीयते । एतन्नोपपद्यते । सत्सु संस्कारेष्वेतदुभयं न युज्यते । यागे च सत्त्वम् । तस्मादुभयत्र यागः ॥ ५६ ॥

( अभिषेचनीयदशपेययोर्भिन्नतन्त्रताधिकरणम् ॥ १४ ॥ )

[ १४ ] दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तत्समानं[२] तन्त्रं स्यात् ॥ ५७ ॥ पू०

राजसूयेऽभिषेचनीयदशपेयावेकाहौ । तत्र चिन्त्यते । किं तयो-स्तन्त्रप्रयोगः, अथवा भेदेनेति । किं प्राप्तम् ।

समानं तन्त्रमनयोः । कुतः । दशपेयस्य क्रयः प्रतिकृष्यते, सह सोमं क्रीणात्यभिषेचनीयदशपेययोरिति । अभिषेचनीयस्य पूर्वकालीनत्वात्तत्क्रयकाले दशपेयक्रयस्य प्रतिकर्षः । स प्रतिकृष्यमाणस्ततः प्राग्भाविनः पदार्थान् प्रतिकर्षति । तदादि वाऽभिसंबन्धात्तदन्तमपकर्षे स्यादिति । अतस्तयोरेकाहयोस्तन्त्रं प्रक्रमः । तन्त्रप्रक्रान्तयोः प्रवृत्ति-तस्तन्त्रमेव समाम्रियुक्ता । तस्मात्समानतन्त्रौ ॥ ५७ ॥

---

प्राप्नोति । तत्तावद्विधातव्यमुत्सर्गश्च । तत्र वाक्यभेदो विवक्षाभेदश्च । एकत्र प्रकृतिप्राप्तमनूद्यते । अन्यत्राप्राप्तं विधीयते । सकृदुच्चरितस्यैतदन्याय्यम् ॥ १५ ॥
[ १६ ॥ ]
अत्राधिकरणमतिक्रम्य लिख्यते ॥ [ १७ ॥

---

१ नैतदेवम्---ग. । २ तस्मात्समानतन्त्रं स्यात्---श्री. । ३ तन्त्रं---ख. ग. । ४ पूर्वकालत्वात्---ग. । ५ ( अ० ५ पा० १ अ० १२ सू० २४ ) । ६ उपक्रमः---ग. । ७ प्रवृत्त्या---ग. । ८ यस्य-मते इति शेषः । ९ एकत्र---वत्सतरीषु । १० अनूद्यते---पर्यग्निकरणमिति शेषः । ११ अन्यत्र-अनड्वत्सु । १२ विधीयत इति---अनडुहां प्रागेकवारं पर्यग्निकरणस्य कृतत्वात्पुनः पर्यग्निकरणाप्राप्तेः पर्यग्निकरणान्तरं विधीयत इत्यर्थः ।

समानवचनं तद्वत् ॥ ५८ ॥

समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्चेति तन्त्रस्य समानत्वाद्यज्ञयोः समानत्वम्, आत्मना भिन्नत्वात् ॥ ५८ ॥

अप्रतिकर्षो वाऽर्थहेतुत्वात्सहत्वं विधीयते ॥ ५९ ॥ सि०

न वा प्रतिकर्षः क्रयस्य । कुतः । अर्थहेतुत्वात् । द्वाविमौ क्रयौ । एकोऽर्थहेतुकोऽन्यः शब्दकृतः । यस्मात्क्रतुप्रवृत्तेर्यज्ञसाधनोपार्जनकाले सोमविक्रयिणा सह संवादः, सोमस्य परिक्रयणं—मूल्यपरिच्छेदः, सोऽर्थादवश्यं करणीयः । तस्मिन्नकृते क्रतोरेव प्रवृत्तिर्न युक्ता । कुतः । क्रतुकाले कदाचित्सोमो न स्यात् । विक्रेता वाऽस्य नार्घेण वा दद्यात् । तथा क्रतुरेव न संवर्तेत । तस्यैतत्सहत्वमुच्यते । किं कारणम् । मुख्यत्वात् । तत्रैव च क्रयो निर्वृत्तकल्पः । मूल्यार्पणमात्रं परिशिष्टम् । यदन्यत्तत्र, कलया ते क्रीणामीत्येवमादि तद्धर्ममात्रम् । परतन्त्रत्वादेव विक्रेतुः । एवं च सति भिन्नकालयोर्यथाकालमेवाङ्गानि भविष्यन्ति । दृष्टश्च तस्मिन्नुपसंवादे क्रयार्थे क्रीणातेः प्रयोगः, देवदत्तेन सहास्माभिर्धान्यं क्रीतम्, उपज्ञा संवृत्तेति । अतस्तस्य संवादः । स च बहिः क्रतोर्वर्तते । तस्मान्नास्ति प्रतिकर्षः । कालभेदाद्यथोक्त एव तन्त्रभेदः ॥ ५९ ॥

पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ६० ॥

पूर्वस्मिंश्चाभिषेचनीयेऽवभृथदर्शनं भवति । कथम् । समानं वा एतद्यज्ञं विच्छिन्दन्ति यदभिषेचनीयस्यावभृथमभ्यवयन्तीति । तदेवमवभृथदर्शनं पूर्वस्मिन्नुपपद्येत, यदि भेदेन तन्त्रप्रवृत्तिः । इतरथा दशपेयान्तेऽवभृथः स्यात् ॥ ६० ॥

दीक्षाणां चोत्तरस्य ॥ ६१ ॥

दशपेयस्य च पृथग्दीक्षाणां दर्शनं, तथाऽभिषेचनीयस्य दीक्षा वर्ध-

---

५८ ॥ ५९ ॥ ६० ॥

---

१ समानत्वात्स्यायज्ञयोः—ग. । २ 'अप्रतिकर्षो वाऽर्थहेतुत्वात् ।'—मु० । ३ वादः—क. ख. । ४ 'दीक्षाणां चोत्तरस्य' इति सूत्रं काशीमुद्रितपुस्तके भाष्यान्तर्गत्या प्रकाशितमपि निर्मूलत्वादुपेक्ष्य यथावत्प्रकाशितं ज्ञेयम् ।

येयुर्यथा दशमेऽहनि दशपेयः संपद्यते, सद्यो दीक्षयति, सद्यः सोमं क्रीणातीति । इतरथा, अभिषेचनीय एव दशपेयस्यापि दीक्षाः स्युः । तत्रैतद्दर्शनं नोपपद्यते ॥ ६१ ॥

यत्तु, समानवचनं तद्वदिति । तत्र ब्रूमः—

समानः कालसामान्यात् ॥ ६२ ॥

एकस्मिन् ऋतावेतौ सोमौ वर्तेते, तत उत्तरे संवत्सरादूर्ध्वम् । एतत्कालसामान्यमपेक्ष्य तत्समानवचनमन्यथोपपद्यत इति । तस्मा-त्तन्त्रभेदः ॥ ६२ ॥

( वरुणप्रघासेष्ववभृथधर्मककर्मान्तरविधानाधिकरणम् ॥ १९ ॥ )

[ १५ ] निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्र-दानविप्रकर्षः स्यात् ॥ ६३ ॥ पू०

वरुणप्रघासेषु श्रूयते, वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवय-न्तीति । तत्र विचार्यते । किं प्रदानविप्रकर्षोऽयमुत कर्मान्तरचोदनेति । किं प्राप्तम् ।

प्रदानविप्रकर्षोऽयम् । कुतः । तदेकदेशत्वात् । वरुणं मत्यामिक्षो-त्पन्ना, मारुत्यामिक्षा, वारुण्यामिक्षेति । सा द्विधा प्रदीयमाना दृश्यते । एकदेशोऽस्या आवापस्थाने, एकदेशः समिष्टयजुरूर्ध्वम् । उभय-त्रापि वरुणदेवता । तेन प्रदानविप्रकर्षो विज्ञायते । पशुवत् । यथा सवनीयस्य पशोः, वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यंदिने, अङ्गैस्तृतीयसवन इति । अवभृथशब्द इदानीं किमर्थः । भक्त्याऽनुवा-दमात्रम् । देशसामान्याद्देवतासामान्याच्च । अथ धर्मातिदेशकोऽग्निहोत्र-

६१ ॥ ६२ ॥ ]

वारुण्यामिक्षोत्पन्ना । तस्या एकदेशः पूर्वं हूयते । एकदेश उत्तरत्र । तयैव संबध्यते वरुणदेवतया । यथा पशोः । अवभृथशब्दो देवतासामान्येन । अथ धर्मातिदेशः कस्मान्न भवतीति चेत् ।

१ आवापस्थाने—आज्यभागस्विष्टकृतोरन्तरेत्यर्थः । प्रधानान्तरसाहित्येनेति यावत् । २ तयैव—ष. मु. । तयैव—स्वीययैवेत्यर्थः । ३ देवतासामान्येनेति—गौण इति शेषः । ४ धर्मातिदेश इति । अवभृथधर्मककर्मान्तरविधिरित्यर्थः ।

एतद्वदेव कस्मान्न भवति । अशक्यत्वात् । अनेनैव प्रदानविप्रकर्षोऽनेनैव धर्मातिदेश इत्यशक्यमेकस्य वाक्यस्य । प्रदानविप्रकर्षं कृत्वा कृतार्थस्य धर्मानतिदेष्टुं न शक्तिरिति ॥ ६३ ॥

अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६४ ॥ सि०

न वाऽयं प्रदानविप्रकर्षः । किं तर्हि । अपनयो निष्कासस्य, पूर्वकर्मणः कर्मान्तरोपदेशः । किं कारणम् । प्रसिद्धेनाभिसंयोगात् । प्रसिद्धेन नामधेयेनावभृथशब्देन संयोगात्, निष्कासेनावभृथमभ्यवयन्तीति । ननु भाक्तोऽयमनुवादमात्रमित्युक्तम् । अनुवादः सन्प्रवृत्तिविशेषकरोऽनर्थकः स्यात् । अतिदेशस्त्वर्थवान् । ननु तत्रापि लक्षणा भवति । अस्तु । लक्षणाऽपि हि प्रवृत्तिविशेषकरत्वादर्थवती । यथाऽग्नौ तिष्ठति, अवटे तिष्ठति । अनेकार्थता तर्हि दोषो भवति । नापूर्वकर्मचोदनायामसौ दोषः । यथा, एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति । कथं पुनरनेन शक्यतेऽपूर्वं कर्म चोदयितुम् । उच्यते । वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्तीति श्रूयते । न चावभृथः शक्यतेऽभ्यवैतुम् । तत्रैवं विज्ञायते, निष्कासेन तुषैश्चावभृथं कर्तुमपोऽभ्यवयन्तीति । यथा शाटकं कर्तुं सूत्राणि वयन्तीति । लक्षणया वा यथा, य एवं विद्वांसः सत्रमुपयन्तीति ॥ ६४ ॥

प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६५ ॥

अथान्यशेषत्वान्निष्कासस्यावभृथगमनं प्रतिपत्तिर्भवत्विति । तन्न । कुतः । कर्मसंयोगात् । अर्थकर्मणा ह्यस्य गुणभूतस्य संयोगो विज्ञायते ।

---

उच्यते । यत्राऽऽख्यातेन कर्म प्रतिपाद्यते, तत्र यन्नाम तद्धर्मातिदेशकं भवति । यथा 'मासमग्निहोत्रं जुहोति' इति । इह तु नामशब्द एव केवलः श्रूयते । स एव कर्म विधास्यति । स एव धर्मातिदेशको भविष्यतीत्यनुपपन्नमेतत् ॥ ६३ ॥

नायं प्रदानविप्रकर्षः । कुतः । अवभृथेन कर्मणा संयोगात् । नन्वनुवाद इत्युक्तम् । असत्यां गतावनुवाद आश्रीयते । अस्ति तु गतिः । लक्षणया धर्मातिदेशको भविष्यति । लक्षणया च यागं प्रतिपादयिष्यति ॥ ६४ ॥

---

१ अप्रवृत्तिकरः—मु० । २ वयन्तीति लक्षणया—मु० । ३ आसीरन्, य एवं विद्वांसः सत्रमुपयन्तीति—ग. । ४ संयोगात्—निष्कासस्येति शेषः ।

तृतीयासामर्थ्यात् । प्रतिपत्तौ हि द्रव्यप्राधान्याद्द्वितीयया निरदेक्ष्यत। यथा, चात्वाले कृष्णविषाणां प्रास्यतीति । अथवाऽवभृथशब्दकेनास्य कर्मणा संयोगात् । यदि च प्रतिपत्तिः स्यात्ततोऽवभृथशब्दोऽनर्थक एव भवेत् । अयमवभृथशब्दो धर्मानतिदिशेत् । न च प्रतिपत्तौ प्रधानकर्मणो धर्माः शक्या अतिदेष्टुम् । वैषम्यात् । तदा ह्यवभृथेन प्रतिपादयन्तीत्युक्तं स्यात् । न चावभृथेन किंचित्प्रतिपादितं, यदतिदिश्येत ॥ ६५ ॥

( प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वाधिकरणम् ॥ १६ ॥ )

## [ १६ ] उदयनीये च तद्वत् ॥ ६६ ॥ पू०

ज्योतिष्टोमे श्रूयते, प्रायणीयस्य निष्कासे, उदयनीयमनुनिर्वपतीति । तत्राप्यवभृथवन्निष्कासो गुणतः स्यात् । तत्रापि ह्युदयनीयशब्दकेन प्रधानकर्मणा संयोगो भवति, प्रायणीयस्य निष्कास उदनीयमनुनिर्वपतीति । न च शक्यत उदयनीयो निर्वप्तुम् । अतस्तयेहापि संबन्धोऽभिधीयते, निष्कासेनोदयनीयं कर्तुं हविष्यं निर्वपतीति । लक्षणया वा पूर्ववत् । अपि च द्वितीयासंयोगात्कर्मणः प्राधान्यं विज्ञायते । निष्कासस्य सप्तमीयोगाद्गुणभावः । प्रतिपत्तौ तु कर्म गुणतः स्यात्, निष्कासः प्रधानतः । तत्र कथं तृतीयासंबद्धं भवेत् । निष्कासो द्वितीयासंबद्धः । ननु प्रधानभूतेऽपि सप्तमी भवति । यथा, आगारे गावो वासयन्तां, प्राकारे कुसुमानीति । भवति, यत्र प्रमाणान्तरेण द्रव्यं प्रधानं विदितम् । यत्र तु शब्दगम्य एवार्थस्तत्र गुणभावो युक्तः । यत्कारणम् । कारकविभक्तिरियम् । कारकं च क्रियार्थं, भूतत्वात् । भूतभव्यसमुच्चारणे हि भूतं भव्यार्थं भवति । दृष्टार्थ-

---

न चेयं तुषनिष्कासस्य प्रतिपत्तिः । कथम् । यथा तेन कृतं तथाऽनेनापि कर्मणा । तत्र च द्रव्यं गुणतो यागः प्रधानतः । इह तु विपरीतं कथं तद्भावमाप्नुयात् ॥ ६५ ॥

---

१ शब्देन—ग. । २ तथा हि—क. ख. मु. । ३ विज्ञायते—ग. । ४ निष्कासे उ—ख. । ५ स्वागारे—क. ख. । ६ प्रावारे—क. ख. । ७ तेन—प्रसिद्धेनावभृथेनेत्यर्थः । ८ आप्नुयादिति—अतो यस्यैव नामधेयस्य प्रसादात्कर्मान्तरमिति सिद्धं तत एवैतदर्थकर्मेत्यपि सिध्यतीत्यभिप्रायः ।

त्वात् । भव्यस्य तु भूतार्थत्वेऽदृष्टार्थता कल्प्या स्यात् । न च दृष्टे सत्यदृष्टकल्पना संभवति ॥ ६६ ॥

प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६७ ॥

प्रतिपत्तिर्वा, उदयनीयः स्यान्निष्कासस्य, न गुणभावः । कुतः । अकर्मसंयोगात् । नात्र निष्कासस्योदयनीयकर्मणा संयोगः । केन तर्हि । निर्वापेण । निष्कासे निर्वपतीति । ननु मुख्यत्वादुदयनीयस्यै-तेन संबन्धो न्याय्यः । न हि । मुख्यसंबन्धे साकाङ्क्षमेतद्भवति, निष्कासे उदयनीयं किं करोति । तत्रावश्यं निर्वपतीत्यनेन परिसमापयि-तव्यम् , उदयनीयं निर्वपतीति । न चोदयनीयस्य निर्वापेण सह सं-बन्धोऽस्तीत्युक्तम् । तदेतदवश्यं तथैवाऽऽपद्यते, उदयनीयं कर्तुं प्राय-णीयस्य निष्कासे हविष्यं निर्वपतीति । निष्कासश्च प्रायणीयशेषः । निष्कासशब्दश्च शेषवचन एव, यदुखायां ऊर्ध्वं तदनेनोच्यते । शेषस्य चार्थान्तरगमनं प्रतिपत्तिः । तच्च सामवायिकमङ्गं भवति । तच्च प्रधा-नेन दृष्टसंबन्धम् । आरादुपकारकत्वेऽनुमेयसंबन्धम् । सप्तमी च विभ-क्तिः प्राधान्ये दृष्टा । तस्मात्प्रतिपत्तिः । नन्वेवमपि कर्मान्तरचोदनाऽ-वभृथवत्प्राप्नोति । भवेत्, यदि न चोदितं कर्म भवेत् । चोदित-स्तूदयनीयः, आदित्यः प्रायणीयश्चरुर्भवति, आदित्य उदयनीयो द्वितीं प्रज्ञात्या इति । तं कर्तुं प्रायणीयनिष्कासे निर्वपेदिति तत्रैव प्रज्ञायते । तस्मान्न कर्मान्तरचोदनेयम् ॥ ६७ ॥

अर्थकर्म वा शेषत्वाच्छ्रपणवत्तदर्थेन विधानात् ॥ ६८ ॥ सि०

अर्थकर्म वा निष्कासे निर्वापो न प्रतिपत्तिः । कुतः । शेषत्वात् । निर्वापं प्रति शेषभूतो निष्कासः । गुणभूत इत्यर्थः । कथं ज्ञायते । तदर्थेन विधानात् । तदर्थेन शब्देन सप्तम्या विभक्त्या विधानात् । सप्तमी हि विभक्तिराधारे भवति । आधारश्च क्रियायास्तत्कारकाणां च विशिष्टानां धारणे वर्तते । तस्माद्गुणभूतः । ननु निष्कासो धारणेऽ-समर्थः । स्थाल्येव तत्र धारणं करोति । पात्रीवदेतद्द्रष्टव्यम् । तद्यथा

[ ११ ॥ १७ ॥

१ कर्मसंयोगः—ग. । २ निष्कासेन—ग. । ३ लवनके—क. ख. । ४ परिशिष्टानां—ग, ।

पात्र्योदनं धारयति, पात्रीं भूमिः । न च पात्री नाऽऽधारः । तत्रै-तत्स्यात्, न दृष्टमुपकारं करोतीति । पात्र्यपि तथा ।

अपि च हविष्या उदयनीयानिर्वृत्त्या प्रयोजनवन्तः । ते यदि नि-ष्कासेन संस्क्रियन्ते निष्कासोऽपि प्रयोजनवान् भवति । अथ तु निष्कासः संस्क्रियते, न च तेन कश्चिदर्थः । न हि तेन किंचित्करिष्यते । ननु तेनापि प्रायणीयो निर्वर्तितः । तदर्थस्यापि संस्कारोऽर्थवान् भविष्यति । नैवम् । उपयुज्यमानसंस्कारो हि गरीयानुपयुक्तसंस्कारात् । अपि च निष्कास-संस्कारोऽयं भवन् प्रायणीयस्याङ्गं भवेत् । तत्रोदयनीयसंनिधिर्बा-ध्येत । तस्मादुदयनीयहविष्याणामयं निष्कासलंसर्गेणादृष्ट उपकारः क्रियते श्रयणवत् । तद्यथा, पयसा मैत्रावरुणं श्रीणाति, धानाभिर्हारि-योजनमिति श्रयणैः सोमस्य ॥ ६८ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्य एकादशाध्यायस्य द्वितीयः पादः ॥

---

अथैकादशाध्यायस्य तृतीयः पादः ॥

---

( वचनेनाङ्गप्रधानयोर्भिन्नकालकत्वाद्यधिकरणम् ॥ १ ॥ )

[१] अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥ सि०

अङ्गानां मुख्यकालत्वं मुख्यदेशत्वं मुख्यकर्तृत्वं चोक्तम् । अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वमिति । एवं च

---

६८ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकाया-मेकादशाध्यायस्य द्वितीयः पादः ।

---

१ हविष्या इति—उदयनीयार्थे निरुप्ता इत्यर्थः । २ संस्कारो गरी—क. ख. । ३ निष्कास-शब्दस्थाने सर्वत्र निष्काष इति पाठो—ग. पुस्तके । ४ ( अ० ११ पा० २ अ० २ सू० ८ )।

सर्वत्र प्राप्तम्। वचनादन्यकालत्वम्। यत्र वचनं तत्रान्यकालत्वमन्यदेशत्वमन्यकर्तृत्वमपि भवति। यथा, पूर्वेद्युरमावास्यायां वेदिं करोति, अवभृथेन चरन्ति। अग्नौ सौत्रामण्यां, दक्षिणाभेदादन्यकर्तृत्वं विज्ञायते, बडवा दक्षिणेति ॥ १ ॥

( आधानस्य तन्त्रताधिकरणम् ॥ २ ॥ )

**[ २ ] द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥ सि०**

वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति श्रूयत आधानम्। तत्कर्मार्थमित्यभ्युपगमः। किं कारणम्। अफलत्वात्। आहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नावन्वाहार्यश्रपणादि करोतीति तेषामग्नीनां कर्मसूपयोगः। तत्र विचार्यते, किं तस्य तस्य कर्मणोऽर्थेन भेदेनाऽऽधानं कर्तव्यमथवा सर्वेषामिष्टिकपाशुकसौमिकदार्विहोमिकानां कर्मणां तन्त्रमिति। किं प्राप्तम्। द्रव्यस्य—अग्नेः, अकर्मकालनिष्पत्तेः, वसन्ते ग्रीष्मे शरदीति, प्रयोगः—आधानं सर्वार्थं स्यात्। कुतः। स्वकालत्वात्। स्वोऽस्य कालो वसन्तादिः। न कस्यचित्कर्मणः काले श्रूयते। तत्र न गृह्यते विशेषोऽस्मै कर्मण इदमाधानं नास्मा इति। अगृह्यमाणविशेषत्वाच्च तन्त्रभावो न्याय्यः।

नन्वाधानानन्तरं यस्य कर्मणः प्रयोगस्तदर्थं तदाधानमिति गृह्यते विशेषः। स खलु गृह्यते विशेषः। किंत्वानन्तर्यमकारणम्। यदाऽपि सर्वार्थं तदाऽप्यवश्यं कस्यचित्कर्मणः पूर्वं प्रयोगः, यौगपद्यस्यासंभवात्। तदेकेनाऽऽनन्तर्यं समो हेतुः, सर्वार्थत्व एकार्थत्वे च। समत्वादहेतुर्भवति। न वाऽऽधानेन कर्माण्युपक्रम्यन्ते। यथा प्रणयनेन। यद्युपक्रम्येरंस्ततो यदनन्तरं कर्म तस्योपक्रमो विज्ञायेत, नोत्तरेषाम्। तेन व्यवहितत्वात्तदपवर्गे चापवृज्येत, प्रणयनवत्। न ह्यनेन किंचित्कर्म प्रक्रम्यते। अप्राप्तकालत्वात्। अत उत्तरकाला हि कर्मश्रुतयः। किं

*अतोऽष्टावधिकरणान्यतिक्रम्य लिख्यते ॥ [ १ ॥

१ आधानमिति। नास्मा इ०—अगृह्यमाण—ग. मु.। २ पूर्वप्रयोगः—क. ख.। ३ न च—ग.। ४ तत इति—आदादिभिः प्रकृतिरर्थः।

तर्ह्यनेन क्रियते । द्रव्यमर्ज्यतेऽग्निविशेषः । यथा कश्चिल्लोहं सुवर्णं वाऽर्जयेदनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति । स तेन यथाकालमिष्टं दात्रादि करोति । एवमयमग्निविशेषमर्जयति । अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति । तत्र न गृह्यते विशेषोऽस्मै कर्मण इदमर्जितम्, अस्मै नेति । सर्वेभ्यश्च युज्यते । तस्मात्सर्वार्थम् । अपि च नित्यकाम्यनैमित्तिकानि कर्माणि यथोपपत्तिकालानि । तेषां वसन्ते आहितेनाग्निना कार्यम् । न चान्यस्मिन् ऋतौ शक्यो वसन्तेऽग्निराधातुम् । सोऽयमसंयोगो भवति भेदेनाऽऽधाने । अथ तु सर्वकर्मणामर्थे तन्त्रमाधानं, नैष विरोधो भवति । तस्मादपि तन्त्रम् ॥ २ ॥

( ज्योतिष्टोमे त्रयाणां पशूनामर्थे यूपतन्त्रताधिकरणम् ॥ ३ ॥ )

## [ ३ ] यूपश्चाकर्मकालत्वात् ॥ ३ ॥ सि०

ज्योतिष्टोमे पशवः, अग्नीषोमीयसवनीयानुबन्ध्याः तेषां यूपः, खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नातीति श्रुतः । तत्र विचार्यते । किं त्रयाणां पशुबन्धानां भेदेन यूपः, अथवा तन्त्रमिति । किं प्राप्तम् । भेदेनेति । किं कारणम् । अग्नीषोमीये तावत्प्रयोगवचनेन गृह्यते यूपः । उत्तरयोरपि चोदकेन प्राप्यते । कर्मविशेषावसायिनश्चोदकप्रयोगवचना भेदेन यूपं प्रापयन्ति । तस्माद्भेदः । एवं प्राप्ते, उच्यते । यूपश्च तन्त्रं भवेत् । कुतः । अकर्मकालत्वात् । नास्य पशुकर्मकाल उत्पत्तिः । किं तर्हि । पृथक्काले, दीक्षासु यूपं छिनत्ति, क्रीते वा राजनीति । तत्रोत्पद्यमानस्य न गृह्यते विशेषोऽस्मै पशुबन्धाय यूपोऽयमस्मै नेति । सर्वेभ्यश्च प्रयुज्यते । तस्मात्सर्वार्थो भवति ॥ ३ ॥

## एकयूपं च दर्शयति ॥ ४ ॥

एकं यूपं त्रयाणामपि पशूनां साधारणं दर्शयति । सवनीये पशौ त्रिवृता यूपं परिवीयेति, त्रिवृता परिव्याणं विदधाति । यदि नाना यूपा भवेयुस्ततः पूर्वस्य यूपस्यावर्गाद्यूपान्तरे चोदकेनैव प्राप्ते त्रिवृता परिव्याणं न विधातव्यं भवेत् । अथ तन्त्रं यूपः, ततः संस्कारा अपि

---

—२ ॥ ३ ॥

---

१ रौहितके—ग. मु. । २ श्रुतेः—मु. । ३ कर्मशेष—क. ख. । ४ भवेत् । अकर्म—क. ख. ।

तन्त्रमित्यग्नीषोमीय एव परिव्यानस्य कृतार्थत्वात्पुनः सवनीये परिव्याणं न प्राप्नोति । तद्विधातव्यं भवति । विधीयते च । तस्मादपि तन्त्रम् ॥ ४ ॥

( यूपसंस्काराणां तन्त्रताधिकरणम् ॥ ४ ॥ )

[ ४ ] संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ पू०

यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते, यथा प्रोक्षणमञ्जनमुच्छ्रयणं परिव्याणं च, तेषु चिन्त्यते । किं तस्य तस्य पशोर्भेदेन कर्तव्याः, अथवा तन्त्रमिति । किं प्राप्तम् । संस्कारास्त्वावर्तेरन् यूपस्य, न यथा यूपास्तन्त्रं तथा स्युः । किं कारणम् । अर्थकालत्वात् । अर्थः पशोर्नियोजनम् । तत्काला एते संस्काराः । तत्र गृह्यते विशेषः । यस्य पशोर्नियोजनकाले कृतास्तदर्था इति । इतरयोश्च पश्वोरप्राप्तकालत्वात्तादर्थ्येन नास्ति प्रयोगः । तस्मादावर्तेरन् । यथाऽग्नेः संमार्जनम् ॥ ५ ॥

तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनादन्यकालत्वम् ॥ ६ ॥ सि०

सत्यमावर्तेरन्, यद्येते नियोजनकाला भवेयुः । तत्कालास्त्वेते-दीक्षाकालाः । कथं ज्ञायते । यूपकर्मत्वात् । नैते नियोजनार्थाः । यूप एतैः क्रियते । यूपो नियोजनार्थः । स च दीक्षासु कर्तव्यः । दीक्षासु यूपं छिनत्तीति वचनात् । संस्कारैश्च स क्रियते । तस्माद्दीक्षाकाला एवैते संस्काराः । ननु छेदनमात्रं तत्र यूपस्य श्रूयते, न यूपक्रिया । उच्यते । न किंचिद्द्रव्यं यूपाख्यमस्ति, यस्य छेदनमुच्येत । तदेतदेवं ज्ञायते । दीक्षासु छेदनादिभिर्यूपं करोतीति । छेदनग्रहणं च मुख्यत्वात्प्रदर्शनार्थम् । यत्कारणम् । नासौ छेदनेन केवलेन यूपो भवतीति । एवं चेद्दीक्षाकाला एवैते संस्काराः । सर्वार्थानां च सतां वचनात्केषांचिदन्यकालत्वं कृतम् । यथाऽऽग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति । तस्माद्यूपवत्संस्कारा अपि तन्त्रम् ।

४ ॥ १ ॥

१ सवनीय—क. ख. । २ प्रसङ्गः-ग. ।

यूपकर्मत्वादित्यस्यापरा व्याख्या । यूपकर्म तत्र एते संस्काराश्छेदनाद्याः । यूपोऽयमेवं क्रियते तक्षणादिव्यापारेण । यथा त्वाजपथेन सम्राट् सत्कृतश्चत्तस्य पुनः क्रिया निरर्थिका । तस्मादनावृत्तिः । नन्वेवं सति निरूढपशावपि कामं स एव यूपः कर्तव्यो भवेत् । बाढं भवेत्, यदि निरिष्टकेन यागप्रतिषेधो न स्यात् । अस्ति तु स प्रतिषेधः । तस्मान्न भवति । यथा, न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते । अथवा यदर्थं स यूपः कृतस्तत्कर्मापवृक्तम् । तस्यापवर्गे यूपोऽप्यपवृक्तः ॥ ६ ॥

सकृन्मानं च दर्शयति ॥ ७ ॥

त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोतीति, परिव्याणेन यूपधर्माननुक्रममाणः सकृन्मितं खातं यूपं दर्शयति । इतरथा मुख्यत्वात्प्रोक्षणेनोपक्रमेत । आनन्तर्यार्थमिति चेत् । न । प्रकृतितः सिद्धत्वात् । तस्मादपि तन्त्रं संस्काराः ॥ ७ ॥

( स्वरुतन्त्रताधिकरणम् ॥ ५ ॥ )

[ ५ ] स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥८॥ पू०

अस्ति स्वरुः, यूपस्य स्वरुं करोतीति श्रुतः । स किं सर्वपशूनां तन्त्रं भेदेन वेति । किं प्राप्तम् ।

स्वरुः खलु तन्त्रे तन्त्रेऽपवृज्येत । अस्वकालत्वात् । नास्य स्वः काल उत्पत्तौ । कर्मकालेऽयमुपादीयते, स्वरुणा स्वधितिना वा पशुं समनक्तीति । यस्य पशोः समञ्जनकाल उपात्तस्तदर्थोऽसाविति गृह्यते विशेषः । तस्माद्भेदः । ननु यूपस्य स्वरुं करोतीति स्वेकालैवास्योत्पत्तिः[1] । न खल्वेषाऽप्यन्तःप्रयोगेव । अपि च कार्यवचनोऽत्र स्वरुशब्दः । स्वरुं करोति, स्वरुकार्यं करोतीति[2] । यत्कारणम् । स्वरुर्न ज्ञायते । स्वरुकार्यं तु ज्ञायते पशोरञ्जनम् । ननु क्रत्वन्ते स्वरोः प्रतिपत्तिर्दृश्यते, संस्थिते सोमे प्रस्तरं प्रहरति, स्वरुं चायज्ञवेशसायेति[3] । सत्यमस्ति दर्शनम् । तत्तु

---

१ ॥ ७ ॥

---

१ स्वकाले चास्योत्पत्तिः । न स्वकाल एवोत्पत्तिः प्रयोगो वा—ग. । २ करोति—क. ख. । ३ वा यज्ञ—क ख. । च यज्ञावेशसाय—ग.

स्वरुमात्रस्य, न तु स्वरुविशेषस्य । तत्राग्नीषोमीय उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनं सोमाङ्गे स्यात्, अथवा चोदकप्राप्तस्यानुबन्ध्याकालस्येति संशये, किं न्याय्यं, यदनुबन्ध्याकालस्य दर्शनं भवत्तन्त्रतया प्रवृत्तस्येति । कुतः । यत उक्तो न्यायः स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वादिति । न च दर्शनं केवलं साधकं भवति । यथासंभवं तु दर्शनं कल्पितम् । तदेवं यथा प्रस्तरस्यानुबन्ध्याकालस्य दर्शनं तद्वत्स्वरोरपि भविष्यतीति ॥ ८ ॥

साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सि०

नैतदस्ति, प्रतितन्त्रं स्वरुभेद इति । किं तर्हि । साधारणः स्यात् । कुतः । यतोऽयमनुनिष्पद्यते । यूपः साधारणः सर्वपशूनाम् । तस्य साधारणत्वादयमपि साधारण एव न्याय्यः । यथैक एव यूपः सर्वपशूनां साधारणः, एवमयमप्यगृह्यमाणविशेषत्वात्साधारणो भविष्यति । नैतद्युक्तम् । अङ्गप्रतिकर्षवचनादगृह्यमाणविशेषत्वाद्यूपस्य साधारण्यमुपपद्यते, न तु स्वरोः प्रतिकर्षे किंचन वचनमस्ति, यतोऽगृह्यमाणविशेषत्वादस्यापि साधारण्यमुपपद्येत । यदेतत्, यूपस्य स्वरुं करोतीति तदन्तःप्रयोगसंबद्धं स्वरुकार्यमञ्जनं कर्तुं यमुपादत्ते तं यूपादिति । न चान्यस्य साधारण्येनास्य साधारण्यं युक्तम् । संभवन्ति ह्येकस्यापि बहवः शकला इति । चोदकप्रयोगवचनाश्च भिद्यमाना अन्तःप्रयोगसंबद्धमङ्गमात्मीयं प्रतितन्त्रं प्रापयन्ति गृह्यमाणविशेषत्वादित्यतो भेद एव युक्त इति ।

तत्रोच्यते । यद्यप्यस्य नास्ति प्रतिकर्षवचनं प्रत्यक्षम् । न चान्यस्मिन् प्रतिकृष्यमाणेऽन्यस्य प्रतिकर्ष इति नैतद्युक्तम् । असंबद्धयोर्हि तदेवं भवति, न संबद्धयोः । अयं च शकलो यूपमनुनिष्पद्यते । तदस्य यूपप्रतिकर्षादेव सिद्धः प्रतिकर्षः । अतो यत्र यूपस्तत्रायमपि । यच्च, यूपस्य स्वरुं करोतीत्यन्तःप्रयोगसंबद्धा श्रुतिरिति । तदपि

८ ॥

१ उपपद्यते—ग. । २ इति । नैतद्युक्तम्—सु० ।

नैवम्। द्वौ हि कालौ द्रव्यस्य। एक उपादानकालः, एक उपात्तस्य प्रयोगकालः। यद्धि ह्युपादातव्यं न हि तदनुपादाय कश्चित्प्रयोगमारभते। न ह्यनुपादाय व्रीहीन्, प्रस्तुत्य प्रयोगं व्रीहीन् मृगयति। एवंकुर्वाणस्य प्रयोग एव न संवर्तेत। अयं च यूपं छिद्यमानमनुनिष्पद्यते। अतो यत्र छेदनं तत्रायमपि। यद्यप्येकस्यापि यूपस्य बहवः स्वरवः संभवन्तीति। स्यादेवं, यदि प्राथम्यविशिष्टस्य नोपादनं भवेत्। विशिष्टस्य तूपादानमुक्तं, [1]ततो यः प्रथमः शकलः परापतेत्स स्वरुः कार्य इति वचनात्। बहूनां च प्राथम्याभावाद्बहवो न संभवन्ति। तस्मादेक एव साधारणः स्वरुरिति ॥ ९ ॥

## सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥

सोमान्ते चास्य प्रतिपत्तिर्दृश्यते। संस्थिते सोमे प्रस्तरं प्रहरति स्वरुं [2]चायज्ञवेशसायेति। तत्साधारण्य एवोपपद्यते। तत्रापवर्गे ह्यग्नीषोमीयान्त एव स्यात्। तस्मादपि साधारणः ॥ १० ॥

## [3]तत्कालो वा प्रस्तरवत् ॥ ११ ॥

इति यदुक्तं तत्परिहर्तव्यम् ॥ ११ ॥

## न [4]वोत्पत्तिवाक्यत्वात्प्रदेशात्प्रस्तरे तथा ॥ १२ ॥

नास्यानुबन्ध्याकालस्य स्वरोः प्रहरणम्। किं कारणम्। इदमेव प्रहरणस्योत्पत्तिवाक्यं, सोमान्ते प्रस्तरं प्रहरन्ति, स्वरुं चायज्ञवेशसायेति। अनेन क्रमादग्नीषोमीयकालस्य प्रहरणं गम्यते। स यदि साधारणस्ततः सर्वपशूनां कृतार्थे कर्मण्यस्वोत्सर्गविशेषस्याग्नौ प्रहरणस्य दर्शनमुपपद्यते। अथ तु पृथक् स्यात्ततोऽग्नीषोमीयस्यान्त एव दृश्येत। अथ वचनमिदं कस्मान्न भवति। अग्नीषोमीयान्ते प्राप्तस्य सोमान्ते वचनात्। नैतदेवम्। वचनेन द्वावुत्सर्गस्य विशेषावुच्येयाताम्। अग्नौ च प्रहरणं, सोमान्ते च। तथा च वाक्यभेदः स्यात्। तस्मान्नैतद्वचनम्। यत्तु

---

९ ॥ १० ॥ ११ ॥

---

१ अतः—ख.। २ वा यज्ञ—क.। ३ 'तत्कालो वा प्रस्तरवत्' इति सूत्रं भाष्यरूपेण काशीमुद्रितपुस्तके प्रकाशितमप्युपेक्ष्य बहुतरप्रमाणानुरोधेन यथावत्प्रकाशितमिति ज्ञेयम्। ४ न चोत्पत्ति—क. ग.।

प्रस्तरवादिति । प्रदेशात्प्रस्तरे तथा । प्रस्तरस्य दर्शपूर्णमासयोः प्रहरण-मुक्तम्, आशीर्भिः प्रस्तरं प्रहरतीति । चोदकेन प्रतिपशु प्राप्यते । तत्रा-नुबन्ध्याकालस्य दर्शनं युज्यते, न स्वरुप्रहरणस्यैतदस्ति । तस्माद्विषमोऽ-यमुपन्यासः ॥ १२ ॥

( अहर्गणेऽन्त्यदिन एव कृष्णविषाणायाः प्रासननियमाधिकरणम् ॥ ६ ॥ )

[६] अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाऽहनि विकल्पः स्यात् ॥ १३ ॥ पू०

ज्योतिष्टोमे दीक्षितव्रतमाम्नातं, कृष्णविषाणया कण्डूयतीति । तत्रैव च पुनः श्रुतं, नीतासु चात्वाले कृष्णविषाणां प्रास्यतीति । तदुभयं द्वादशाहे चोदकेन प्राप्तम् । तत्र विचार्यते । किमन्ते प्रथमे वाऽहनि कृष्णविषाणायाः प्रासनं कर्तव्यम्, अथवाऽन्त्य एवेति । किं प्राप्तम् ।

विकल्पः कर्तव्यः । अन्ते प्रथमे वाऽहनि प्रासनम् । कुतः । धर्मवि-प्रतिषेधात् । यदि प्रथमेऽहनि करिष्यते, उत्तरेष्वहःसु प्राग्दक्षिणानय-नाद्ये पदार्थास्तेषां विषाणाकण्डूयनं धर्मः बाध्येत । अथान्त्ये ततः पूर्वेषामह्नां दक्षिणानयनादूर्ध्वं ये पदार्थास्तेषां हस्तकण्डूयनं धर्मः, स बाध्येत । स एष धर्मविप्रतिषेधः । तस्माद्विकल्पः ॥ १३ ॥

पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातःसवन-मध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥ सि०

नैतदेवं, स्याद्विकल्प इति । किं तर्हि । विषाणानियमः स्यात् । विषाणाकण्डूयनं सर्वस्मिन्नहर्गण नियम्येत । अन्त्येऽहनि प्रासनं स्यात् । कस्मात् । प्रातःसवनमध्यत्वात् । बहूनि प्रातःसवनान्यस्याहर्गणस्य-मध्ये । तेषां विषाणकण्डूयनं धर्मोऽनुगृहीतो भविष्यति । नन्वितरयोः सवनयोर्हस्तकण्डूयनं धर्मः, स बाधिष्यते । नैष दोषः । नैवं श्रूयते, पाणिना कण्डूयितव्यमिति । अर्थात्प्रत्यासत्त्या क्रियते । यश्चार्थादर्थो न स चोदनार्थः ।

१२ ॥ १३ ॥

१ बाध्यते—क. ग. ।

एवमप्युत्तरयोः प्रत्यासत्त्या हस्त एव प्राप्नोतीति । अत्र ब्रूमः । शिष्टे चाभिप्रवृत्तत्वात् । प्रातःसवनशेषे कण्डूयनस्य शिष्टत्वादुत्तरयोरपि विषाणाकण्डूयनमेव नियम्येत । अभिप्रवृत्तत्वात् । अभिप्रवृत्तस्य नियमस्योत्सर्गे, आचारविरोधः स्यात् । अथ प्रकृतौ कथमुत्सर्गः । विषाणाया अभावात् । अन्या विषाणा कस्मात्कण्डूयनार्थेन नोत्पाद्यते । पूर्वविषाणायाः प्रासनं धारणयत्नविमोकार्थम् । तद्यद्यन्या विषाणाऽऽनीयेत, तस्या धारणमदृष्टार्थम् । तस्या अदृष्टोऽर्थः कल्पयितव्यः स्यात् । इह तूत्तरप्रातःसवने धारयितव्या विषाणा । तस्यां सत्यां नास्ति नियमोत्सर्गे कारणम् । तस्मादाद्यस्याह्नो दक्षिणानयनकालादूर्ध्वं विषाणाकण्डूयनमेव स्यात् ॥ १४ ॥

( नानाबीजेष्टावनस्यबीजसंबन्धिहविष्कृदाह्वानकाल एव वाग्विसर्गनियमाधिकरणम् ॥ ७ ॥ )

## [ ७ ] वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥ सि०

राजसूये नानाबीजिकेष्टिः, अग्नये गृहपतय आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुं, सवित्रे प्रसवित्रे सतीनामष्टाकपालमिति । नानाबीजेष्वेकमुलूखलं विभवादित्युक्तम् । अतस्तस्यां क्रमेणावहन्तिः क्रियते । प्रकृतौ च श्रूयते, अपः प्रणेष्यन् वाचं यच्छति, तां सह हविष्कृता विसृजतीति । हविष्कृद्ग्रहणं च काललक्षणार्थमित्युक्तं, तथाऽऽह्वानमर्पीति चेत् । न कालाविशेषादित्यत्रादिति । इहानेको हविष्कृदाह्वानकालः । तत्र पूर्ववद्विचारणा । किमन्ते प्रथमे वा हविष्कृत्काले वाग्विसर्गः कर्तव्यः, अथवाऽन्त्य एवेति ।

१४ ॥

१ ननु सर्वग्रहणेऽपि माध्यंदिनतृतीयसवनयोः प्रत्यासत्त्या प्रकृतवदेव पाणिकण्डूयनमेव प्राप्नोतीति शङ्कासमाधानपरतया 'शिष्टे चाभिप्रवृत्तत्वात्' इति सूत्रावयवमवतारयन्ति—एष मर्षास्यादिना । अत एवास्य पृथक्सूत्रत्वेन प्रकाशनं काशीपुस्तके प्रमाद इति ध्येयम् । २ ( अ० ९ पा० २ अ० ७ सू० १३ ) । ३ ( अ० ३ पा० २ अ० १ सू० ५ ) । ४ ( अ० १ पा० २ अ० १ सू० ६ ) ।

तथैव च पूर्वः पक्षः । प्राग्घविष्कृत्कालाद्ये पदार्थास्तेषां वाग्यमो धर्मः । स बाध्येत, यदि पूर्वस्मिन् वाग्विसर्गः क्रियते । अथोत्तरस्मिंस्ततो हविष्कृत्कालादूर्ध्वं ये पदार्थास्तेषां व्याभाषणकरणं धर्मस्तद्बाध्येत । तथैव चोत्तरः पक्षः, व्याभाषणस्याश्रुतत्वाच्छिष्टे च वाग्यमस्याभिप्रवृत्तत्वादिति । अधिकरणप्रदेशोऽयम् ॥ १५ ॥

( पाशुकवाग्यमस्य पौरोडाशिकहविष्कृदाह्वानकाले विसर्गाधिकरणम् ॥८॥ )

## [ ८ ] पशौ च स पुरोडाशे समानतन्त्रं भवेत् ॥ १६ ॥ सि०

अग्नीषोमीये पशौ पशुः पुरोडाशश्च । तयोः पाशुकं पौरोडाशिकं च तन्त्रम् । अत्रापि सैव चिन्ता । किं पाशुककर्मार्थे हविष्कृदाह्वानकाले वाग्विसर्गः कर्तव्य उत पौरोडाशिककर्मार्थे इति । तथैव पूर्वोत्तरपक्षौ बोध्यौ । अयमप्यधिकरणप्रदेश एव । ननु नैव पशौ हविष्कृदस्ति, ओषध्यर्थत्वात् । सर्वार्थत्वेवं कृत्वा चिन्त्यते । कृत्वा चिन्तेयम् ॥ १६ ॥

( चयने प्रधानानन्तरमेवाग्निविमोकाधिकरणम् ॥ ९ ॥ )

## [ ९ ] अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतककर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ १७ ॥ पू०

अग्नौ श्रूयते, अग्निं युनज्मि शवसा घृतेनेति जुहोति । अग्निमेवैतद्युनक्तीति । पुनः, इमं स्तनं मधुमन्तं धयापामित्यग्निविमोकं जुहोतीति । तत्र विचार्यते । किमङ्गप्रधानार्थो योगः, सर्वापवर्गे विमोकः कर्तव्य उत प्रधानार्थो योगः, प्रधानापवर्गे विमोक इति । किं प्राप्तम् । अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य,

१९ ॥ ११ ॥ ]

१ पशौ च पुरोडाशे-मु. । २ औषधार्थत्वात्-ग. । औषध्यर्थत्वात्- ।. । ३ अत्र ' अङ्गप्रधानार्थो योगः सर्वापवर्गे च विमोकः स्यात् ' इति पाठः काशीमुद्रितपुस्तक एव दृश्यते, नान्यत्रेति स पाठ उपेक्षितः । वस्तुतस्तु नेदं सूत्रं, किंतु सूत्रं व्याकुर्वाणानां भाष्यकाराणां वचनमेवेदमित्याकलयन्तु सुधियः ।

तस्मात्सर्वापवर्गे विमोकः स्यात् । अङ्गप्रधानार्थो योगः सर्वापवर्गे च विमोकः स्यात् ।

किं कारणम् । अविशेषेण श्रूयते । अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेवैतद्युनक्तीति । न च श्रूयते, तस्मा अस्मै वा कर्मण इति । अविशेषात्सर्वार्थ इति विज्ञायते । अपि च तस्मिन् युक्तेऽग्नावङ्गानि प्रधानानि च क्रियन्ते । तस्मादपि सर्वार्थम् । तदुक्तं, सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वादिति सर्वार्थं । चेत्सर्वापवर्गे विमोकः कर्तव्यः । तदा हि योगकार्यमवसितं भवति । योगापवर्गार्थश्च विमोकः ॥ १७ ॥

प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥ सि०

न वा सर्वापवर्गे विमोकः स्यात् । किं तर्हि । प्रधानापवर्ग एव । प्रधानसंयोगेन हि श्रूयते, पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभत इति । यज्ञप्राप्त्यर्थं युनक्तीति विज्ञायते । तस्मात्प्रधानार्थो योगः । प्रधानार्थश्चेत्तदपवर्गे योगकार्यमवसितं भवति । तस्मा-

---

सर्वापवर्गे विमोकः कर्तव्यः । कुतः । 'अग्निमेव तद्युनक्ति' इत्यनेन तावद्विशेषो न गम्यते, प्रधानार्थो योगो नाङ्गानामिति । अग्नौ च प्रधानमङ्गानि च क्रियन्ते । यथा 'वेद्यां हवींष्यासादयति' इत्यङ्गहविषां प्रधानहविषां च वेद्यामासादनं, न प्रधानहविर्भिर्विशेष्यते । यथा चाऽऽहवनीये क्रियमाणः संमार्गो न शक्यते वक्तुं प्रधानस्य योऽग्निस्तस्यायं संमार्गो नाङ्गानां योऽग्निरिति, एवमिहाप्यग्नेरविशेषायोगः सर्वार्थः, प्रकरणस्याविशेषकत्वादित्युक्तम् ॥ १७ ॥

प्रधानापवर्गे विमोकः । कुतः । 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः' इति श्रुतत्वाद्यज्ञसंयोगेन । यज्ञशब्दश्च प्रधानवचन इति । नैतद्युक्तम् । 'पञ्चभिर्युनक्ति' इति गुणवाक्यमिदम् । तेन तदेकवाक्यत्वात्संख्याया एवायमर्थवादो न योगस्य । 'अग्निं युनज्मि शवसा घृतेनेति जुहोति' इत्यनेन कर्मोत्पद्यते । उत्पद्यमानं केनर्थ्याभिलाषि भवति । तत्र यत्प्रकरणेन वाक्येन वा प्रयोजनसंबन्धो दीयते । तेन निराकाङ्क्षी भवति । इह तु वाक्येनैव प्रयोजनं दीयते । स्ववाक्ये यज्ञसंयोगो नास्ति । यद्यपि तु यज्ञसंयोगो भवेत्तथाऽपि यज्ञशब्दो यागमात्रवचनः । 'यदवृता

१ (अ० ३ पा० ७ अ० १ सू० २)। २ अग्नौ चेति—योगाख्यसंस्कारसंस्कृते चाग्नावित्यर्थः । ३ न प्रधानहविर्भिरिति—प्रकरणमात्रेणेति शेषः । ४ इत्युक्तमिति—तथा च सर्वार्थे च योगे तद्विमोकोऽपि सर्वार्थ इति पूरणम् । ५ भाष्यकारीयसिद्धान्तं दूषयति–नैतद्युक्तमित्यादिना । ६ केन तर्हि योगविधिरिति चेदाह–अग्निमित्यादिना । ७ यदिति क्रियाविशेषणं ज्ञेयम् ।

तत्र विमोकः । अविशेषविधानं यज्ञसंयोगेन विशेषेण युज्यमानं विशेषार्थं भवति ॥ १८ ॥

## अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १९ ॥

वषट्कुर्युर्भ्रातृव्यं यज्ञस्याऽऽशीर्गच्छेत्' इति । एतदपि[1] गुणवाक्यस्यार्थवादः । 'ऋत्विजो वृणीते' इत्येतस्योत्पत्तिवाक्यस्य नायं शेषः । यत्तावदादौ[2] दृष्टार्थं वरणं तत्साङ्गस्य ज्योतिष्टोमस्य । द्वितीयं[3] तदारादुपकारकम् । अवभृथेऽदृष्टार्थं प्रतिषिध्यते, तत्रापि चोदकाभावादनुवाद[4] एव । तस्मात्प्रतिषेधो लिङ्गं न घटते । द्वादशाहे, 'स वाऽहरहर्युनक्ति, अहरहर्मुञ्चति' इत्यङ्गप्रधानार्थे योगे विमोके च घटत एव । यद्युनक्ति तदहरहरिति गुणविधानार्थम्[6] ॥ १८ ॥

---

१ अयमपि—ख. ज. । २ यदि सौमिकं वरणमङ्गप्रधानार्थं तर्ह्यवभृथे वरणप्राप्त्यभावात्तत्र तत्प्रतिषेधोऽनर्थक इति शङ्कामनुवदति—यत्तावदित्यादिना । ३ द्वितीयमिति—यद्दीक्षणीयादौ प्रकृतितः प्राप्तं होतृवरणं 'अवृतः सामिधेनीरन्वाह' इति वचनात्प्रवृत्ते क्रियमाणमदृष्टार्थं तद्द्वितीयमित्यर्थः । ४ चोदकाभावादिति—अपूर्वत्वादवभृथस्येति शेषः । ५ अनुवाद एवेति—इदं त्वतिशयार्थे न पारमार्थिकमिति ज्ञेयम् । तथा हि । यद्यप्यपूर्वोऽवभृथस्तथापीह प्राकृतावेवाऽऽज्यभागाविज्येते । प्रकृतौ च होतृवरणं नाऽऽरादुपकारकं, किंतु होतृसंस्कारार्थम् । होतुश्च कर्तृतयाऽङ्गप्रधानार्थत्वादिहाप्याज्यभागार्थतया होतृवरणं प्रसज्यत एवेति न नित्यानुवादत्वं युज्यत इति । ६ गुणविधानार्थमिति—अत्र च वार्तिकं परिलुप्तमिति भाति । तच्च यथावद्विवेक्तुमशक्यतया न्यायरत्न एवात्र प्रकाश्यते । "गुणविधानमेतद्भविष्यति, नहि सर्वानुवादः प्रयोजनवान् । अतः सर्वादौ योगे सर्वान्ते च विमोके न्यायात्प्राप्ते वचनमिदमहरहरिति विशेषविधानार्थमर्थवद्भवति । तेन विपरीतमिदं लिङ्गमिति भावः । तस्मात्प्रत्याख्येयमधिकरणं ससूत्रभाष्यम् । अथवैवं सूत्राणि व्याख्येयानि । सिद्धान्तोपक्रममिदमधिकरणम् । 'अग्नियोगः सोमकाले' इति सिद्धान्तसूत्रम् । 'प्रधानापवर्गे वा तदर्थत्वात्' इति पूर्वपक्षसूत्रम् । 'पाङ्क्तो यज्ञः' इति वाक्यशेषात्प्रधानमात्रसंबन्धात्प्रधानमात्रार्थतेति । 'अवभृथे च तद्वत्' इति पूर्वपक्ष एव लिङ्गमुक्तम् । तच्च दृष्टार्थतां होतृवरणस्यानालोच्य पूर्वपक्षवादिनोपन्यस्तमिति वेदितव्यम् । 'अहर्गणे च प्रत्यहं स्यात्' इति सिद्धान्तसूत्रम् । तुशब्दस्थाने चशब्दः । प्रधानार्थत्वे ह्यहर्गणे प्रत्यहं योगविमोकौ न्यायादेव प्राप्तौ स्याताम् । केवलप्रधानार्थत्वात् । तत्र 'अहरहर्युनक्ति' इति न वक्तव्यं स्यात् । उक्तं चैतत् । तस्माल्लिङ्गात्साङ्गप्रधानार्थम् । प्राप्तिस्तु पूर्वोक्तैव । यज्ञार्थवादस्यात्रासमर्थत्वादिति ".

एवं च कृत्वाऽवभृथे आर्षेयवरणस्य होतृवरणस्य च प्रतिषेधो युक्तो भविष्यति, न होतारं वृणीते, नाऽऽर्षेयमिति । यथा न्यायोऽपदिष्टः । सोमार्थं हि होतृवरणं कृतम्, यद्धोतारं वृणीते जगतीं तद्वृणीत इति । एतस्मिन्न्यायेऽसति तदप्यङ्गप्रधानार्थमित्यवभृथेऽपि प्रसज्येत । तत्र कृतार्थत्वात्प्राकृतं होतृवरणं नैव प्राप्नोति । तस्य प्रतिषेधोऽनर्थकः । सति त्वेतस्मिन्न्याये तदपि प्रधानार्थमेव । तत्रापि हि यज्ञसंयोगः, यद्वृता वषट्कुर्युर्भ्रातृव्यं यज्ञस्याऽऽशीर्गच्छेत्, यद्वृता वषट्कुर्वन्ति, एकधा रुयजमाने यज्ञस्याऽऽशीः प्रतितिष्ठतीति । प्रधानार्थं चेत्तदपवर्गे तत्कार्यमवसितमित्यवभृथे प्राकृतं होतृवरणं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः । उच्यते च । तस्मात्प्रधानार्थो योगः । प्रधानापवर्गे विमोक इति ॥ १९ ॥

अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ २० ॥

अहर्गणे च द्वादशाहे प्रत्यहं योगविमोकौ दर्शयति । स वा अहरहर्युनक्ति, अहरहर्विमुञ्चतीति । तदुपपद्यते, यदि प्रधानार्थो योगः । इतरथाऽऽद्येऽहनि योगः स्यात्, अन्ते विमोकः । तदा हि सर्वापवर्ग इति ॥ २० ॥

( अहर्गणे—उपसत्कालीनसुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् ॥ १० ॥ )

[१०] सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥ सि०

द्वादशाहे, उपसत्काले सुब्रह्मण्याह्वानं प्रति चिन्त्यते । किं भेदेन कर्तव्यमथवा तन्त्रेणेति । कर्मभेदाद्भेदेनेति प्राप्ते, उच्यते—

सुब्रह्मण्या तु तन्त्रं स्यात् । कुतः । अन्यकालत्वात् । कर्मप्रयोगात्पृथक्कालेयम् । तत्र न गृह्यते विशेषः । अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । दीक्षावत् । तद्यथा दीक्षा पृथक्कालत्वात्तन्त्रं भवति, तथेयमपि ॥ २१ ॥

( अहर्गणे सुत्याकालीनसुब्रह्मण्याह्वानस्याऽऽवृत्त्यधिकरणम् ॥ ११ ॥ )

[११] तत्काला त्वावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २२ ॥ सि०

---

[ १९ ॥ २० ॥ २१ ॥

---

१ उपसत्काले सुब्र—क. । २ तत्कालत्वादावर्तेत—ग. ।

तस्मिन्नेव द्वादशाहे तत्काला या सुब्रह्मण्या सा त्वावर्तेत, भेदेन स्यात् । कुतः । प्रयोगं प्रति तस्या विशेषसंयोगो भवति, अद्य सुत्यामागच्छेति । अद्येत्युक्ते श्वः परश्वो वेति नोक्तो भवति । तत्रापि च प्रकृत्यतिदेशाद्वक्तव्यम् । तस्मादावर्तेत ॥ २२ ॥

अप्रयोगाङ्गमिति चेत् ॥ २३ ॥

इति चेत्पश्यसि—अद्येति विशेषसंयोगादावृत्तिरिति । नैतद्युक्तम् । कुतः । यतोऽप्रयोगाङ्गमेतत्, यदद्येति वचनम् । इदं हि प्रकृतावेकत्वादह्नोऽविवक्षितम् । अर्थादेव सिद्धत्वात् । अनङ्गीकृतत्वाच्च चोदकेन न प्राप्येत । यावदुक्तं स्यात्, सुत्यामागच्छेति तावदेवाद्येति । सुत्यात्वं सर्वेषामह्नामाविशिष्टम् । तस्मात्तन्त्रम् ॥ २३ ॥

स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २४ ॥

स्याद्भेदः[१] । कुतः । प्रयोगनिर्देशात् । यद्यप्यद्यशब्दस्यार्थो न विवक्षितस्तथाऽपि यस्मिन्नहनि प्रयुज्यते तत्कालस्य प्रधानस्योपकरोति । नान्यकालस्य । कर्तृभेदवत् । तद्यथा, अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति । मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नित्यौत्तरवैहारिकाण्यङ्गानि देशभेदान्मारुत्या नोपकुर्वन्ति । यथा तानि देशभेदान्नोपकुर्वन्ति, एवमिदमपि कालभेदादन्यकालस्य नोपकरिष्यति । तस्मादावर्तेत ॥ २४ ॥

तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २५ ॥

अथोच्येत । एकस्मिन्नहन्याहूता देवता आह्वानसंस्कृता भवति । एका चासौ । तस्याः पुनराह्वानमनर्थकम् । अग्निवत् । यथाऽग्नेः सकृदाधानेन संस्कृतस्य न पुनः कर्मणि संस्कार एकस्य[२] क्रियत इति । तन्नायुक्तम् । यत्कारणम् । प्रतिकर्मापवर्गः । यस्मिन् कर्मण्याह्वानं क्रियते तदर्थं तद्भवति । तस्य कर्मान्तेऽपवर्गः । यथा, अन्येषां सुत्याकालानां संस्काराणामग्निसंमार्गादीनाम् । तस्मादावृत्तिः ॥२५॥

अग्निवदिति चेत् ॥ २६ ॥

२२ ॥ २३ ॥ ॥ २४ ॥ २५ ॥

१ स्याद्भेदः । प्रयोग—क. ख. । २ एतस्य—ख. । एकत्वात्—ग. ।

इति यदुक्तं, यथाऽग्न्याधानं सर्वकर्मणि तन्त्रं भवति, एवमिदमपी-त्येतस्य कः परिहारः । आभाषान्तं सूत्रम् ॥ २६ ॥

न प्रयोगसाधारण्यात् ॥ २७ ॥

नैतदाधानेन तुल्यम् । आधानस्य स्वकालत्वात् । स्वकाले हि तत्क्रियते । तत्र न गृह्यते विशेषः । इदं पुनः कर्मकालमाह्वानम् । तद्यस्य कर्मणः काले क्रियते तदर्थमिति गृह्यमाणविशेषम् । तस्मान्नैत-दाधानेन तुल्यम् ॥ २७ ॥

लिङ्गदर्शनाच्च ॥ २८ ॥

लिङ्गं चैतमर्थं दर्शयति प्रत्यहं सुब्रह्मण्याह्वानमिति । एवं ह्याह, संस्थिते संस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यतीति । प्रेषणमाह्वानक्रियार्थम् । तस्मादपि प्रत्यहमाह्वानम् ॥२८॥

तद्धि तथेति चेत् ॥ २९ ॥

तदित्यनेन यूपाहुतिं प्रतिनिर्दिशति । तद्धि यूपाहुतिकर्म यथा यूपै-कादशिन्यां तन्त्रं भवति । तथेदमपि भविष्यति । किं तस्य चास्य च सादृश्यम् । तत्क्रियमाणमवश्यं कस्यचिद्यूपस्यान्तिके भवति । सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात् । यथा तदेकस्य कस्यचिद्यूप स्यान्तिके क्रियमाणं सर्वयूपार्थं भवति, एवमिदमप्येकस्य कस्यचि-त्सौत्यस्य कर्मणोऽन्तिके क्रियमाणं सर्वार्थं भविष्यतीति ॥ २९ ॥

नाशिष्टत्वादितरन्यायत्वात् ॥ ३० ॥

नैतत्तेन तुल्यम् । कुतः । अशिष्टत्वात् । नात्र यूपान्तिके होमः शिष्यते । अविवक्षितमन्तिकमाहवनीयप्रतिषेधार्थमेतदित्युक्तम्—इदं-रप्रतिषेधो वा, अशास्त्रत्वाच्च देशानामिति । इतरन्यायत्वाच्च । इह त्वितरो न्यायः । कालभेदाद्गृह्यमाणविशेषस्याऽऽवृत्त्या भवितव्य-मिति । तस्माद्विषम उपन्यासः ॥ ३० ॥

---

२१ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

---

१ स्वकालं—क. ख. । २ सुब्रह्मण्ये—क. ख. ग. मु. । ३ तस्यास्य—ग. । ४ ( अ० ११ पा० २ अ० ७ सू० २७ ) । ५ ( अ० ११ पा० २ अ० ७ सू० २९ ) ।

विध्येकत्वादिति ॥ ३१ ॥

अथ कश्चिद्ब्रूयात्, इह द्वादशाहिको विधिस्तन्मध्यस्थो वसतीवरीपर्यन्तोऽवभृथादिश्च । अयमपि च द्वादशाहिको विधिः । तत्साहश्याद्नेनापि तथा भवितव्यमिति ॥ ३१ ॥

न कृत्स्नस्य पुनःप्रयोगात्प्रधानवत् ॥ ३२ ॥

नैतत् । कुतः । कृत्स्नस्य पुनःप्रयोगात् । कृत्स्नोऽन्यो विधिः पुनः प्रयुज्यते, अभिषवपवमानग्रहचमसस्तोत्रशस्त्रादिः । प्रधानवत् । तद्यथा प्रधानानि प्रत्यहं क्रियन्ते तथा । तत्र वसतीवरीवद्वा सकृत्त्वं स्यात्, स्तोत्रादिवद्वा बहुकृत्वः कृतं स्यात् । तत्र बहुकृत्वः कृतमिति न्याय्यम् । तथा सर्वेषामुपकरोति । सकृत्कृतं तु यत्र क्रियते तत्रैव कालभेदादुपकुर्यात् । तस्मादावृत्तिः ॥ ३२ ॥

( देशकर्तृविषयेऽनियमाधिकरणम् ॥ १२ ॥ )

[१२] लौकिके तु यथाकामी संस्कारानर्थलोपात् ॥३३॥ सि०

इह लौकिकार्था उदाहरणम् । यथा देशः, समे दर्शपूर्णमासाभ्यां यजेत । कर्तारः, दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः । स्रुगादीनि च पात्राणि । तेषु विचारः । किं प्रतिप्रयोगमन्यान्युपादेयानि, उत तानि वाऽन्यानि वोपादाय प्रयोग इति । किं प्राप्तम् । अन्यान्यन्यान्युपादेयानीति । किं कारणम् । निरिष्टकेन पुनः क्रियां शिष्टा नाऽऽचरन्तीति । एवं प्राप्ते, ब्रूमः । लौकिकेषु यथाकामी, तानि वाऽन्यानि वा, अनियमः । कुतः । संस्कारानर्थलोपात् । न कश्चित्पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृतः, योऽन्योपादाने लुप्येत । नाप्यर्थलोपः । अन्यैरपि हि शक्यते प्रयोगः कर्तुम् । तस्मादनियमः । अथ यदुक्तं निरिष्टकेन शिष्टा यागं नाऽऽचरन्तीति । एतैराचरन्तीति । तस्मान्नैष दोषः । ननु ऋत्विगाचार्यौ नातिचरितव्याविति स्मरन्तीति । पुरुषधर्मोऽसौ, न कर्मधर्मः । कर्मसंयोगाभावात्प्रकरणाभावाच्च । देशेषु कर्तृषु च पर्यवसितम् । पात्रेषूत्तरा कथा करिष्यते ॥ ३३ ॥

---

३१ ॥ ३२ ॥ ३३ ॥

---

१ अत्र च ' संस्कारार्थलोपात् ' इति पाठ आवश्यक इति भाति । २ निरिष्टकेन—ख. पु. ।

( यज्ञपात्राणां यावज्जीवं धारणनियमाधिकरणम् ॥ १३ ॥ )

[ १३ ] यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥ सि०

यज्ञपात्राणि त्वान्ताद्धारयितव्यानि । कुतः । प्रतिपत्तिविधानात् । प्रतिपत्तिस्तेषां परिधानीये कर्मणि विधीयते, आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति ( तदर्थः ) । ऋजीषवत् । तद्यथा, अहर्गणे सर्वेषामह्नामृजीषोऽवभृथे प्रतिपादनार्थं धार्यते । ऋजीषमप्सु प्रहरंतीति श्रूयते ॥ ३४ ॥

यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३५ ॥ पू०

न वेयं पात्राणां प्रतिपत्तिः । किं तर्हि । यजमानसंस्कारोऽयम् । तदर्थस्तेषां पात्राणामर्थः श्रूयते । कथं ज्ञायते । तेषां तृतीयया निर्देशात् । यजमानस्य द्वितीयया, तत्र यथाकामी स्यात् । तेषामन्येषां वा प्रासनम् । तदर्थत्वात् । अर्थकर्मत्वात्, पात्राणां यैः कैश्चिदप्यर्थः सिध्यतीति ॥ ३५ ॥

मुख्यधारणं वा मरणस्यानियतत्वात् ॥ ३६ ॥

मुख्यानां वा—आद्यानां पात्राणां धारणं, नानियमः । कुतः । मरणस्यानियतत्वात् । अनियतकालं मरणम् । कदाचित्तानि पात्राण्युत्सृष्टानि भवेयुः, मरणं चाऽऽपद्येत । तत्र यजमानशरीरसंस्कारलोपः स्यात् । एवमपि तावद्धारयितव्यानि यावदपरः प्रयोगः, परतस्तदीयैः पात्रैरर्थकर्म भविष्यति । पूर्वेषु विद्यमानेष्वादानमन्येषामनर्थकम् । तस्मान्मुख्यधारणमेव न्याय्यम् ॥ ३६ ॥

यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३७ ॥

अथवा न मुख्यानां धारणम् । यो यजनीयेऽहनि म्रियेत यजमानः सोऽनेन संस्कारेणाधिकृतः स्यात् । तस्य तानि पात्राणि संनिहितानि । उपवेषवत् । यथा सांनाय्ययाजिन एवोपवेषोपदहनेनाधिकारः । तस्योपवेषः संनिहित इति ॥ ३७ ॥

---

३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

---

१ प्रहरन्तीति—क. । १ मुख्येषु—ग. ।

न शास्त्रलक्षणत्वात् ॥ ३८ ॥

तदेतन्नोपपद्यते । किं कारणम् । शास्त्रलक्षणं तद्भवति । यथा सांनाय्ययाजिन एवोपवेषो नान्यस्येति । तत्र हि सांनाय्यार्था शाखा । तामनुनिष्पद्यत उपवेषः । तस्या असांनाय्ययाजिनोऽसंभवः । अथेदमनियतं संस्कारविधानं, यजनीये वाऽहन्यन्यत्र वा, अनारभ्यविधानात्, आहिताग्निमाग्निभिर्दहन्ति यज्ञपात्रैश्चेति । न चान्यस्मिन्नहनि यज्ञपात्राणामुपवेषवदसंभवः । शक्यते हि धारणेन संपादयितुम् । तस्मादुपवेषोऽदृष्टान्तः ॥ ३८ ॥

उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३९ ॥

अथवा न धारणम् । किं तर्हि । संस्कारकालेऽन्यानि नवानि पात्राण्युत्पाद्यानि । प्रयोजकत्वात्संस्कारस्य । आशिरवत् । यथा, क्रतुपेये, घृतव्रतौ भवत इति वचनादभावे व्रतदुहः, अन्यां यजमानस्य व्रतयुक्तामाशिरे दुहन्तीति श्रुतेराशिरार्थमन्या गौरुपादीयते, एवम् ॥ ३९ ॥

शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥

अथ पश्यस्येवं सति यज्ञपात्रशब्दोऽसमञ्जसो भवति । यज्ञसंबन्धेन हि पात्राणि यज्ञपात्राणि भवन्ति । न च नवानां यज्ञसंबन्धोऽस्तीति ॥ ४० ॥

तथाऽऽशिरेऽपि ॥ ४१ ॥

आशिरेऽपि याऽऽन्या गौरुपादीयते सा यजमानस्य व्रतभुङ् न भवति । तत्र शब्दस्यासामञ्जस्यमेव । यदि तत्रान्या गौरिहाप्यन्यानि पात्राणि भविष्यन्ति । वक्तव्यो वा विशेष इति ॥ ४१ ॥

अत्रोच्यते—

शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥

शास्त्राद्विप्रयोगस्तत्र । शास्त्रेण तत्र शब्दस्यासामञ्जस्यम् । व्रतदुहो

---

१८ ॥ १९ ॥ ४० ॥ ४१ ॥

---

१ व्रतदुघामाशिरे—ख. । २ उपादीयत इति—ख. ।

विप्रयोगः कृतः, घृतव्रतौ भवत इति । एकद्रव्यचिकीर्षायां यजमानस्य व्रतयुक्तामाशिरे दुहन्तीति, ऋतपेये चोदकेन प्राप्यते । ततश्चासंभवान्निवर्तेत । आशिरं च गां प्रयुङ्क्ते । तस्मात्तत्र शब्दासामञ्जस्यमनुरुध्यते । अथेहापूर्वोऽर्थो नान्यतः प्राप्यते । यज्ञपात्रैश्च दाहोऽविशेषेण प्रत्यक्षश्रुतः । संभवति च तेषां संपादनं धारणेन । तस्मादिहाऽऽकस्मिकं शब्दस्यासामञ्जस्याश्रयणं भवतीति धारणमेव पात्राणाम् ॥ ४२ ॥

( अग्न्याधेयप्रभृतिपात्राणां धारणनियमाधिकरणम् ॥ १४ ॥ )

## [१४] प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥ ४३ ॥ पू०

एवं स्थितमपर्यवसितमन्तरा चिन्तान्तरं क्रियते—यज्ञपात्राणि धारयितव्यानीत्युक्तम् । तत्र चिन्त्यते । किं पौर्णमास्या आरभ्य धारयितव्यान्युताग्न्याधेयादिति । किं प्राप्तम् ।

पौर्णमास्या आरभ्य धारयितव्यानीति । कुतः । प्रकृत्यर्थत्वात् । इमानि पात्राण्यनारभ्योक्तत्वाद्दर्शपूर्णमासार्थानि । तत्रैषामुत्पत्तिः । उत्पत्तिप्रभृति च धारणम् । तस्मात्पौर्णमास्या आरभ्य धारयितव्यानि ॥४३॥

## अग्न्याधेये वाऽविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४४ ॥ सि०

न वा पौर्णमास्या आरभ्य धारणम् । किं तर्हि । अग्न्याधेयात् । कुतः । अविप्रतिषेधात् । यद्यपि पौर्णमास्यां विहितानि चोदकेन पवमानहविःषु प्राप्तानि । ततःप्रभृति धार्यमाणेषु विप्रतिषेधो भवति । मरणस्यानिमित्तत्वात् । प्राक्पौर्णमास्या यदि मरणमापद्येत, यजमानशरीरसंस्कारलोपो भवति । आधानाच्चाऽऽरभ्य धार्यमाणेष्वविप्रतिषेधो भवति । तस्मादाधानादारभ्य धारणम् ॥ ४४ ॥

## प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४५ ॥ अ० १३—सि०

स्थितादुत्तरम् । यदुक्तं पात्रैरर्थः क्रियते यजमानस्य संस्कार इति । तन्न । किं तर्हि । प्रतिपत्तिरेषां पात्राणामग्नीनां च यजमानशरीरे । कथम् । यथाऽन्येषां द्रव्याणां सोमलिप्तानामवभृथगमनं प्रतिपत्तिः ।

४२ ॥ ४३ ॥ ४४ ॥

१ ततश्च—क. ख. । २. धार्यमाणेष्वपि—ग. ।

तद्वत्तुल्यो हेतुः । तान्यपि नानाकर्मसूपयुक्तानि प्रतिपादनार्हाणि । इमान्यपि पात्राण्यग्नयश्च तथैव । तस्मात्तेषामपि प्रतिपत्तिः । ननु तृतीयासंयोग उभयत्र विद्यते । न खलु । यजमानशरीरेऽग्नीनां पात्राणां च निक्षेपणं प्रतिपत्तिः, न दहनम् । आहिताग्नेर्दहने च तृतीया । तत्र तेषां गुणभाव एव । तैर्हि तत्साध्यते । निक्षेपणे तु द्वितीयैव । यथा, दक्षिणे पाणौ जुहूमासादयतीति ॥ ४५ ॥

( वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचाराधिकरणम् ॥ १९ ॥ )

[१५] उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४६ ॥ सि०

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते, उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति । तत्र विचार्यते । किमार्भवकाले प्रचरितव्यमुत शस्त्रवतां सोमानामुपरिष्टादुत विकारस्थानेऽथवा सर्वसोमानामुपरिष्टादिति । किं प्राप्तम् । आर्भवकाल इति । कुतः । प्रकृतावार्भवकाले प्रचारो वृत्तः । प्रकृतिवदिहापि तत्रैव कर्तव्यः । एवं चाङ्गविपर्यासो न कृतो भवति । यदि सर्वसोमानामुपरिष्टात्प्रचारः क्रियेत ततः, अग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति, प्रहृत्य परिधीन् हारियोजनमिति, एतदुभयमपि विपर्यस्येत, नाऽग्निमारुतादूर्ध्वमनुयाजैश्चर्येत । हुत्वा च हारियोजनं परिधयः प्रह्रियेरन् । सोऽयमङ्गानां विपर्यासो विना वचनेन क्रियेत । अथ त्वार्भवकाले प्रचारस्ततो नैष दोषो भवति ।

एवं प्राप्ते, उच्यते । उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीत्युक्ते सर्वसोमानामुपरिष्टात्प्रचर्येत । कुतः । अविशेषात् । सोमानामित्युक्ते सर्व·

---

४९ ॥ ]

यद्यार्भवकाले प्रचारः क्रियते, अप्रवृत्तिविशेषकरं वाक्यं स्यात् । ननु वचनेन प्रातःसवने माध्यंदिनसवने वा कर्तव्याः प्राप्नुवन्ति । तेन तार्तीयसवनिकार्भवकालेऽङ्गप्रचारविधानार्थमर्थवद्वचनम् । उच्यते ।

---

१ आसादयति ॥—क. ख. । २ इत्युक्तम्—ग. । ३ उपरिष्टात्सोमानां—ग. । ४ वचनेनेति—'तीर्थं वै प्रातःसवनं, यत्प्रातःसवने पशव आलभ्यन्ते तीर्थ एवैतानालभते' इति वचनेन, 'ब्रह्मसाम्न्यालभते' इति वचनेन चातिदेशप्राप्तकालबाधेनेति शेषः ।

सोमानामविशेषवचनात्प्रतीयते । यत्त्वाभवकालः प्रकृतितः प्राप्यत इति । अबाध्यो हि प्रकृतिकालः । चोदकेनैव प्राप्तः । तदर्थो विधिः कृतकरोऽनर्थकः स्यात् । तस्मात्सर्वसोमानामुपरिष्टात्प्रचारः ॥ ४६ ॥

अङ्गविपर्यासो विना वचनादिति चेत् ॥ ४७ ॥

अथ यदुक्तम् । एवं सत्यङ्गविपर्यासो विना वचनेन कृतो भविष्यतीति । तस्य कः परिहार इत्याभाषान्तं सूत्रम् ॥ ४७ ॥

उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४८ ॥

नैष दोषो यदुक्तमङ्गविपर्यास इति । कथं कृत्वा । पशुप्रचारे तावदुत्कृष्यमाणेऽनुयाजानां परिधिप्रहरणस्य चोत्कर्षो न्याय्यः । संयोगात् । तानि हि पशुप्रचारेण क्रमतः संयुक्तानि । न चाऽऽग्निमारुतस्यानुयाजैः सह, हारियोजनस्य वा परिधिप्रहरणेन क्रमो विवक्षितः । न हि परिधिप्रहरणं हारियोजनस्याङ्गं, हारियोजनो वा परिधिप्रहरणस्य । उभौ वा कस्यचिदेकस्य प्रधानस्य । एवमाग्निमारुतमनुयाजाश्च यदि परस्परस्याङ्गभूतानि भवेयुः, एकस्य वा प्रधानस्य, तत्र एतेन क्रमेणोपकुर्वन्तीति विवक्षितः क्रमः स्यात् । अथ पुनः पशोरङ्गमनुयाजाः, आग्निमारुतं सोमस्य, तथा परिधिप्रहरणं पशोरङ्गं, हारियोजनः सोमेज्या । तेषां क्रमो निष्प्रयोजनः । तस्मादविवक्षितः ।

कालमात्रमितरत्र । आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति प्रहृत्य, परिधीन् जुहोति हारियोजनमिति, एतस्मिन् काल इति लक्षणमाग्निमा-

---

प्रातःसवने माध्यंदिने वा सवने, एते संस्कारवाक्ये, आलम्भमात्रश्रवणात् । अङ्गप्रचार आर्भवकाल एव, नान्यस्मिन् । तस्मादविशेषात्सर्वसोमानामूर्ध्वम् ॥४६॥

ननु 'आग्निमारुतादूर्ध्वं, प्रहृत्य परिधीन्' इति च क्रमविपर्यासः प्राप्नोतीत्युक्तम् ॥ ४७ ॥

उच्यते । आग्निमारुतं सोमाङ्गम् । अनुयाजाः पश्वङ्गम् । अनयोरङ्गाङ्गिसंबन्धस्तावन्नास्ति, येनाऽऽग्निमारुतं कृत्वाऽनुयाजाः क्रियमाणाः सगुणा भवेयुः । न चैत एकेन प्रयोगवचनेन गृह्यन्ते, येनाऽऽग्निमारुतं कृत्वाऽनुयाजाः क्रियेरन् । प्रकृतौ परिव्य-

---

१ सवने इति—सवने वेति ये भवदुक्ते वाक्ये इति शेषः । २ गुणाः—च. । ३ आग्निमारुतान्—घ. । ४ क्रियेरन्निति—अतोऽनङ्गत्वात्क्रमलोपेऽपि न क्षतिरिति भावः । ५ 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति वचनार्थमाह—प्रकृतावित्यादिना ।

रुतं परिधिप्रहरणं च। अनपेतश्च लक्षणापाये कालः। यथाऽग्निहोत्र-वेलायामागन्तव्यमिति। यत्राग्निहोत्रं नास्ति, तत्राप्यनपेता वेला। नन्वेवं लक्षणा भवति। न हि। काल एवेह श्रुत्यर्थः। क्त्वा तावत्पूर्व-काल एव स्मर्यते। ऊर्ध्वशब्दोऽपि देशं कालं वा ब्रूयात्। देशस्यासं-भवात्कालार्थो विज्ञायते॥ ४८॥

प्रकृतिकालासत्तेः शस्त्रवतामिति चेत्॥ ४९॥

इति चेत्पश्यसि सर्वसोमानामुपरिष्टात्प्रचार इति। नैतद्युक्तम्।

---

ग्निसंमार्जनक्षणोत्तरकालमनुयाजाः प्राप्नुवन्ति। ईदृशे चोदकेन प्राप्ते, इह द्वितीये क्षणेऽनुयाजा न कर्तव्याः, क्षणमात्रं स्थित्वा कर्तव्या इति चोदकशेष एवेदं वचनं, न तु चोदकं बाधते। द्वितीयेऽप्येवमेव। नन्वेवं लक्षणा भवति। न हि। क्त्वाशब्दः कालवचन एव स्मर्यते। स तत्परिधिप्रहरणस्य पूर्वकालतायां श्रुत्या वर्तते। तद्वशात्परिधिप्रहरणं कृत्वा तत उत्तरकालं हारियोजनः कर्तव्य इति सर्वाण्येव श्रुतिवृत्तानि। आग्निमारुतशब्दोऽपि स्वार्थमेव प्रतिपादयति। ऊर्ध्व-शब्दोऽपि कालवचन एव। अतो न किंचिदिदं लक्षणावृत्तम्। ईदृशे च लक्षणा भवति। यथा गौर्वाहीक इति गोशब्दो वाहीके निष्ठ्यूतमूत्रभक्षणादि यत्तल्लक्षयति। यथा वा जातिर्व्यक्तिलक्षणार्था। एवमत्र न कांचिल्लक्षणां पश्यामः।

एतेन व्याख्यातेन 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति यो दोष उक्तः सिद्धान्तवादिना पूर्वपक्षवादिनः, स नास्ति। सर्वेषां श्रुतिवृत्तत्वात्। एवमिदं प्रदर्शनार्थम्। उच्यते। नैतदेवम्। अत्रापि हि लक्षणा। तेष्वपीति। कथम्। पदार्थ उच्चार्यमाणः स्वरूपं वा कर्तव्यं ब्रवीति। अन्यत्र वा कर्त-व्यं, तत्र वा कर्तव्यमिति। इह तु स्वरूपं न कर्तव्यं, तस्य निर्ज्ञातत्वात्। अन्यत्रापि न। तत्रापि न किंचित्। किमर्थं तर्ह्युच्चरणम्। परार्थं, तस्य यः कालस्तं लक्षयितुम्॥ ४८॥

---

१ नत्वेवं लक्षणा भवति। काल—क.। २ क्षणमात्रमिति–आग्निमारुतकालं यावदित्यर्थः। ३ घृतेति–घ.। ४ एवं भाष्यमनुभाष्य चोदयति—एतेनेत्यादिना। ५ सिद्धान्तवादिना–अङ्गाङ्गि-संबन्धं वदतेति शेषः। ६ पूर्वपक्षवादिनः—कालविधिमिच्छत इति शेषः। ७ आग्निमारुता-नुयाजयोः परस्परमङ्गाङ्गिभावाभावाच्चोपरितनं विकल्पद्वयं निराकरोति–अन्यत्रापीत्यादिना।

शस्त्रवतां सोमानामुपरिष्टात्प्रचारो युक्तः । कुतः । प्रकृतिकालासत्तेः । एवं प्राकृतस्य कालस्याऽऽसत्तौ कृतः प्रचारो भविष्यति । अङ्गविपर्यासश्चाकस्मान्न कृतो भविष्यति । अथ कतमोऽसौ कालः । तार्तीयसवनिकस्य वैश्वदेवस्य यदूर्ध्वम् ॥ ४९ ॥

न श्रुतिप्रतिषेधात् ॥ ५० ॥

एवं सति, उपरिष्टात्सोमानामित्यविशेषश्रुतिर्विप्रतिषिध्यते । केषांचित्सोमानामधस्तादयं प्रचारः स्यात् । न चाऽऽसत्त्या प्राकृतः कालो लभ्यते ॥ ५० ॥

विकारस्थान इति चेत् ॥ ५१ ॥

इति चेत्पश्यसि शस्त्रवतामुपरि प्रचारोऽयुक्त इति, विकारस्थाने भवतु । कतमत्पुनर्विकारस्थानम् । उक्थ्याद्याः संस्था अग्निष्टोमसंस्थाया विकाराः । तासां यत्स्थानमग्निष्टोमप्रचारादूर्ध्वं, तत्र प्रचारो भवतु । तत ऊर्ध्वं सर्वेषामागन्तूनां प्रचाराणां स्थानम् । अयमपि चाऽऽगन्तुः । तस्मादयमपि तत्रैव भवति ॥ ५१ ॥

न चोदनापृथक्त्वात् ॥ ५२ ॥

नैतदेवम् । कस्मात् । चोदनापृथक्त्वात् । कर्मपृथक्त्वादित्यर्थः । पृथगेते कर्मणी, यच्च सौमिकं, यच्च पाशुकम् । सौमिकानां प्रचाराणामेतत्स्थानं न पाशुकानाम् । तस्मादेतस्य वचनात्सर्वसोमानामुपरिष्टात्स्थानम् ॥ ५२ ॥

( आग्निमारुतादूर्ध्वमनुयाजोत्कर्षेणोत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतापदानामप्युत्कर्षाधिकरणम् ॥ १६ ॥ )

[ १६ ] उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥ ५३ ॥ पू०

अनुयाजा उत्कृष्यमाणाः सूक्तवाकमप्युत्कर्षन्ति । तत्र सवनीयानां

[ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ]

सवनीयानां या देवतास्ताः सूक्तवाकोत्कर्षेऽपि नोत्कृष्यन्ते । पश्वनङ्गत्वात्सवनी·

१ प्राकृतस्याऽऽसत्तौ—ख. । २ कृतः प्रकृतः प्रचारः—क. । ३ ताद्धि सर्वेषां—ग. ।

पुरोडाशानां देवताः संकीर्त्यन्ते, भृज्यन्निन्द्राय हरिवते धानाः, पूषण्वते करम्भमित्यारभ्य । तासामुत्कर्षः, नेति संदेहः। किं प्राप्तम्। उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः । कुतः। पश्वनङ्गत्वात् । अनुयाजाः पशोरङ्गमुत्कृष्यमाणाः पश्वङ्गमेवोत्क्रष्टुमर्हन्ति, न सोमाङ्गम् । सोमाङ्गं च सवनीयदेवताः। तस्मात्तासामनुत्कर्षः। यथा निष्कर्षेऽनन्वयः। यथा पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवतानां निष्कर्षेऽमावास्यादेवतानामनन्वयः । इतरत्र चेतरासाम् । तत्कस्य हेतोः । इतरेतरस्यानङ्गत्वात् । तद्वदिहाप्यनुत्कर्षः ॥ ५३ ॥

वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५४ ॥ सि०

अथवोत्कर्ष एव न्याय्यः। कुतः। वाक्यसंयोगात्। सूक्तवाकस्यैकदेशभूतानि सौमिकदेवतासंकीर्तनानि, भृज्यन्निन्द्राय हरिवते धानाः, पूषण्वते करम्भं, सरस्वतीवते परिवापम्। अयं यजमान इति संबध्यते। तथा, इन्द्राय हरिवते धानाभिः, पूषण्वते करम्भेण, सरस्वतीवते परिवापेण सुपस्था अद्य देवो वनस्पतिरभवदिति संबध्यते। तान्येतानि सूक्तवाकस्य मध्य उच्यमानान्यर्थवन्ति। निष्कृष्टानि केवलान्यनर्थकानि भवन्ति। न च सवनीयानां सूक्तवाकोऽस्ति, यत्रैतान्युच्चार्येरन्। पाशुक एव सूक्तवाकस्तेषां प्रसङ्गसिद्धः। अतस्तत्रैतद्देवतानां संकीर्तनं युक्तम्। स चोत्कृष्यते । तस्मात्तासामप्युत्कर्षः। आर्षं चैवमनुग्रहीष्यते।

---

यानाम्। यथा पौर्णमास्यां प्रयुज्यमानः सूक्तवाकोऽमावास्यादेवतां नोत्कर्षति, एवमिहापि ॥ १३ ॥

प्रस्तरस्तावत्प्रासङ्गिकस्तेषाम् । यदर्थश्च प्रस्तरस्तदर्थं प्रहरणम् । प्रहरणाङ्गं च सूक्तवाकः। तस्मात्सूक्तवाकोऽपि परार्थः। सूक्तवाकमध्ये सवनीयदेवतानां पाठात्तेन सहैकवाक्यता[3] बाध्यते। अपि चापकृष्टानि साकाङ्क्षत्वादनर्थकानि भवेयुः।

---

१ भृज्जन्निन्द्राय--ग.। २ नाऽऽकर्षति--घ.। ३ एकवाक्यता बाध्यत इति--अवाक्यमानैकवाक्यताऽपकर्षे सति बाध्येतेत्यर्थः।

यत्तु, यथा निष्कर्षेऽनन्वय इति, समानतन्त्रत्वादर्थलोपादनन्वयः। समानतन्त्रौ दर्शपूर्णमासौ। तयोः साधारणं सूक्तवाकाम्नानम्। तद्यथार्थं निविशते। अर्थलुप्तं चामावास्यादेवतानां पौर्णमास्यां संकीर्तनम्। इतरासां चेतरत्र। यत्कारणम्। या इष्टा देवतास्ताः संकीर्तनेन प्रत्यवेक्ष्यन्ते। इयमपीष्टा न काचिदन्तरितेति। तस्मात्, यथा निष्कर्षेऽनन्वय इत्यदृष्टान्तः॥ ५४॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्य एकादशाध्यायस्य तृतीयः पादः॥

---

अथैकादशाध्यायस्य चतुर्थः पादः॥

---

( राजसूये पृथक्दक्षिणायुक्तनामाग्नावैष्णवादीनां भेदेनाङ्गानुष्ठानाधिकरणम्॥ १॥ )

[१] चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि॥ १॥ पू०

राजसूये यान्यनुक्तदेशकालानि प्रधानानि, यथा, त्रिसंयुक्ते[2] द्वे एवमादि चिन्त्यते। किं तत्राङ्गानां तन्त्रभाव उत भेद इति। किं प्राप्तम्। राजसूयेऽनुक्तदेशकालानां प्रधानानां तन्त्रमङ्गानि। कुतः।

---

न च तन्त्रपदानाम[3]पकर्षो लभ्यते। येन निराकाङ्क्षी भवेयुः। परार्थत्वात्सूक्तवाकस्य। पौर्णमास्याममावास्यायां च तन्त्रेण सूक्तवाको विनियुक्तः। प्रकरणाविशेषात्। तत्रापकर्षो युक्तः[4]। इह तूत्कर्षे सूक्तवाकस्योत्कृष्टा एव सवनीयानां देवताः प्रकाशयिष्यन्ते॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामेकादशाध्यायस्य तृतीयः पादः।

---

१ अमावास्यावृत्ति—क.। २ त्रिसंयुक्ते द्वे इति—' सौमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा ' ' आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा ' इत्यादिना विहितं त्रिकद्वयमित्यर्थः। ३ तन्त्रपदानामिति—'अग्निमद्य होतारमवृणीतायं सुतासुती यजमान' इत्यादीनामित्यर्थः। ४ व्यक्तः—घ.।

समवायात् । फलनिवर्तने तेषां समवायः । समेत्यैतानि फलं साधयन्ति, नैकशः । कथं ज्ञायते । चोदनैकत्वात् । राजसूयेनेत्येकवचनान्तेन शब्देन तानि प्रधानान्युक्त्वा फलसंबन्धः कृतः । तस्मात्समुदायः फलवान् । यच्च फलवत्तच्चिकीर्षितम् । तदर्थेतिकर्तव्यता । इतिकर्तव्यता चाङ्गानि । तस्मात्तन्त्रम् ॥ १ ॥

प्रतिदक्षिणं वा कर्तृसंबन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ सि०

न चैतदेवं, तन्त्रमङ्गानीति । किं तर्हि । भेदेन । कुतः । प्रतिदक्षिणं कर्तृसंबन्धात् । एतेषु कर्मसु दक्षिणाभेदः श्रूयते । आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालो वामनो दक्षिणा । सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणेति । दक्षिणाभेदात्प्रतिदक्षिणं कर्तृसंबन्धो भवति । वामनक्रीताः पूर्वस्य त्रिसंयुक्तस्य कर्तारः । अनङ्गं त उत्तरस्य त्रिसंयुक्तस्य । श्यामपरिक्रीता उत्तरस्य त्रिसंयुक्तस्य कर्तारः । तेऽप्यनङ्गं पूर्वस्य । अतः कर्तृभेदादङ्गभेदः । इष्टिवत् । तद्यथा पौर्णमासकालान्यङ्गानि कालभेदान्न दर्शस्योपकुर्वन्ति । एवमिहापि कर्तृभेदान्न परस्परस्य । तस्माद्भेदेन कर्तव्यानीति । यत्तु चोदनैकत्वादुत्तरस्यापि समुदायो विवक्षित इति । उच्यते । समुदायो हि तन्निर्वृत्त्या । समुदायः फलनिष्पत्त्या विवक्षितः । तदेकत्वात्—फलैकत्वात्, सहवचनं, न प्रयोगैकत्वात्, इष्टिवत् । तद्यथा दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात्समासवचनं, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति ॥ २ ॥

तथा चान्यार्थदर्शनम् ॥ ३ ॥

अन्यार्थोऽप्येतमर्थं दर्शयति । पूर्वं त्रिसंयुक्तमुत्तरं त्रिसंयुक्तमिति । तत्र भेदे हि पौर्वापर्यं स्यात् । नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्यं भवेत् । नैवमेतत् । वाक्यशेषेण तु विज्ञायते, साङ्गयोः प्रधानयोरेतत्पौ-

[ १ ॥ २ ॥

१ अनङ्गमुत्तरस्य—क. ख. २ पौर्णमासी—ग. ।

र्विपर्ययमिति। एवं ह्याह—यत्पूर्वं त्रिसंयुक्तं वीरजननं तत्, यदुत्तरं त्रिसंयुक्तं पशुजननं तदिति। फलसंबन्धश्च साङ्गयोर्भवति, न केवलयोः। तस्माद्दर्शनमेवैतत् ॥ ३ ॥

( राजसूयोपक्रमे वृतानामेव कर्तॄणामान्तमुपादाननियमाधिकरणम् ॥ २ ॥ )

[ २ ] अनियमः स्यादिति चेत् ॥ ४ ॥ पू०

तत्रैव विचार्यते, किमुपक्रमे ये कर्तारस्त एवाऽऽन्तादुतानियमः, ते वाऽन्ये वेति। किं प्राप्तम्। अनियमः स्यादिति चेत्। इति चेत्पश्यसि, प्रतिदक्षिणं कर्तृसंबन्ध इति, अनियमः। पवित्रदक्षिणाभिर्ये परिक्रीताः पवित्रार्थास्ते भवन्ति। पवित्रान्ते तेषामपवर्गः। उत्तरे कर्मणि यथाकामी, ते वाऽन्ये वा स्युः। तस्मादनियमः ॥ ४ ॥

नोपदिष्टत्वात् ॥ ५ ॥

नैतदेवं युक्तम्, अनियम इति। किं तर्हि। य एव प्रक्रमे त एवाऽऽन्तात्स्युः। कस्मात्। उपदिष्टत्वात्। आदावेव वरणकाले यजमानेन तेषामुपदिष्टम्, अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयतेति। वरणं च प्राक् कर्मप्रवृत्तेः। तदगृह्यमाणविशेषत्वात्तन्त्रम्। तेनाऽऽनताः सर्वार्था भवन्ति। आह। यदि समुदायमुद्दिश्य[1] व्रियन्ते

---

३ ॥ ]

पवित्रस्य दक्षिणाम्नानात्पवित्रस्य ये कर्तारस्ते पवित्रार्थमुपादीयन्ते। ते द्वितीयस्य[2] सोमस्य नाङ्गम्। कथम्। अनियमेन कर्तृणामुपादाने प्राप्ते वचनान्नियम्यते। तच्च[3] नियमवचनं यस्यैवार्थेनोपादत्ते[4] तस्यैव तेऽङ्गम्। द्वितीयस्य पुनरसावुपादाननियमो न[5] भवति। यथाऽन्ये पदार्था भेदेन क्रियन्ते, एवं वरणमपि भेदेन प्राप्नोति। तत्र यदि वा त एव वरीतव्याः, अथवाऽन्ये। एवमैष्टिकेष्वपि भेदेनैव ॥ ४ ॥

स्वाराज्यकामस्य राजसूयसंज्ञको याग[6] उपायत्वेन चोद्यते। स उपाये प्रवर्तमान आदावेवर्त्विजो वृणीते, राजसूयसंज्ञकेन यागेन याजयतेति। तच्चागृह्यमाणविशेषत्वात्सर्वेषां कृतं भवतीति।

---

१ सर्वमुद्दिश्य—मु.। २ द्वितीयस्य सोमस्येति—अभिषेचनीयाख्यस्य सोमयागस्येति शेषः। ३ तत्र—प्र.। ४ उपादत्ते—उपादापयतीत्यर्थः। ५ न भवतीति—पूर्वदिनकर्मणि कृतो वरणाख्य उपादाननियमो द्वितीयस्य कर्मणोऽङ्गं न भवतीत्यर्थः। ६ यागः—यागसमुदाय इत्यर्थः।

तत एवम्। अथ पुनरवयवं पवित्रमुद्दिश्य ततो न सर्वार्थाः। तदर्था एव भवन्ति। किं पुनरत्र युक्तम्। समुदायमुद्दिश्येति। तथा सत्यविघ्नेन कर्तुः कर्म निर्वर्तते। इतरथा पवित्रान्ते, उत्तरस्मिन् कर्मणि त एव कामतो न संप्रवर्तेरन्। अन्ये च कर्तारो नोपपद्येरन्। कर्मविघ्नः स्यात्। लाघवापत्तिश्च। एवं च सति लाघवं भवति। इतरथा प्रतिकर्मोपादानं तद्गुरुः स्यात्। ऋत्विग्याज्ययोश्चाव्यभिचारो धर्मः।

---

अपि च समुदायमुद्दिश्य क्रियमाणेषु यो यत्कालो निर्ज्ञातः स तत्काल एव करिष्यते। अनियमेनोपादाने पूर्ववृता नेच्छेयुरपि। कदाचिदन्ये न लभ्येरन्। तत्र योऽसौ काल उपदिष्टः स बाध्यते। ततः कर्मवैगुण्यात्फलाभावो भवेत्। तस्मान्न प्रतिकर्म वरणं कर्तव्यमिति।

अयुक्तमिदं व्याख्यानम्। यः कर्माणि जानाति तस्य राजसूयेनाधिकारः। स एवं जानाति, ऐष्टिकं वरणमिष्टिष्वेवोपकरोति, न सौमिकेषु। यच्च सौमिकं वरणं न तदैष्टिकेष्विति। यथाऽऽदाधाने कृते कश्चिदेवं वरणं कुर्यात्, अहं कर्माणि करिष्ये, तत्र मे भवन्त ऋत्विजो भवतेति। यथैतदप्रमाणकं, एवमिदमपि। न कश्चिदनयोर्विशेषः। न च पवित्रस्याङ्गं सोम इष्टिर्वा, येन प्रासङ्गिकेन वरणेन निवृत्तिः। यथा दीक्षणीयादीनां ज्योतिष्टोमिकेन वरणेन।

यदप्युच्यते समुदायमुद्दिश्य क्रियन्त इति। तदयुक्तम्। न हि समुदायः फले चोद्यते। येन तदर्थं वरणं स्यात्। कतरो वा शब्दः समुदायवाचकः। राजसूयशब्द इति चेत्। तन्न। सोमपश्विष्टिदर्विहोमा निरपेक्षा उत्पन्नाः। ते निरपेक्षा एव प्रयोजनमपेक्षन्ते। तेषामपेक्षमाणानां संनिधावरूपः शब्दः श्रूयमाणो रूपवतः फले

---

१ अथ पूर्वमव—ख.। २ कालातिपत्तिश्च—ग.। अत्र च जैमिनीयन्यायमालादिमुद्रितपुस्तकेषु 'लाघवातिपत्तिश्च' इत्येवं पृथक्सूत्रत्वेन प्रकाशनं दृश्यते। तत्र दृढतरप्रमाणान्तराभावादस्माभिरुपेक्षितम्। ३ यत्काले—घ.। ४ विजानाति—च. ज.। ५ अप्रमाणकम्—अशास्त्रीयमित्यर्थः। ६ न विशेष इति—अशास्त्रीयत्वेन साम्यादिति शेषः। नहि शास्त्रेण सर्वादौ वरणं कर्तव्यतया विहितम्: यदपि चोदकेनेष्टिपश्वादौ प्राप्तं यदपि देशकालभेदात्प्रतिकर्म कर्तव्यम्। नापि पवित्रस्य यः कालः सोऽन्येषां भवितुमर्हति। येन कालैक्याद्द्रागतन्त्रता स्यादिति भावः। ७ नापि प्रसङ्गतो वरणैक्यमित्याह—न चेत्यादिना। ८ सोम इति—इतरसोमयाग इत्यर्थः। ९ निवृत्तिरिति-अन्यत्र वरणनिवृत्तिरित्यर्थः। १० यदुच्यते-घ.। ११ शब्द इति-'राजा राजसूयेन स्वाराज्यकामो यजेत' इति चोदनात्मकः शब्द इत्यर्थः।

तस्मात्समुदायमुद्दिश्य त्रियन्ते । तथा च तन्त्रम् ॥ ५ ॥

प्रयोजनैकत्वात् ॥ ६ ॥

एकं च प्रयोजनमवयवदक्षिणानामपि समुदायसंपत्तिः । न ह्यवयवेन केवलेन कृतेन कश्चिदर्थः । अवयवैः समुदायः संपादयितव्य इत्यवयवैः परिक्रीयन्ते । तेषां समुदायसंपत्तौ कृतार्थत्वम् । तस्मात्त एव कर्तार आन्तात्स्युः ॥ ६ ॥

आह । यदि समुदायसंपत्त्यै, अवयवशः परिक्रयः, सकृदेव कर्तव्यः, किं पुनरावृत्त्येति । उच्यते—

विशेषार्था पुनःश्रुतिः ॥ ७ ॥

उभयथा परिक्रये प्राप्ते सकृद्वा प्रत्यवयवं वा, परिक्रयविशेषो नियम्यते, प्रत्यवयवं कर्तव्यः । द्रव्यसंख्यानियमेन च वामनो दक्षिणा, अयुतमभिषेचनीये ददातीत्येवं क्रियमाणमभ्युदयकारि भवतीति ॥७॥

( अवेष्टेर्भिन्नतन्त्रताधिकरणम् ॥ ३ ॥ )

[३] अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ८ ॥ पू०

---

विदधाति । ये फले विधीयन्ते तेषामितिकर्तव्यता । अयं च वरणानियम इतिकर्तव्यतांशेन गृह्यते । तस्माद्यथाऽन्येतिकर्तव्यता भेदेन क्रियन्ते, एवं वरणमपि भेदेन कर्तव्यम् । न कश्चिद्विशेषः । तस्मादेकैकस्य भेदेन वरणम् ।

यदि समुदायमुद्दिश्य वरणं तन्त्रेणेष्यते ततोऽन्याऽपीतिकर्तव्यता कस्मात्तन्त्रेणैव न क्रियते । कस्तव वरणे पक्षपातः । तस्माद्यदेतद्वरणं वैदिकं नैवेदं चिन्त्यते । किंतु योऽयं लौकिकोऽभ्युपायः स चिन्त्यते । पूर्वपक्षवादी—अनियमेन लौकिकमभ्युपायमिच्छति । सिद्धान्तवादी तु लौकिकमभ्युपायमादावेव नियमेनेच्छति ॥ ९ ॥ [ ९ ॥ ७ ॥ ]

---

१ समुदायमुद्दिश्येति—यदत्र सर्वादौ समुदायमुद्दिश्य वरणं भाष्यकारैः साधितं न तद्वैदिकवरणाभिप्रायेण । प्रयाजादीनामिव वैदिकवरणस्यापि तन्त्रत्वे प्रमाणाभावात् । अपि तु कर्मविक्षेपाशङ्कयाऽऽदाववश्यकर्तव्यलौकिकसंवितकरणाभिप्रायकमिति ज्ञेयम् । तदिदं वार्तिक एव विस्तरशः प्रतिपादितम् । २ अवयवे—ख. । ३ कश्च–घ. । ४ चिन्त्यत इति–किं तन्त्रं पृथग्वेत्य नियमः, उत तन्त्रमेवेति चिन्त्यत इत्यर्थः ।

तस्मिन्नेव राजसूयेऽवेष्टिः, आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा, बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणेत्याम्नाता । तस्यां चिन्त्यते किमङ्गानां भेदोऽथ तन्त्रभाव इति । किं प्राप्तम् । अवेष्टौ चैकतन्त्र्यं स्यात् । तन्त्रतालिङ्गदर्शनात् । लिङ्गं हि तन्त्रभावस्य सूचकं दृश्यते । यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवमिति । सामस्त्ये च हविषां मध्ये निधानमुपपद्यते । एकतन्त्रे च सामस्त्यम् । तस्मादेकतन्त्र्यम् । ननु लिङ्गमुपदिश्यते, कुतः प्राप्तिः । सह चोदनया प्राप्तिः । अथैता दिशामवेष्टयः । इमं वा अथ तं लोकं पुनरुपावरोहन्तीति । अवेष्टिरिति चैकवच्छ्रुतेः । एतयैवान्नाद्यकामं याजयेदिति च ॥ ८ ॥

वचनात्कामसंयोगेन ॥ ९ ॥ सि०

न वा तन्त्रभावः । कुतः । उक्तो न्यायः, प्रतिदक्षिणं वा कर्तृसंबन्धः स्यादिति । लिङ्गदर्शनादिति यदुक्तम् । तत्र ब्रूमः । वचनादियं कामसंयोगेनापि श्रूयते, एतयैवान्नाद्यकामं याजयेदिति । तत्रैतद्दर्शनम् । न च तत्र दक्षिणाभेदः । न हि राजसूयिक्यो दक्षिणास्तत्र प्राप्यन्ते । एतयैवान्नाद्यकामं याजयेदित्येकवचनान्तेन शब्देन फलं प्रति निर्देशात्सहप्रयोग एव ।

---

' बार्हस्पत्यं मध्ये विधाय ' इति मध्यशब्दोऽयम् । यद्यन्यान्यपि हवींषि तन्त्रेण क्रियन्ते, एवं मध्यशब्दो भवति । ' आहुतिमाहुतिं हुत्वा ' इति तन्त्र एवोपपद्यते । ' एतया यजेत ' इत्येकवचनप्रयोगः श्रूयते । यदि भेदेन प्रयोगो भवेत्तथा सति प्रयोगे बहुवचनं श्रूयेत । तस्मात्प्रयोग एकवचनश्रवणात्तन्त्रम् ॥ ८ ॥

' प्रतिदक्षिणं वा कर्तृसंयोगात् ' इत्यनेन न्यायेन तन्त्रभेदः प्राप्नोति । ' मध्ये निधाय ' इत्यनेन लिङ्गेन च तन्त्रं प्राप्नोति । तत्र को निर्णयः, भेदेन वा तन्त्रम् । उच्यते । ' एतयाऽन्नाद्यकामो यजेत ' इति कामसंयोगेन श्रूयते । तत्र योऽन्नाद्यं कामयमानः करिष्यति तस्य तन्त्रेण प्रयोगो भविष्यति । भेदेन क्रियमाणायां यत्प्रयोग एकवचनं तद्बाध्येत ।

---

१ ऐकतन्त्र्ये च—मु. । २ उक्त इति—( अ० ११ पा० ४ अ० १ ) इत्यत्रेति शेषः । ३ अयमिति–श्रूयत इति शेषः । ४ श्रूयेतेति—एकवचनं श्रूयमाणं नाऽऽद्रियेतेत्यर्थः । ५ प्रयोग इति–अन्नाद्यकामप्रयोग इत्यर्थः । ६ ( अ० ११ पा० ४ अ० १ सू० २ ) ।

तत्रैकदर्शनमुपपद्यते । तस्मात्तदपेक्षमेतत् ॥ ९ ॥

क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ १० ॥

अथ पश्यसि क्रत्वर्थायामेवैतद्दर्शनं भवतु । एवं प्रकृतशेषत्वं भविष्यतीति । तन्न । कुतः । वर्णसंयोगात् । यदि ब्राह्मणो यजेत, यदि वैश्य इति । न च क्रतौ ब्राह्मणवैश्यौ स्तः । राजन्यस्यैव राजसूयः । राजा राजसूयेनेति वचनात् । तस्मादक्रत्वर्थायामेतद्दर्शनम् ॥ १० ॥

( पवमानहविषां त्रयाणामेकतन्त्रत्वाभावाधिकरणम् ॥ ४ ॥ )

[४] पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ ११ ॥ पू०

आधाने पवमानेष्टयः, अग्नये पवमानायाष्टाकपालं निर्वपति, अग्नये पावकाय, अग्नये शुचय इति । तत्र विचार्यते । किमासामैकतन्त्र्यं, भेदो वेति । किं प्राप्तम् । पवमानहविःष्वैकतन्त्र्यं स्यात् । कुतः । प्रयोगवचनैकत्वात् । एक आसां प्रयोगवचनः, अह्नो निरुप्याणीति । प्रयोगवचनैकत्वात्सहप्रयोगः । तत्र न गृह्यते विशेषः । तस्मादैकतन्त्र्यम् ॥११॥

लिङ्गदर्शनाच्च ॥ १२ ॥

लिङ्गं च सहप्रयोगं दर्शयति । समानबर्हींषि भवन्तीति । अनुवादोऽयं वर्तमानापदेशात् ॥ १२ ॥

वचनात्तु तन्त्रभेदः स्यात ॥ १३ ॥ सि०

न चैकतन्त्र्यं स्यात् । किं तर्हि । तन्त्रभेदः । स च भवन्नेवं स्यात्, प्रथमाया भेदः, उत्तरयोस्तन्त्रम् । कस्मात् । वचनात् । वचनमिदं भवति, अथ यः कामयेत वर्षीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरुप्य, अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी

---

तस्मादेकवचनादनन्यथासिद्धालिङ्गाच्च कामे तन्त्रेण प्रयोगः । क्रत्वर्थायां त्ववेष्टावुभयाभावाद्दक्षिणाभेदाच्च भेदेनैव प्रयोगः ॥ ९ ॥ [ १० ॥ ]

' अह्नो निरुप्याणि ' इति कालवचनं मन्यमानस्तन्त्रतामापादयति । यथा पौर्णमास्यां त्रयाणां कालसंयोगात्तन्त्रेणाङ्गानि, एवमिहापि ॥ ११ ॥ [ १२ ॥ ]

सिद्धान्तवादी तु, अह्नःशब्देन सद्यःकर्तव्यानीति विज्ञायते, न कालं प्रत्युपादी-

---

१ तत्र न—क. ख. । २ न वा—ख. । ३ वसीयान्—ख. । ४ निरूप्य—मु. । ५ मन्वानः—घ. ज. । ६ सद्य इति—यस्मिन्नहन्याधानं कृतं तस्मिन्नेवाह्नीत्यर्थः ।

निर्वपेत्, यदेनमग्रहीत्तेन स उत्तरं वर्षीयान् श्रेयान् भवतीति । किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । तस्मादेवं कर्तव्यम् । अथ यदुक्तं प्रयोगवचनैकत्वादिति । तस्य कः परिहारः । नासौ प्रयोगवचनः । कालवचनोऽसौ, अह्नो निरुप्याणीति । तस्मादहेतुः स भवति ॥ १३ ॥

सहत्वे नित्यानुवादः स्यात् ॥ १४ ॥

यच्चोक्तं, समानबर्हींषि भवन्तीति समानप्रयोगं दर्शयतीति । तत्र ब्रूमः । सहत्वे नित्यानुवादः स्यात् । इदमपरं श्रूयते, यो ब्रह्मवर्चसकामः स्यात्तस्य सर्वाणि हवींषि निरुप्याणीति । तस्यैं सहप्रयोगो भवति । तस्मिन् सहत्वे नित्यानुवादोऽयं स्यात्, समानबर्हींषि भवन्तीति । कथं पुनर्निरुप्याणीत्युक्ते सहप्रयोगो विज्ञायते । निरुप्याणीति बहुत्वयुक्तः प्रयोगो विज्ञायते । तच्च बहुत्वमुपादेयत्वेन चोदितानां विवक्षितम् । न चैकशः प्रयोगो बहुसंयुक्तः प्रयोगो भवति । तस्मात्सहप्रयोगो विज्ञायते ॥ १४ ॥

( द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वाधिकरणम् ॥ ५ ॥ )

[ ५ ] द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १५ ॥ पू०

द्वादशाहेन प्रजाकामं याजयेदिति श्रूयते । तत्र विचार्यते । किमेकैकशः पृथक् पृथग्दीक्षोपसदेनाहः संपाद्य द्वादश पञ्चविंशतिरात्राः कर्तव्याः, अथवा द्वादश साद्यस्क्राः, अथवा चतुरहे दीक्षाश्चतुरह उपसदः,

---

यन्ते । अह्नःशब्दस्य कालो न वाच्यः । येन कालं प्रत्युपादीयेरन् । तस्माद्भेदो वचनात् ॥ १३ ॥

'समानहर्वींषि भवन्ति' इत्यनुवादः । 'ब्रह्मवर्चसकामस्य सर्वाणि हवींषि सह निरुप्याणि' इति । तत्र निर्वापे सहचोदिते वचनात्तन्त्रं भवति । तस्मात्तदपेक्षयाऽनुवादो भवति ॥ १४ ॥

प्रकृतादुपांश्वादेर्हारियोजनपर्यन्तस्य यागस्याहःशब्दः परिच्छेदको दृष्टः । तेन

---

१ निरुप्य—मु । २ तत्र—ग. । ३ किं पुनः—क ख. । ४ गम्यते—क. ख. । ५ निरुप्याणि—क. ख. । ६ तु प्रकृति—मु ।

चतुरहे सुत्याः, अथवा स्वस्थानानां दीक्षोपसत्सुत्यानां विवृद्धिरिति। किं प्राप्तम् । तत्सूत्रेणैव प्रकृपः । द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ।

एकैकं सदीक्षोपसदमहरहरपवृज्येत । द्वादश पञ्चविंशतिरात्राः कर्तव्याः । कुतः । तत्प्रकृतित्वात् । सदीक्षोपसदमहरपवर्जितं ज्योतिष्टोमे । यतस्तत्प्रकृतीन्येतानि द्वादशाहानि पृथग्भूतानि कर्माणि पृथक्त्वेनैव धर्मानाकाङ्क्षन्ति । तस्माज्ज्योतिष्टोमवत्सदीक्षोपसदमेकैकमहः कर्तव्यमिति ॥ १५ ॥

## अह्नां चाश्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यंदिने ॥ १६ ॥

न चैतदस्ति, यदुक्तं द्वादश पञ्चविंशतिरात्राः कर्तव्या इति । किं तर्हि । द्वादश साद्यस्क्राः कार्याः । किं कारणम् । अह्नां श्रुतिभूतत्वात् । द्वादशाहेनेति द्वादशसंख्याऽह्नां प्रत्यक्षश्रुता । सा बाध्येत, यदि द्वादश पञ्चविंशतिरात्राः क्रियेरन् । तस्माद्द्वादशस्वहःस्वेकैकं

---

तत्परिच्छेदद्वारेण कर्माणि वर्ततेऽहःशब्दः । इहापि द्वादशाहे प्रथममहर्द्वितीयमहरित्येवं श्रूयते । सोऽयमहःशब्दः श्रूयमाणः कर्म लक्षयति । यद्यत्कर्म लक्ष्यते, अनेन तदुत्पद्यते । एवं दश सौमिकान्यहःसंयुक्तानि कर्माण्युत्पद्यन्ते[१] । अपरौ प्रायणीयोदयनीयौ । तावपि लक्षणया कर्म प्रतिपादयतः । तस्माद्द्वादश कर्माण्युत्पद्यन्ते । तान्युत्पन्नानि साकाङ्क्षाणि 'द्वादशाहेन प्रजाकामं याजयेत्' इति फले विधीयन्ते । तत्र द्वादशाहशब्दः सामानाधिकरण्याद्योगेनायमपि कर्मवचनः, न लौकिकमहर्ब्रवीति । संख्याशब्दस्तु द्वादश यागान्प्रतिपादयति । तत्रैकैको यागः फलसाधनत्वाज्ज्योतिष्टोमाद्विध्यन्तं गृह्णाति । तत्र चोदकेन ज्योतिष्टोमिके दीक्षोपसत्परिमाणे प्राप्ते वचनेन द्वादश दीक्षा विधीयन्ते, उपसदश्च । तस्मादेकैको यागः पञ्चविंशतिरात्रः ॥ १९ ॥

यागास्तावत्फले विधीयन्त इति तुल्यम् । संख्याशब्दोऽहर्विशेषणार्थमुच्चार्यते, द्वादशाहानि भवन्तीति । द्वादशशब्दोऽपि श्रुतिभूतः । अहःशब्दोऽपि लौकिकमहर्ब्रवीति न कर्म । लक्षणार्थो भविष्यति । द्वादशाहेनेति द्वादशभिरहोभिस्ते यागाः कर्तव्याः ।

---

१ ततः—ग. । २ अह्नां चा—ग. । ३ उपपद्यन्ते-घ. । ४ न च—च. । ५ ज्योतिष्टोमविध्यन्तं-च. ज. । ६ परिमाणे इति-'एकादीक्षा' 'तिस्र उपसदः' इत्यादिना विहिते परिमाण इत्यर्थः । ७ यागः—घ. ८ विधीयेत-घ. । ९ शब्दवृत्तः-घ. ।

प्रधानं प्रयुज्येत । प्रधानकालत्वाच्चाङ्गानां तत्कालं तदीयं दीक्षोपसदम् । यथा माध्यंदिने । तद्यथा, सांतपनीयस्य माध्यंदिने निरुप्यत इति वचनान्मध्यंदिनकालान्येवाङ्गानि भवन्ति, एवमिहापि । तस्माद् द्वादश साद्यस्क्राः कर्तव्याः ॥ १६ ॥

अपि वा फलकर्तृसंबन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १७ ॥

अपि वा नैवं स्याद्द्वादश साद्यस्क्रा इति । कथं तर्हि । सहप्रयोगः स्यात् । चतुरहे दीक्षाश्चतुरह उपसदश्चतुरहे सुत्याः । कुतः । फलकर्तृसंबन्धात् । फले कर्तृषु चैतेषां प्रधानकर्मणां समेतानां[1] संबन्धः । द्वादशाहशब्देन समुदायवचनेन संयोगात्फले संबन्धः । सत्रे स्वयंकर्तृत्वादहीने च दक्षिणैक्यात्कर्तृषु च । एकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति । आग्नेयाग्नीषोमीयवत् । यथाऽऽग्नेयाग्नीषोमीययोरेकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति । सहप्रयोगे च विशेषाग्रहणात्तन्त्रं दीक्षोपसदं, द्वादशाहश्रुतिश्चानुग्राह्या । तदुभयमेवमुपपादितं भवति सहप्रयोगोऽहःसंख्या च । तस्मादेष पक्षः श्रेयान् ॥ १७ ॥

साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १८ ॥ सि०

---

तस्मादनेन द्वादशाहेनेति साङ्गानां द्वादशाहकालत्वं प्रतिपाद्यते । याऽसौ चोदकेनान्यादृशी परिसमाप्तिः[2] प्राप्नोति, सा प्रत्यक्षयाऽहर्गतया संख्यया बाध्यते[3] । एवं च प्रधानसंनिधावङ्गानि कृतानि भविष्यन्ति ॥ १६ ॥

यागाः फले चोद्यन्ते । तेषां द्वादशसंख्या प्रत्यक्षा श्रूयते । सा चोदकप्राप्तां संख्यां कार्योपस्या बाधते । तत्र ये संख्यायुक्तास्ते बाध्यन्ते । ते च दीक्षणीयादयः संख्यायुक्ताः, नाग्नीषोमीयादयः[4] । अपि चैकस्मिन्फले चोदितानां तन्त्रेणेतिकर्तव्यता भविष्यति । दक्षिणैक्यात्[5] कर्तृभेदो नास्ति । तस्मात्सहप्रयोगः सिद्धो भवति । सत्रे च यजमाना एव कर्तारः । तत्रापि कर्तृभेदो नास्ति । तत्रापि तन्त्रम्[6] ॥ १७ ॥

---

१ समवेतानां—ग. । २ प्राप्तिः सा—च. ज. । ३ निवार्यते—च. ज. । ४ अग्नीषोमीयः पशुः—च. ज. । ५ नन्वेकफलकानामपि राजसूयवत्प्रयोगभेदो भवत्विति शङ्कायामाह—दक्षिणैक्यादिति । ६ तन्त्रमिति—दीक्षोपसद इति शेषः ।

अथवैतदपि न युक्तम् । कुतः । साङ्गकालश्रुतित्वात् । यद्यत्र प्रधानानामेव कालश्रुतिः स्यान्नाङ्गानां, तत एवं स्यात् । अत्र तु साङ्गानां कालः श्रुतः । द्वादश दीक्षाः, द्वादशोपसद इति दीक्षाणामुपसदां च पृथक् पृथक् कालः श्रुतः । यदि चतुरहे क्रियेत, ततो बाध्येत । तस्मात्स्वस्थानानां विवृद्धिः । तदपेक्षं च द्वादशत्वम् । दीक्षोपसत्सुत्यापेक्षम् । प्रथमं दीक्षाः, तासां तत्रैव द्वादशत्वम् । तत उपसदः, तासामपि तद्देशानामेव । अन्ते सुत्या, तस्या अपि तत्स्थानाया एव विवृद्धिः । तदपेक्षं द्वादशत्वम् ॥ १८ ॥

दीक्षोपसदां च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥ १९ ॥

अपि च, द्वादशाहेन प्रजाकामं याजयेदित्युक्त्वा त्रिवृदादीन्यनुक्रान्तानि[1] । तस्मादपि तदपेक्षा द्वादशसंख्या ॥ १९ ॥

वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ॥ २० ॥[2]

---

भावयेत्प्रजां[3] । केन । यागेन । कतरेण । द्वादशाहसंज्ञकेन यागेन । सामानाधिकरण्यात् । अहःशब्दः कर्म ब्रवीति । संख्याशब्दः ' संख्यया[4] कर्मभेदः ' इत्यनेन न्यायेन द्वादश यागान्प्रतिपादयति । तत्रैकैको यागश्चोदकेन धर्मान्गृह्णाति । तत्र प्रत्यक्षेण संख्यावचनेन चोदकेन या दीक्षोपसत्संख्या प्राप्नोति सा बाध्यते । दक्षिणैक्यात्तन्त्रेण प्रयोगः । तस्माद्दीक्षाणामुपसदां च स्वस्थानविवृद्ध्या प्रयोगः । द्वादशसंख्या[5] च या द्वादशश्रुतेः[6] सा कर्मोपकर्मभेदेनो[7]पपन्ना भवति । एवं च ' षट्त्रिंशदहो वा एष द्वादशाहः ' इति दर्शनमनुगृहीतं भवति ॥ १८ ॥ [ १९ ॥

---

१ त्रिवृदादीनीति—अहानीति शेषः । २ इदं च सूत्रं शास्त्रदीपिकादिमुद्रितपुस्तकेषु नोपलभ्यते । एवं क. ख. संज्ञकयोरादर्शपुस्तकयोरपि पृथङ्नोपलभ्यते । तथाऽपि ग. संज्ञके ' एवं वसतीवरी ' इत्यादिभाष्यापेक्षया पृथगस्योपलम्भात्प्रकाशितामिति ज्ञेयम् । ३ प्रजां—घ. । ४ ( अ० २ पा० २ अ० ७ सू० २१ ) । ५ द्वादशसंख्याऽवयवद्वादशसंख्यया भवति । एवं कर्मभेदः । षट्—घ. मु. । ६ द्वादशश्रुतेरिति—प्रवृतीनिमित्तत्वेनावगम्यत इति शेषः । ७ कर्मोपकर्मेति—कर्मपदेन प्रधानकर्माण्युच्यन्ते । उपकर्मपदेनाङ्गकर्माणीति ज्ञेयम् ।

एवं च वसतीवरीपर्यन्तानि पूर्वाण्यस्वकालत्वादगृह्यमाणविशेषाणि तन्त्रं भवन्ति। अवभृथादीनि चोत्तराणि। तस्य दीक्षाविसर्गार्थत्वात्। स हि दीक्षोन्मोचनार्थः। एवं ह्याह। अप्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गं लोकमायन्। यदप्सु स्नाति तामेव दीक्षामालभते। अथ यदपोऽवभृथमभ्यवयन्ति तामेव दीक्षां पुनरप्सु प्रवेशयन्तीति। तन्त्रं च दीक्षोत्पन्ना। सा तन्त्रमेवोत्स्रक्ष्यते। विशेषाग्रहणात्॥ २०॥

## तथा चान्यार्थदर्शनम्॥ २१॥

एवं च सत्यन्यार्थदर्शनमिदं युक्तं भविष्यति, षट्त्रिंशदहो वा एष द्वादशाह इति॥ २१॥

## चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात्॥ २२॥

यथाऽऽग्नेयाग्नीषोमीयवादीति। युक्तं यदाग्नेयाग्नीषोमीययोश्चोदनापृथक्त्वेऽप्यैकतन्त्र्यं, सहप्रयोगः। कुतः। समवेतानां कालसंयोगात्। समवेतानामङ्गप्रधानानां कालसंयोगात्। पौर्णमास्यां पौर्णमास्या यजेत, साङ्गयेति। तस्मात्तन्त्रम्। पौर्णमास्यामेवाङ्गानि च प्रधानानि च क्रियन्ते। इह पुनः, साङ्गकालश्रुतित्वादित्येवमपदिष्टो हेतुः। तस्मादत्र द्वादशाहेऽङ्गप्रधानानि पौर्णमासीवत्सहा कार्याणि॥ २२॥

( द्वादशाहे सुत्याकालीनाङ्गानामावृत्त्यधिकरणम्॥ ६॥ )

## [ ६ ] भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्॥ २३॥ सि०

अथ यानि प्रधानैरपृथक्कालान्यङ्गानि तेषु चिन्त्यते। किं तान्यपि तन्त्रमथवा भेदेनेति। किं प्राप्तम्। तन्त्रमिति। किं कारणम्। एवं सहत्वस्य वक्ता प्रयोगवचनोऽनुग्रहीष्यते, द्वादशाहेन प्रजाकामं याजयेदिति। तदुक्तं, विधिर्वेत्प्रकरणाविभागे प्रयोगं बादरायण इति। एवं प्राप्ते, ब्रूमः।

भेदस्तु स्यात्। कुतः। तद्भेदात्। तदित्यनेन पूर्वसूत्रनिर्दिष्टः

---

२०॥ २१॥ २२॥

---

१ ( अ० ११ पा० ४ अ० ५ सू० १८ )। २ उपदिष्टः—ग.। ३ ( अ० ११ पा० १ अ० १० सू० ६५ )।

कालः प्रतिनिर्दिश्यते । कालभेदात् । काले भिद्यमाने तन्त्रभेदो भवति । यथा दर्शे पूर्णमासेऽपि । इहापि कालभेदः । अद्य श्वः परश्व इति । तत इहापि कर्मभेदः स्यात् । करणभेद इत्यर्थः । कथं पुनरङ्गानां कालभेदो विज्ञायते । तेषां प्रधानशब्दत्वात् । प्रधानशब्दगृहीतान्यङ्गानि यत्र प्रधानं तत्र विज्ञायन्ते । यदद्य प्रधानं तस्याद्यकालान्यङ्गानि । यत् श्वस्तस्य श्वःकालानि । तस्माद्भेदः ॥ २३ ॥

## तथा चान्यार्थदर्शनम् ॥ २४ ॥

पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इति भेदेनाह्नां पत्नीसंयाजान्ततां दर्शयति ॥ २४ ॥

## श्वः सुत्यावचनं तद्वत् ॥ २५ ॥

संस्थिते संस्थितेऽहन्यग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यतीति, संस्थिते संस्थित इति वीप्सावचनात्सुब्रह्मण्याभेदं दर्शयति ॥ २५ ॥

## पश्वतिरेकश्च ॥ २६ ॥

पश्वतिरेकश्च दृश्यते, य एकः पशुरतिरिच्यते स ऐन्द्राग्नः कार्य इति । न तावदतिरिच्यते, [1]यद्येकैको न भवति, एकादशैते पशवो द्वादशाहानि । तत्पश्वालम्भभेद उपपद्यते । तन्त्रभावे सकृदेवैकादशिनानालभेत । तस्मादपि भेदः ॥ २६ ॥

( द्वादशाहे—उपसत्कालीनसुब्रह्मण्याह्वाने विवृद्धसुत्याहानुपलक्षणाधिकरणम् ॥ ७ ॥ )

## [ ७ ] सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादाबाहनवत् ॥ २७ ॥ पू०

उपसत्कालं सुब्रह्मण्याह्वानं, चतुरहे सुत्यामागच्छ मघवन्निति द्वादशाहे चोदकेन प्राप्यते । तत्रेदं विचार्यते । द्वादशाहे सुत्याहान्युपलक्षयितव्यानि, उताविकारेणैव प्रयोगः कर्तव्य इति । किं प्राप्तम् । सुत्याविवृद्धावेतस्यां सर्वेषामह्नामुपलक्षणं कर्तव्यम् । कुतः । प्रकृत्यन्व-

---

२३ ॥ २४ ॥ २५ ॥ २६ ॥ ]

प्रकृतौ ' चतुरहे सुत्यामागच्छ मघवन् ' इति कालेयत्ता विवक्षिता । इह पु

---

१ यद्यनेको भवति—ग. ।

यात् । प्रकृतौ सौत्यमहरुपलक्षितम् । सर्वाणि चैतानि तत्प्रकृतीनि । अतः सर्वाण्युपलक्षणीयानि । नन्वेकैवासौ देवता, इन्द्रः सकृदुपलक्षणेन संस्कृतः संस्कृत एव । तस्य पुनरुपलक्षणमनर्थकमिति । उच्यते । अ[1]द्योपलक्षणकृतः संस्कारः सोऽद्यतनस्य प्रधानस्याङ्गम्[2] । तस्मादुत्तरार्थं पुनः पुनरुपलक्षयितव्यः । आवाहनवत् । तद्यथा, आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान इत्येकत्वेऽप्यग्नेर्देवतायाः कर्मभेदाद्भेदेनाऽऽवाहनं क्रियते । एवमिहापि ॥ २७ ॥

अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् ॥ २८ ॥ सि०

अपि वा—न स्यात्सर्वेषामुपलक्षणम् । अविकारेणैव प्रयोगः स्यात् । कुतः । इन्द्रा[3]भिधानत्वात् । इन्द्रोऽत्रोपलक्षणेन संस्क्रियते । स सकृत्संस्कृतः संस्कृत एव, न पुनः संस्कर्तव्यः । ननु चतुरहेऽसौ संस्कृतः, चतुरहे सुत्यामागच्छेति वचनात् । अविवक्षितोऽत्र कालः, इन्द्र आगच्छेत्येतावदेव विवक्षितम् । विवक्षिते सति काले वाक्यं भिद्यते । आगच्छ मघवन् चतुरह आगच्छेति सकृदुच्चरिताऽऽगच्छे[4]तिविभक्तिरुभौ संबन्धौ न शक्नोति वदितुम् । अथ कस्मादिन्द्रागमनसंबन्धो

---

चोदकेन तथैव प्राप्नोति[5] । सा चोहमन्तरेण न शक्यते विवक्षितुम् । तस्मादूहः कर्तव्यः, द्वादशाहे त्रयोदशाह इति । न चैकत्वाद्देवतायाः सकृदुपलक्षणं कर्तव्यमित्ययमर्थो लभ्यते । कथम् । या प्रथमस्य यागस्य संस्कृता देवता सा द्वितीयस्य संस्कृता न भवति, कालभेदात् ॥ २७ ॥

'इन्द्र आगच्छ' इति विवक्षितं 'चतुरहे' इत्यविवक्षितं, वाक्यभेदभयात् । एवं 'इन्द्र आगच्छ, तत्सुत्यामागच्छ' इति वाक्य[6]भेदः । एवं वाक्यभेदभयाच्च सुत्याग्रहणमप्यविवक्षितमेव । तस्मात्प्रकृतावप्यविवक्षितत्वाद्विकृतावप्यविकारेणैव प्रयोग इति ।

---

१ अद्योपलक्षण—क. । अद्य य उपलक्ष—ग. । २ अङ्गानि क्रियन्ते—क. ख. । ३ इन्द्राभिधानात्—क. ख. । ४ आगच्छेति विभक्तिः—मु० । ५ तथैव प्राप्नोति—कालेयत्ता सर्वेषामह्नां भेदेन वक्तव्या प्राप्नोतीत्यर्थः । ६ वाक्यभेद एव । वाक्य—ग. मु. ।

विवक्षितो न पुनः कालाभिसंबन्धः। आगच्छ मघवन्निति प्रत्यक्षः संयोगः। चतुरह आगच्छेति परोक्षः। सुत्याशब्देन व्यवायात्।

ननु च सुत्यामागच्छेत्यपि प्रत्यक्षः। स विवक्षितो भवतु। नैवं कश्चिद्विरोधः। सुत्यात्वस्याविशेषात्। ननु चतुरह इति सुत्याविशेषो गम्यते। न खलु। किं कारणम्। कालस्य लक्षणार्थत्वात्। चतुरहकालोऽत्र सुत्यालक्षणार्थः। चतुरहादिसुत्यामागच्छेति। यत्कारणम्। नात्र देवताऽऽगच्छति। यजनो तूद्देशेन केवलमङ्गी भवति। स यजतावङ्गभावोऽयमुपलक्ष्यते। सर्वसुत्यासु चासौ तुल्यः। तत्र चतुरहव-

---

एतदयुक्तम्। यदीदृशेऽपि वाक्यभेदो भवताऽङ्गी क्रियते, सर्वत्रैव वाक्यभेदः स्यात्। 'व्रीहीन् प्रोक्षति' इति प्रोक्षणं कर्तव्यं, तच्च व्रीहीणामिति वाक्यभेदः स्यात्। अपि च प्रकृतौ चतुरहे, त्र्यहे, इति किमर्थमुच्चार्यते। अविवक्षितत्वादेतेषाम्। 'सुत्यामागच्छ' इति प्रयोगः कर्तव्यः। एवं स्थिते विकारेणाविकारेण वेत्यधिकरणमेव नोत्तिष्ठति।

तस्मादन्यथा वर्ण्यते। 'इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयात्' इतीतिशब्दोऽयं प्रकारवाची। अस्मिन्वाक्येऽस्य प्रकारवाचित्वं नोपपद्यते। प्रकारस्यासंभवात्। किं तर्हि। इयत्तावाची वाक्यशेषादवगम्यते। अहःशब्देन सामानाधिकरण्यादहर्गतेयत्ताऽवगम्यते। तच्चाहरागमनक्रियाविशेषणार्थमुच्चार्यते। सुत्याशब्दोऽप्यागच्छतिक्रियाविशेषणार्थमेव। इन्द्रस्य करिष्यमाणप्रयोजनत्वादागमनक्रिया तदर्था। 'इत्यहे' इति सामान्येन परिमाणवाची। न च सामान्येन व्यवहारः। तस्मादध्याहारं कृत्वा विशेषणीयः। अध्याहारे यः समवेतार्थः सोऽध्याह्रियते कालेयत्तां प्रकाशयितुम्। तस्माद्यत्र चतुर्ष्वहःसु सुत्या तत्र 'चतुरहे' इत्यध्याहारः। यत्र त्रिषु तत्र 'त्र्यहे' इति। तस्मादध्याहारविशिष्टमहर्गच्छतिक्रियां प्रति विशेषणभूतम्। तथा सुत्यापदमपि। अयं प्रकृतिवाक्यार्थो वृत्तः। यच्चै-

१ विवक्ष्यते—ग.। २ अविरोधात्—क. ख.। ३ एवं भाष्योक्तं व्याख्यानमनूद्याधुना दूषयति—एतदयुक्तमित्यादिना। ४ ईदृशेऽपीति—क्रियाकारकभावेन विशिष्टविधिसंभवविषयेऽपीत्यर्थः। ईदृशोऽपि—घ.। ५ इतिशब्द इति—इत्यहे, इत्यत्र य इतिशब्दः स इत्यर्थः। ६ प्रकारवाचीति—लोके, इति शेषः। ७ तदर्थेति—उपयोक्ष्यमाणेन्द्रसंस्कारार्थेत्यर्थः। ८ सुत्याहे—घ.। ९ स चाध्यारोपः सम—घ. मु। १० आपादयितुम्—च. ज.। ११ प्रकृतावर्थो वृत्तः—च. ज.। १२ यच्चेति—यदेव प्रकृतौ समवेतं, स्वार्थं च प्रकाश्यते तस्यैवोह इत्यर्थः।

चनं प्रदर्शनमात्रम्। मुख्यत्वात्। मुख्येन हि प्रदर्शनं भवति। यथा, इडान्ताऽऽतिथ्या संतिष्ठते, नानुयाजान् यजतीति ॥ २८ ॥

अविभागाच्च ॥ २९ ॥

अथ यदुक्तमावाहनवदिति। तत्र ब्रूमः। विभक्तः कालः कृष्णग्रीवयोः, सौम्येन व्यवायात्। तत्र गृह्यते विशेषः, पूर्वस्य कृष्णग्रीवस्यैतद्देवतावाहनं नोत्तरस्येति। अथेहाविभक्तकालाः सुत्याः, अव्यवेताः। केनचित्तासु न गृह्यते विशेषः। चतुरहग्रहणं चाविशेषकमित्युक्तम्। तस्मादविकारेण प्रयोगः ॥ २९ ॥

( वाजपेये प्राजापत्यपशुष्वङ्गादिश्रपणार्थं कुम्भ्यादीनां तन्त्रताधिकरणम् ॥ ८ ॥ )

[ ८ ] पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ॥ ३० ॥ सि०

वाजपेये प्राजापत्येषु पशुषु कुम्भ्याः शूलस्य वपाश्रपण्याश्च तन्त्रभावः स्यात्। विभुत्वात्। विभवत्येका कुम्भी सर्वपशूनामवदानानां श्रपणे, शूलं हृदयानां, वपाश्रपणी वपानाम्। तस्मात्तन्त्रं स्युः ॥३०॥

( विभिन्नदेवताकेष्वेकजातीयेषु च पशुषु कुम्भ्यादीनां तन्त्रताधिकरणम् ॥ ९ ॥ )

[ ९ ] भेदस्तु संदेहाद्देवतान्तरे स्यात् ॥ ३१ ॥ पू०

ऐकादशिनेषु तु भेदेन कुम्भ्यादीनि स्युः। संदेहात्। एकस्यां कुम्भ्यामुप्तानां संदेहः स्यात्। कस्य पशोः कान्यवदानानीति। एवं हृदयादीनां वपानां च ॥ ३१ ॥

अर्थाद्वा लिङ्गकर्म स्यात् ॥ ३२ ॥ सि०

अथवा न स्याद्भेदः। कुतः। सहप्रयोगात्। यत्तु संदेहादिति। अर्थाच्चिह्नं किंचित्करिष्यते, येन विशेषग्रहणं भविष्यति ॥ ३२ ॥

---

प्रकृतौ चोद्यते प्रधानं तस्योहो भवति। अहःसुत्याशब्दौ तु परार्थौ। तस्मादनेन प्रकारेणोहाभावो न वाक्यभेदभयेनेति ॥ २८ ॥ [ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

---

१ प्रदर्शनम् — क. ख.। २ 'अविभागाच्च' इति सूत्रस्याऽऽनन्दाश्रमीयजैमिनिन्यायमालादिबहुषु ग्रन्थेषु पूर्वसूत्रावयवत्वेनोल्लेखो दृश्यते। एवं क. संज्ञकेऽपि। परंतु ग. संज्ञकेऽस्य पृथक्पाठोपलम्भात्तत्रैव स्वारस्यमनुसंधाय पृथक्सूत्रत्वेनैव प्रकाशः कृतः। ३ कुम्भ्यां पशूनां--मु.।

अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्या-
प्रदानत्वात् ॥ ३३ ॥

कुम्भ्यास्तन्त्रभावो न घटते। अयाज्यत्वाद्वसानाम् । याज्यार्धर्चान्ते वसां जुहोतीति श्रुतं प्रकृतौ । तत्र स्वयाज्यार्धर्चान्ते वसा हुता । इहापि तथैव होतव्या । न च वसानां लिङ्गं कर्तुं शक्यम् ॥ ३३ ॥

अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्व-
स्याश्रुतिभूतत्वात् ॥ ३४ ॥

अपि वा तन्त्रं कुम्भी स्यात् । प्रतिपत्तित्वात् । शेषभूता वसाः । तासां प्रतिपत्तिरियम् । प्रतिपत्तिश्च द्रव्यं न प्रयोजयति । कुतः । तद्धारणार्थं पात्रम् । अत्यन्तसंसृष्टाश्च वसास्ताः स्वयाज्यार्धर्चान्त एव हुता भवन्ति । ननु परयाज्यार्धर्चान्तेऽपि प्रसज्यन्ते । अत्रोच्यते । स्वत्वस्याश्रुतिभूतत्वात् । नात्र श्रूयते स्वयाज्यार्धर्चान्ते होतव्या न परयाज्यार्धर्चान्त इति । तस्मात्परत्र होमो न दोषाय, नाभ्युदयाय । अतस्तन्त्रमेव कुम्भ्यपि स्यात् ॥ ३४ ॥

सकृदिति चेत् ॥ ३५ ॥

इति चेत्पश्यसि स्वत्वं न श्रुतमिति । तेन तर्हि सकृदेव होमः प्रथमे याज्यार्धर्चान्ते भवतु । एवं सकृत्त्वं चानुग्रहीष्यते, याज्यार्धर्चान्ते च हुतं भविष्यति । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ ३५ ॥

न कालभेदात् ॥ ३६ ॥

नैतदेवं प्रथमेऽर्धर्चान्त इति । किं तर्हि । प्रत्यर्धर्चान्ते होतव्याः । कुतः । कालभेदात् । भिन्ना[1] याज्यार्धर्चान्ताः । निमित्तसप्तमी चेयं, याज्यार्धर्चान्त इति । अधिकरणस्यासंभवात् । निमित्तावृत्तौ च नैमित्तिकावृत्तिः । यथा, भिन्ने जुहोतीति । तस्मात्सर्वयाज्यार्धर्चान्तेषु होमः ॥ ३६ ॥

---

३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

१ भिन्नानि याज्यार्धर्चान्तानि—ग. ।

( नानाजातीयेषु पशुषु पाकभेदात्कुम्भ्यादीनां भेदाधिकरणम् ॥ १० ॥ )

[१०] जात्यन्तरेषु भेदः स्यात्पक्तिवैषम्यात् ॥ ३७ ॥ सि०

ऐकादशिनेषु नानाजातीयेषु कुम्भ्यादीनां भेदः स्यात्। पक्तिवैषम्यात्। [१ पंक्तिभेदात्कुम्भीशूलवपाश्रपणीनां भेदः स्यात्। अस्ति सौत्रामणी। तत्राऽऽश्विनो धूम्रः, सारस्वतो मेषः। ऐन्द्र ऋषभ इत्येवंविधाः पशवः सन्ति। तेष्वपि तन्त्रभावः प्रभुत्वात्प्राप्तोऽपोद्यते। सौत्रामण्यामेवंजातीयेषु कुम्भ्यादीनां भेदः स्यात्। पक्तिवैषम्यात्।] विषमा हि पक्तिराजानामाविकानां च मांसानाम्। यावता कालेनाऽऽजानि पच्यन्ते तावताऽऽविकानि विलीयन्ते। तत्रावदानसंभेदो भवति। तस्मात्पात्रभेदः स्यात् ॥ ३७ ॥

वृद्धिदर्शनाच्च ॥ ३८ ॥

वृद्धिश्च सौत्रामण्यां शूलानां गोजाविषु दृश्यते, शूलैश्च मासरेण चावभृथमभ्यवयन्तीति। तस्मादपि भेदः ॥ ३८ ॥

( अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशं कपालभेदाधिकरणम् ॥ ११ ॥ )

[११] कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥३९॥पू०

अश्वप्रतिग्रहेष्ट्यां वारुणाश्चतुष्कपालाः पुरोडाशा अश्वसंख्याः श्रूयन्ते, यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेदिति। तत्र विचार्यते। किं दीर्घेषु कपालेषु सर्वेषां श्रपणं कर्तव्यम्, अथवा प्रतिपुरोडाशं कपालचतुष्कभेद इति। किं प्राप्तम्। कपालानि कुम्भीवत्। यथा प्राजापत्येषु कुम्भी तन्त्रम्, एवं तुल्यसंख्यानां पुरोडाशानां कपालानि तन्त्रमित्यर्थः। किं कारणम्। एवं सहत्वं चानुग्रहीष्यते। सर्वे चतुर्षु कपालेषु संस्कृता भविष्यन्ति ॥ ३९ ॥

प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥ सि०

प्रतिपुरोडाशं कपालचतुष्कभेदः। एवं यथाप्रकृति कृतं भवति। प्रकृतौ दर्शपूर्णमासयोः प्रतिपुरोडाशं कपालानि भिन्नानि, इहापि तद्वदेव भेत्तव्यानि चोदकानुग्रहाय। अपि च यदि कपालानि तन्त्रं भवे-

---

३७ ॥ ३८ ॥ ३९ ॥

---

१ ( ) एतच्चिह्नान्तर्गतः पाठः ख. ग. संज्ञकयोर्नोपलभ्यते। २ अजादिषु पशुषु—ग.।

युः, नैकोऽपि पुरोडाशश्चतुष्कपालेषु संस्कृतः स्यात् । सर्वे कपालावयवेषु पक्वा भवेयुः । तत्र कपालशब्दो बाध्येत । तस्माद्भेदः ॥ ४० ॥

## सर्वेषां चाभिप्रथनं स्यात् ॥ ४१ ॥

इदं च श्रूयते, यावत्कपालं पुरोडाशं प्रथयतीति । तच्चाशक्यं तन्त्रभावे संपादयितुम् । तस्मादपि भेदः ॥ ४१ ॥

( दर्शपूर्णमासयोरवघातमन्त्रस्य सकृदनुष्ठानाधिकरणम् ॥ १२ ॥ )

## [ १२ ] एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात् ॥४२॥ सि०

दर्शपूर्णमासयोः श्रूयते, व्रीहीनवहन्तीति । तत्र मन्त्रः, अवरक्षो दिवः सपत्नं वध्यासमिति । तस्मिन् विचार्यते । किं प्रतिप्रहारं मन्त्र उत सकृदेवाऽऽदाविति । किं प्राप्तम् । प्रतिप्रहारमिति । कुतः । प्रहारात्प्रहारः कर्मान्तरं, यतः पर्यवसानात् । कर्मभेदे च सति गृह्यते विशेषः । येन कर्मणा संनिपतितो मन्त्रस्तदर्थ इति । गृह्यमाणे च विशेषे भेदो दृष्टः । तस्मात्प्रतिप्रहारं मन्त्र इति ।

एवं प्राप्ते, उच्यते । एकस्मिन् द्रव्ये व्रीह्यादौ संस्काराणामवहन्त्यादीनां व्याख्यातमेककर्मत्वम्, आतण्डुलनिर्वृत्तेरेकमिदं कर्मेति, सर्वेषां त्वेककर्म्यादेतेषां च तद्गुणत्वादिति । ननु प्रतिप्रहारं कर्मभेद इत्युक्तम् । उच्यते । एकस्यैव कर्मणोऽयमभ्यासः, फलस्याभ्याससाध्यत्वात्सोमयाजिवत् । तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः । यत्र मन्त्रार्थस्य नानात्वं तत्रास्याऽऽवृत्तिर्भवति । यथाऽग्नौ लोकंपृणायाः । यत्र पुनरेक एव मन्त्रार्थस्तत्राऽऽवृत्तिरनर्थिका । इह चैको मन्त्रार्थः । कथं ज्ञायते । करणोऽयं मन्त्रः । करणश्च कर्तव्यस्य वस्तुनोऽभिसंधानार्थः समधिगतः । समस्ताश्चैते प्रहाराः

---

४० ॥ ४१ ॥

---

१ ' तस्मिन् मन्त्रार्थनानात्वात् ' इत्यादेः पृथक्सूत्रत्वेन न्यायमालादिपुस्तकेषूल्लेखो दृश्यते । परंतु, आदर्शपुस्तकेष्वेकसूत्रत्वेनैवोपलम्भात्तथैव प्रकाशितमिति ज्ञेयम् । २ व्याख्यातमिति—( अ० ५ पा० २ अ० ७ ) इत्यत्रेति शेषः ।

कर्तव्याः । समस्ता हि कार्यं साधयन्ति, न व्यस्ताः । उप्तानां व्रीहीणां तण्डुलविवेचनं यत्तच्चिकीर्षितं, तदभिसंधातव्यम् । तस्मात्सर्वप्रहाराणां क्रिया मन्त्रेणाभिसंहिता । तत्राऽऽवृत्तिरनर्थिका । तस्मान्मन्त्रस्य सकृत्प्रयोगः स्यात् ॥ ४२ ॥

( नानाबीजेष्ट्यवघातमन्त्रस्याऽऽवृत्त्यधिकरणम् ॥ १३ ॥ )

## [१३] द्रव्यान्तरे कृतार्थत्वात्तस्य पुनःप्रयोगान्मन्त्रस्य च तद्गुणत्वात्पुनःप्रयोगः स्यात्तदर्थेन विधानात् ॥ ४३ ॥ सि०

राजसूये नानाबीजेष्टिः, अग्नये गृहपतय आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुमित्येवमादि । तस्यामवहन्तिः समन्त्रकश्चोदकेन प्राप्यते । अत्रापि पूर्वेण न्यायेन सकृन्मन्त्रस्य प्रयोगः प्राप्तः । सर्वबीजानां वितुषीकरणं चिकीर्षितं, तदभिसंधीयत इति । तथा प्राप्ते, उच्यते । द्रव्यान्तरे—बीजान्तरे पुनःप्रयोगः स्यान्मन्त्रस्य । कुतः । कृतार्थत्वात् । पूर्वस्मिन् बीजे योऽवहन्तिः स कृतार्थः । संनिपत्योपकारी हि सः । स च येन बीजेन संनिपतितस्तदेव संस्करोति । तदेव चेत्संस्करोति, उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः । तस्य पुनःप्रयोगान्मन्त्रस्यापि पुनःप्रयोगः । तद्गुणत्वात् । तस्यावहन्तेः स मन्त्रो गुणः । तदर्थेन विधानात् । तस्याप्यसौ प्रतिकर्मावसायिना चोदकेन विहितः । तस्मात्प्रतिबीजं मन्त्रस्याऽऽवृत्तिः ॥ ४३ ॥

( निर्वापाद्यङ्गमन्त्राणामावृत्त्यधिकरणम् ॥ १४ ॥ )

## [१४] निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ ४४ ॥ पू०

दर्शपूर्णमासयोः, चतुरो मुष्टीन्निर्वपतीति । तस्य मन्त्रः, देवस्य त्वेति । तत्रैव च दर्भाणां लवनमन्त्रः, बर्हिर्देवसदनं दामीति । तथा

४२ ॥ ४१ ॥

१ आदिः—ग. । २ तद्गुणत्वात् । तस्यापि बीजान्तरे तस्य—ख. ।

स्तरणमन्त्रः, ऊर्णाम्रदसं त्वा स्तृणामीति । आज्यग्रहणमन्त्रः, धाम-नामासीति । तेषु संदेहः । किं मन्त्रस्य सकृत्प्रयोगः, अथवा प्रतिमुष्टि प्रतिदानं प्रतिधातु प्रतिग्रहणं चाऽऽवृत्तिरिति । किं प्राप्तम् । निर्वपण-लवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् । निर्वपणादिष्वेक-द्रव्यवत्स्यात्, सकृत्प्रयोग इत्यर्थः । कुतः । प्रयोजनैकत्वात् । तत्र तत्रैकं प्रयोजनम् । निर्वपणे तावद्धविष्याणामापनम् । लवने वेदिस्त-रणयोग्यस्य बर्हिष उपसादनं, स्तरणे वेद्याच्छादनम् । आज्यग्रहणे यागयोग्यस्याऽऽज्यस्योपादानम् । यावता प्रयोजनं तच्चिकीर्षितं, तदर्थो मन्त्र इत्युक्तम् ॥ ४४ ॥

द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ॥ ४५ ॥ सि०

द्रव्यान्तरवद्वा स्यात् । नैकद्रव्यवत् । भेदः स्यादित्यर्थः । कुतः । तत्संस्कारात् । ये व्रीहय एकेन मुष्टिना निरुप्तास्ते संस्कृताः । संनिप-त्योपकारित्वान्निर्वापस्य । द्वितीयो मुष्टिरप्यन्यान् व्रीहीन् संस्करोति । तत्र यदि मन्त्रो न प्रयुज्येत, मन्त्रकृतेन संस्कारेण तेषां वर्जनं स्यात् । एवं सर्वत्र । तस्मात्तत्र तत्र मन्त्रस्याऽऽवृत्तिः ॥ ४५ ॥

( वेदिप्रोक्षणाङ्गमन्त्रस्य सकृत्प्रयोगाधिकरणम् ॥ १९ ॥ )

[१५] वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनःप्रयोगात् ॥४६॥ पू०

वेदिप्रोक्षणं श्रूयते, त्रिः प्रोक्षतीति । तस्य मन्त्रः, वेदिरसि बर्हिषे त्वेति । तत्र चिन्त्यते । किं प्रत्यावृत्ति मन्त्रोऽथवा सकृदेवेति । किं प्राप्तम् । वेदिप्रोक्षणे मन्त्रस्याभ्यासः । कुतः । कर्मणः पुनःप्रयोगा-त् । यस्मिन् कर्मप्रयोग उक्तो मन्त्रस्तदर्थोऽसाविति गृह्यते विशेषः । तस्मादावृत्तिः ॥ ४६ ॥

एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४७ ॥ सि०

सकृदेव प्रयोगः । कुतः । द्रव्यैकत्वात् । एकं तद्वेदिद्रव्यं सकृदुक्तेन मन्त्रेण संस्कृतम् । तत्र भूयो मन्त्रकार्यं नास्ति । ननु कर्मद्वारेण मन्त्रो

४४ ॥ ४५ ॥ ४६ ॥

१ ' शुक्रं त्वा शुक्रायां धाम्ने धाम्ने ' इत्येवं खण्डदेवादिधृतो मन्त्रः ।

द्रव्यं संस्करोति । तच्च कर्म भिन्नम् । अत्रोच्यते । नैतद्भिन्नम् । आवृत्तिस्तस्य गुणः । क्रियाभ्यावृत्तौ हि कृत्वसुजर्थः प्रत्ययो न क्रियाभेदे । तन्मन्त्रवदावृत्तिमच्च कर्तव्यम् । सकृदुक्तेन मन्त्रेण मन्त्रवत्कृतम् । आवृत्तिसंपादनार्था पुनःक्रिया । तस्मात्सकृत्प्रयोगः ॥ ४७ ॥

( ज्योतिष्टोमे कण्डूयनाङ्गमन्त्रस्य सकृत्प्रयोगाधिकरणम् ॥ १६ ॥ )

[ १६ ] कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ४८ ॥ पू०

ज्योतिष्टोमे कण्डूयनार्थो मन्त्रः । कृषिषु स्याप्रकृष इति । यदाऽनेकस्मिन्नङ्गे युगपत्कण्डूरुत्पद्यते तदा चिन्ता । किं प्रत्यङ्गं मन्त्रावृत्तिः, अथवा सकृदेव प्रयोग इति । किं प्राप्तम् । प्रत्यङ्गं मन्त्र इति । कुतः । कर्मभेदात् । अङ्गेऽङ्गे कण्डूयनं कर्म भिन्नं, यतः पर्यवसानाद्गृह्यते विशेषः । तस्मादावृत्तिः ॥ ४८ ॥

अपि वा चोदनैककालमेककर्म्यं स्यात् ॥ ४९ ॥ सि०

अपि वा नैवं स्यात् । न ह्यत्र कण्डूयनं चोद्यते । अर्थात्क्रियते कण्डूपनयनार्थम् । किमतः । यदि चोद्यते । अदृष्टार्थं स्यात् । अप्राप्ते शास्त्रमर्थवदिति । प्रतिप्रयोगं चादृष्टभेदात्कर्मनानात्वं भवेत् । तथा गृह्येत विशेषः । अथ पुनरर्थगृहीते कण्डूयने यावतोत्पन्ना कण्डूरपनीयते तावच्चिकीर्षितम् । तत्र विशेषो न गृह्यते । ननु यस्याङ्गस्य निष्कर्षणं कृतं तत्संस्कृतम् । अङ्गान्तरे[1] पुनः कर्तव्यम् । उच्यते । नाङ्गनिष्कर्षणार्थोऽयं यत्नः । किं तर्हि । कण्डूपनयनार्थः । सा च कण्डूरात्मनो न शरीरस्य । तत्र न गृह्यते विशेषः । तस्मात्सकृदेव प्रयोगः ॥ ४९ ॥

( ज्योतिष्टोमे स्वप्नाद्यर्थमन्त्राणामनावृत्त्यधिकरणम् ॥ १७ ॥ )

[ १७ ] स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥ सि०

४७ ॥ ४८ ॥ ४९ ॥

१ अङ्गान्तरेषु—ग. ।

ज्योतिष्टोमे स्वप्नार्थो मन्त्रः, त्वमग्ने व्रतपा असीति । तत्रैव नदीतरणार्थः, देवीराप इति । तथाऽभिवृष्टस्य, उन्दतीरोजो धत्ते, इति । अमेध्यप्रतिमन्त्रणश्च, अबद्धं चक्षुरिति । स यदा पुनः प्रतिबुद्धः स्वपिति, अनेकस्रोतसं वा नदीं तरति, संतानेन वाऽभिवृष्यते, अनेकं वाऽमेध्यमेककालं पश्यति, तत्र चिन्ता किं, मन्त्रस्याऽऽवृत्तिः, अथवा सकृदेव प्रयोग इति । तत्र विशेषग्रहणादावृत्तौ प्राप्तायामुच्यते । स्वप्नादिषु चैवम् । यथा कण्डूयने सकृत्प्रयोग इत्यर्थः । कृत्स्नां रात्रिमसावुद्दिश्य स्वप्नमन्त्रं प्रयुङ्क्ते, नैकां निद्राम् । तथा सर्वस्रोतांसि तितीर्षुः, सर्वाभिवर्षाणि, सर्वामेध्यानि च । युगपत्सर्वेषामुपगमात्तत्र न गृह्यते विशेषः । तस्मादनावृत्तिर्मन्त्रस्य ॥ ५० ॥

( प्रयाणमन्त्रस्य सकृत्प्रयोगाधिकरणम् ॥ १८ ॥ )

## [१८] प्रयाणे त्वार्थनिर्वृत्तेः ॥५१॥ सि०

दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्रः । भद्रादभिश्रेयः प्रेहीति । तत्र विचार्यते । किं विश्रामे विश्रामे पुनः पुनः प्रतिष्ठमानो मन्त्रं प्रयुञ्जीत, उत सकृदेवाऽऽदाविति । विशेषग्रहणात्प्रतिप्रस्थानमिति प्राप्ते, उच्यते । प्रयाणे त्वार्थनिर्वृत्तेः । अर्थमसावुद्दिश्य प्रतिष्ठते । आर्थनिर्वृत्तेस्तस्य प्रस्थानाभिसंबन्धः । तस्मात्सकृदेव प्रयोक्तव्यः ॥ ५१ ॥

( ज्योतिष्टोमे उपरवमन्त्रस्य प्रत्युपरवखननमावृत्त्यधिकरणम् ॥ १९ ॥ )

## [१९] उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५२ ॥ पू०

ज्योतिष्टोमे, उपरवमन्त्रः, रक्षोहणो वलगहनो वैष्णवान् खनामीति । तत्र संदेहः । किं सर्वोपरवेषु सकृदेव मन्त्रः प्रयोक्तव्य उत प्रत्युपरवमिति । किं प्राप्तम् । उपरवमन्त्रस्तन्त्रं स्यात् । सकृदेव प्रयोक्तव्यः । कुतः । बहुवचनात् । बहुवचनान्तोऽयं, वैष्णवान् खनामीति । यदि प्रत्युपरवं प्रयुज्येत, एकस्मिन् बहुवचनान्ताभिधानं न साधयेत् । लोकवत् । यथा लोक एकस्मिन्नर्थे बहुवचनं न प्रयुज्यते । अपि च सकृदुक्त एव शक्नोति सर्वोपरवानभिधातुम् । शक्नोति चेदावृत्तिरनर्थिका । तस्मात्सकृदेव प्रयोक्तव्यः ॥ ५२ ॥

---

५० ॥ ५१ ॥ ५२ ॥

---

१ स्वपनार्थः—क. ख. । २ पुनः पुनः प्रतिबुध्य—ग. । ३ तत्र किं—क. ख. । ४ उपगमाद्य—ग. ।

न संनिपातित्वादसंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् ॥ ५३ ॥ सि०

नैव तन्त्रं स्यात् । कुतः । संनिपातित्वात् । संनिपाति खननकर्म, येनोपरवेण संनिपतितं तदर्थमेव विज्ञायते । मन्त्रोऽपि चायं संनिपाती । मन्त्रान्तेन कर्मादिसंनिपातात् । अतो यस्योपरवस्यायं मन्त्रः संनिपतितस्तस्यैव मन्त्रकारितः संस्कारो न सर्वेषाम् । अतो न सकृत्प्रयोक्तव्यः । असंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् । ये त्वसंनिपातिकर्मणां मन्त्राः, यथा सुब्रह्मण्याह्वाने, देवा ब्रह्माण इत्यौपवसथ्येऽहनि, तेषामेककालत्वादगृह्यमाणविशेषाणां सकृद्वचनं स्यात् । यत्तु न बहुवचनान्त एकस्याभिधायक इति । प्रातिपदिकार्थोऽभिहितः । विभक्त्यर्थश्च कर्मत्वम् । वचनार्थः केवलो नाभिहितः । स च नैवाभिधानमर्हति । अभिधायकस्य शब्दस्याभावात् । एकस्यैव वा पूजार्थे बहुवचनम् । तस्मादविरोधः ॥ ५३ ॥

( हविष्कृदाह्वानाध्रिगुप्रैषादीनामावृत्त्यधिकरणम् ॥ २० ॥ )

[२०] हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात्स्यात् ॥ ५४ ॥ सि०

इदं सूत्रं पूर्वसूत्रप्रत्युदाहरणार्थम् । कालैकत्वादिति किमर्थं, हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात्स्यादिति । अथवाऽधिकरणान्तरम् । ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः । तेषु हविष्कृदाह्वानम् । वाजपेये क्रतुपशवः प्राजापत्याश्च । तत्राध्रिगुप्रैषः । कृष्णग्रीवयोः पुरोनुवाक्या मनोतासूक्तं च । तेषु चिन्ता । किं तस्य तस्य सकृत्प्रयोगः, अथवाऽऽवृत्त्येति । सहत्वानुग्रहाय सकृदिति प्राप्ते, उच्यते । आवृत्तिः स्यादिति । कुतः । कालभेदात् । प्रातःसवने यद्धविष्कृदाह्वानमध्रिगुप्रैषश्च तस्य कालभेदाद्गृह्यते विशेषः । प्रातःसवनीयानां पुरोडाशानामयं हविष्कृत्क्रतुपशूनां चाध्रिगुरिति । तथा कृष्णग्रीवयोः सौम्येन व्यवायात्पूर्वस्य कृष्णग्रीवस्येयं पुरोनुवाक्या

१२ ॥

१ स्यादिति—ग । २ तु—ग. । ३ प्रत्यर्थे—ग. ।

मनोता चेति। सर्वत्र कालो भिद्यते। कालभेदाद्गृह्यते विशेषः। तस्मादावृत्तिः॥ ५४॥

अध्रिगोश्च विपर्यासात्॥ ५५॥

अध्रिगोश्चायमपरो विशेषः, विपर्यासः स्यात्। तन्त्रभावेऽध्रिगोर्ये पुरस्तात्पदार्थाः प्राजापत्यानां, यथा पश्वालम्भ आश्रुतप्रत्याश्रुते अजेदग्निरिति मन्त्रः। ते यदि तावत्प्रातःसवने क्रियन्ते पर्यग्निकरणान्तं काण्डं नोत्सृष्टं[1] भवति। अथ मा भूदेष दोष इति ब्रह्मसाम्नि क्रियन्ते, तथाऽपि विपर्यासः कृतो भवति। पुरस्तादध्रिगोः कर्तव्यानां परस्तात्करणेन। तस्मादप्यावृत्तिः॥ ५५॥

किंच—

करिष्यद्वचनात्[2]॥ ५६॥

या चेयमध्रिगोर्विभक्तिः, आरभध्वमुपनयतेति। सा प्राप्तकालं करिष्यमाणं ब्रूते। स यदि प्रातःसवन उच्यते, अप्राप्तकालत्वात्पदार्थस्यासमर्थः स्यात्। अथ प्रेषणार्थं[3], तथा[4] समर्थः स्यात्। प्रेषणं प्रवृत्त्यर्थम्। न च प्राजापत्येषु तत् प्रवृत्त्यर्थं युज्यते। बहूनां कर्मराशीनां व्यवायाभ्रष्टः प्रेषणप्रत्ययो भवति। तथाऽप्यसमर्थः। तस्मादध्रिगोरावृत्तिरिति सिद्धम्[5]॥ ५६॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्य एकादशाध्यायस्य चतुर्थः पादः॥

एकादशाध्यायः संपूर्णः॥

---

१४॥ १५॥ १६॥]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामेकादशाध्यायस्य चतुर्थः पादः॥

एकादशाध्यायः संपूर्णः॥

---

१ नोत्सृष्टमिति–पर्यग्निकरणान्ते प्राजापत्याः पशवः उत्सृष्टा न भवन्तीत्यर्थः। २ वचनाच्च–ग.। ३ प्रेषणार्था–मु.। ४ तथाऽपि प्रेषणं–क. ख.। ५ सिद्धान्तः–क. ख.।

## अथ द्वादशाध्यायस्य प्रथमः पादः ।

( पश्वर्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्याप्युपकारसिद्धेस्तदर्थं पृथगङ्गाननुष्ठानाधिकरणम् ॥ १ ॥ )

### [ १ ] तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥ पू०

एकादशेऽध्याये तन्त्रावापलक्षणं व्याख्यातम् । अधुना प्रसङ्गलक्षणं द्वादशे व्याख्यायते । प्रसङ्गशब्दार्थोऽन्यैरुक्तः, एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधाविति । अन्यत्र कृतस्यान्यत्रापि प्रसक्तिः प्रसङ्गः । यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम् । तदिह प्रसङ्ग एवाऽऽदौ विचिन्त्यते । अग्नीषोमीये पशौ पुरोडाशः, अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेदिति। किं तस्य पृथक्त्वेनाङ्गानि कर्तव्यानि, उत यानि पशौ कृतानि तस्याप्युपकुर्वन्तीति । ततः सूत्रेणैवोपक्रमः । तन्त्रिसमवाये चोदनातः समानानामेकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ।

तन्त्रं–साधारणो धर्मग्रामः । यथा दर्शपूर्णमासयोराज्यभागादिः पूर्वः, स्विष्टकृदादिरुत्तरः । स येषां प्रधानानां तानि तन्त्रीणि प्रधानानि । तेषां तु समवाये–एकदेशकालकर्तृत्वे चोदनातः, समानानाम्—एकवाक्यचोदितानाम्, एकतन्त्रत्वं भवति । यथा दर्शपूर्णमास-

---

'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति । अत्र संशयः । किं तस्य पृथगङ्गानि कर्तव्यानि, उत यानि पशोरङ्गानि तानि तस्याप्युपकुर्वन्ति प्रसङ्गेनेति । तत्र एतत्सिद्धचर्थं प्रसङ्गोऽस्ति नास्तीति विचार्यते । नास्ति प्रसङ्ग इति । कुतः । तन्त्रिसमवाये–प्रधानानां समवाये, चोदनातः समानानामेकतन्त्रत्वम्—यान्येकया चोदनया चोद्यन्ते तेषां समानतन्त्रत्वम् ।

---

१ भेदः स्यात्–मु. । २ कृतस्याप्यन्यत्राऽऽसक्तिः–ग. । ३ तत्र–क. ख. । ४ इतीति–इति पशावग्नीषोमीये श्रूयत इति शेषः । ५ तत्र–छ. ज. । ६ विचार्यत इति–परार्थमनुष्ठितस्य परोपकारकत्वं प्रसङ्गः । स एव तावत्संभवति नवेति चिन्त्यत इत्याशयः । ७ तत्र पूर्वपक्षमाह–नास्तीत्यादिना । ८ समानं तन्त्रं–घ. मु.

योः । यथा च चित्रायामिष्टौ । अतुल्येषु तु भेदः स्यात् । यानि तु चोदनातो न तुल्यानि, नानावाक्यैश्चोदितानि, तेषु तु भेदः स्यात्तन्त्रस्य । यथाऽत्रैव, अग्नीषोमीयं पशुमालभेत, अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपतीति । किं कारणम् । विधिप्रक्रमतादर्थ्यात् । विधिर्विधानं तदङ्गानां प्रयोगः । तस्य प्रक्रमः, तदर्थां प्रवृत्तिः । विधिप्रक्रमतादर्थ्यं विज्ञायते, अयं पश्वर्थो विधिप्रक्रमो न पुरोडाशार्थ इति । कथं पुनः पश्वर्थत्वं विधिप्रक्रमस्य । तादर्थ्यं श्रुतिकालनिर्देशात् । श्रुत्या तत्र कालो निर्दिश्यते । अग्नीषोमप्रणयनादनन्तरं पशोः कालः । तत्र हि तस्य चोदना । वपाप्रचारादूर्ध्वं पुरोडाशस्य कालः । पशोरवसरे यो विधिप्रक्रमः स केवलः पश्वर्थो विज्ञायते, पुरोडाशस्याप्राप्तत्वात् । अतस्तस्य पृथक् तन्त्रं कर्तव्यम् । लिङ्गं च पश्वर्थतां तन्त्रस्य दर्शयति । यदेकादश प्रयाजान् यजति पशुमेव तत्प्रयजति । यदेकादशानुयाजान् यजति पशुमेव तदनु-

---

यथा दर्शपूर्णमासयोः । यथा च चित्रायामिष्टौ । अतुल्येषु तु भेदः स्यात् । यानि पुनश्चोदनातो भिन्नानि तेषां भेद एव । यथा दर्शस्य पूर्णमासस्य । तस्माद्द्विप्रकारत्वात्कर्मणां तृतीयप्रकारो नास्ति । तदिह पशुपुरोडाशो दार्शपूर्णमासिकादग्नीषोमीयात्पुरोडाशाद्विध्यन्तं गृह्णाति । पशुरपि सांनाय्यात् । एतावानातिदेशस्य व्यापारः । यथाप्राप्ताङ्गयुक्तश्च प्रयोगः । तत्र तयोर्भिन्नप्रयोगविधिचोदितत्वाद्भेदेनैवाङ्गानि कर्तव्यानीति न प्रसङ्गेन पशुतन्त्रं पुरोडाशस्योपकर्तुमर्हतीति । लोके तु युक्तः प्रसङ्गः । प्रत्यक्षगम्यत्वात्[3] ।

अत्र परिचोद्यते । चित्रेष्टिरनुदाहरणम् । कथम् । 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इति, तदित्येकवचनान्तं सर्वनाम संसृष्टशब्देन संबध्यते, एकवचनान्तेनैव । यदि दध्यादिभिः संबध्येत बहुवचनान्तं स्यात् । वीप्सा वा तत्तदिति । न च वीप्सा श्रूयते । न च बहुवचनम् । तस्मात्संसृष्टशब्देन संबन्धः । संसृष्टस्य च प्रजापतिसंबन्धः । संसृष्टं चैकं वस्तु । तस्मादेक एव यागः । कुतस्तन्त्रम् ।

---

१ विधिप्रक्रमस्य—क । २ अग्नीषोमीयप्रण—क. ख मु. । ३ प्रत्यक्षगम्यत्वादिति—उपकारस्येति शेषः । तथा च लोके प्रत्यक्षगम्यत्वादुपकारस्य प्रसङ्गसंभवेऽपि प्रकृतेऽप्रत्यक्षत्वादुपकारस्य न प्रसङ्गः संभवतीति भावः ।

यजतीति । एवकारकरणादवधारणं विज्ञायते, पशुमेव न पुरोडाशमिति ॥ १ ॥

## गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

अपि च पशुकाः प्रयाजानुयाजा गुणतः कालतश्च विकृताः । एकादशसंख्याः पशावुभयेऽपि । पञ्चभिश्च प्रयाजैस्त्रिभिरनुयाजैः पुरोडाशस्य कार्यम् । तथा, पृषदाज्येनानुयाजाः पशोरिज्यन्ते । केवलेनाऽऽज्येन च पुरोडाशस्यार्थः । कालविकारोऽपि, आसन्ने हविषि पौरोडाशिकैः प्रयाजैर्भवितव्यम् । पाशुकास्तु निष्ठति पशौ वर्तन्ते, तिष्ठन्तं पशुं प्रयजन्तीति वचनात् । उभयेऽपि पुरोडाशस्य पृथक्त्वेनाक्रियमाणा न यथावत्संपादिता भवेयुः । तस्मादपि तन्त्रभेदः ॥ २ ॥

## तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ सि०

अथवा नैव भेदेन पुरोडाशस्य तन्त्रं कर्तव्यम् । किं तर्हि । मुख्यतन्त्रेण सिद्धिः स्यात् । पाशुकमेव तन्त्रं पुरोडाशस्योपकुर्यात् । किं कारणम् ।

---

तत्रोच्यते । दध्यादिभिः सर्वनाम संबध्यते । निर्दिष्टस्य हि प्रतिनिर्देशकं सर्वनाम । निर्दिष्टानि च दध्यादीनि प्रथमया विभक्त्या । अतस्तान्येव शब्दोपात्तानि मनसि विपरिवर्तमानानि सर्वनाम्ना प्रतिनिर्दिश्यन्ते । अथ यदुक्तं दध्यादिसंबन्धे बहुवचनं प्राप्नोति, वीप्सा वा ।

अत्रोच्यते । सर्वनामप्रातिपदिकस्य निर्दिष्टप्रतिनिर्देशकत्वशक्तिः । वचनस्य त्वेकार्थप्रतिपादकत्वम् । तस्मादनयोर्विरोधः । तत्र प्रथमोपनिपाताल्लिङ्गसंख्ययोश्च तदर्थत्वाद्यथाश्रुतं प्रातिपदिकं गृह्णीमः । उत्तरकालभावित्वाच्च लिङ्गसंख्ययोरविवक्षैव । योऽयं 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति । स एवात्रापि न्यायः । अथवा, एकदेवतत्वाल्लक्षणया लक्षितलक्षणया वोपपन्नमेकवचनं लिङ्गं च । सर्वत्रैव लक्षणया लिङ्गसंख्ये प्रवर्तेते । प्रातिपदिकं जातिं ब्रूते । लक्षणया तु द्रव्यम् ॥ १ ॥

इतश्च नास्ति प्रसङ्गः । यतः कालगुणविकृताः प्रयाजानुयाजाः पशौ । तेऽन्यस्य नोपकुर्वन्ति ॥ २ ॥

अस्ति प्रसङ्गः । तस्य विषयो निरूप्यते । अन्यस्य तन्त्रे प्रतते यदन्यस्तुल्यधर्मकमा-

---

१ उभयथा—ग. । २ प्रथमोपनिपातादिति—प्रातिपदिकस्येति शेषः । ३ ( अ० ९ पा० ३ अ० ५ सू० १५ ) ।

तन्त्रमध्ये विधानात् । पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः, अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपतीति । किमतः । तन्त्रार्थस्याविशिष्टत्वं भवतीति । तन्त्रस्यार्थस्तन्त्रार्थः । अङ्गकृत उपकारः । सोऽत्राविशिष्टः, पशोः पुरोडाशस्य च, संनिधानाविशेषात् । पशावपि क्रियमाणान्यङ्गानि पुरोडाशस्य संनिहितानि । संनिधानाच्च पशोरप्युपकुर्वन्ति । प्रदीपवत् । यथा प्रासादे कृतः प्रदीपः संनिधानाद्राजमार्गेऽप्युपकरोति ।

विषम उपन्यासः । स खलु प्रत्यक्षेण ज्ञायते । अयं पुनरप्रत्यक्षोऽङ्गोपकारः कथं शक्यो विज्ञातुमिति । अयमपि शास्त्रदृश्यः, शास्त्रप्रत्ययाद्गम्यते । शास्त्रं[1] चेदं दर्शपूर्णमासवत्कर्तव्यानीति । तद्वच्चेत्कृतानि किमिति नोपकरिष्यन्ति । दर्शपूर्णमासयोः स्वप्रधानैरेकदेशकालकर्तृकाणि क्रियमाणान्युपकृतवन्ति । इहापि तथाविधान्येव क्रियन्ते । तस्मादिहापि तद्वदेवोपकुर्वन्तीति विज्ञायते । आह । नेह तद्विधानि । दर्शपूर्णमासयोः स्वप्रधानान्युद्दिश्य कृतान्यङ्गानि । इहापि तद्वदेव कर्तव्यानि । न च पुरोडाशमुद्दिश्येह क्रियन्ते । किं तर्हि । पशुम् । तस्मात्पुरोडाशस्य न प्रकृतिवत्कृतानि भवन्तीति ।

---

पतति कर्म, तस्य[2] पूर्वकर्मणो येतिकर्तव्यता सा प्रसज्यते । यथा पशौ प्रतते पशुपुरोडाश आपतति । तस्य[3] पाशुकीतिकर्तव्यता प्रसज्यते । कथम् ।

तदुच्यते । भावयेत् । किं, पशूपकारम् । केन, पशुपुरोडाशयागेन । कथमित्यनेन यागगतो व्यापारः । स चोपमितलक्षितप्रापणेनाग्नीषोमीयस्य यो यागगतो व्यापारस्तं[4] साहश्येनाऽऽकाङ्क्षति । तत्र यदेतदग्नीषोमीययागगतव्यापारविशेषनियमनमष्टमलक्षणसिद्धं तदुत्पत्तिरिवोत्पत्तिः[6] । तस्य च व्यापारस्य यदितरेण संबन्धकरणं सा[7] प्राप्तिः । द्वावपि चेमौ चोदकव्यापारौ । तत उत्तरकालमुपसंग्रहः । उप—इति समीपे करणं, समिति साकल्येन ग्रहणम् । एष प्रयोगवचनस्य व्यापारः । स इह पाशुकेन प्रयोगवचनेन कृतत्वान्न भूयः पौरोडाशिकः समीपे करोति । तस्मात्पौरोडाशिकः प्रयोगवचनो लुप्यते । एष प्रसङ्गः ।

---

१ शास्त्रं चेह दर्श—क. । २ तस्येति—तन्त्रमध्यपातिन इत्यर्थः । ३ तत्र—छ. । ४ व्यापार इति—अभिलषित इति शेषः । ५ अग्नीषोमीयस्येति—पौर्णमासिकस्येत्यर्थः । ६ उत्पत्तिरिति प्रथमालोचितत्वादित्यभिप्रायः । ७ सा प्राप्तिरिति—विनियोग इत्यर्थः ।

उच्यते । प्रकृतौ न शब्द उद्देशः । नहि तत्र श्रूयते प्रधानान्युद्दिश्याङ्गानि कर्तव्यानीति । किं तर्हि । अर्थात्क्रियन्ते । तेषां तत्र चिकीर्षितत्वात् । न चार्थात्कृतं चोदकेन प्राप्यते । यत्कारणम् । विध्यन्तस्य तत्रापेक्षणात् । तेन यत्पठितं तत्प्राप्यते न पाठाद्बाह्यम् । तस्मात्त्वनुद्दिश्यापि क्रियमाणानि प्रकृतिवत्कृतानि भवन्ति । एवं सिद्धा प्रसङ्गादुपकारनिर्वृत्तिः । नन्वेवं सति तन्त्रलक्षणादविशिष्टमेव भवति । न खलु तत्राङ्गमेव साधारणम्, इह त्वङ्गकृत एवोपकारः । सोऽपि न साधारणः । अन्यकृतोऽन्यस्य भवति ॥ ३ ॥

## विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥

अथ यदुक्तं गुणकालविकाराच्च तन्त्रभेदः स्यादिति । तत्र ब्रूमः ।

---

कथमिदमवगम्यते, पाशुकः प्रयोगवचनः समीपे करोतीति । 'अग्नीषोमीयं पशुमालभेत' इत्यस्मादेवावगम्यते । कथम् । भावयेत् । किं, ज्योतिष्टोमोपकारम् । केन, पशुयागेन । कथमितीतिकर्तव्यता संबध्यते । तत्र यस्मिन्नेव क्षणे ज्योतिष्टोमोपकारो भवने कर्तृत्वं प्रतिपद्यते, तस्मिन्नेव करणेन भाव्यते । तस्मिन्नेव चेतिकर्तव्यता करणमनुगृह्णती भाव्यमानेन संबध्यते । तस्मात्त्रयाणामेतेषां तुल्यकालत्वं, भवन्तं ज्योतिष्टोमोपकारं यागेनेत्थं भावयेदिति । यदि च भूते भविष्यति वा भाव्ये करणेतिकर्तव्यते स्यातां, तयोस्तेन संबन्ध एव न स्यात् । तत्र यद्यप्युपकारस्य कालो नावधार्यते तथाऽपि संबन्धात्करणेतिकर्तव्यताकालेन परिच्छिद्यते । पशोश्च दीर्घकालत्वात्तन्मध्यपाती पुरोडाशः समीपे कृतानुपकारानपूर्वाणि च पाशुकेन प्रयोगवचनेनोपसंगृह्णाति, न तु स्वयं समीपे करोति । यानि च तेन समीपे न कृतानि तानि पृथगुपसंगृह्णाति । 'न चेदन्येन शिष्टाः' इत्यनेन न्यायेन येऽन्येन न विहितास्तान्विदधाति ॥ ३ ॥

अथ यदुक्तं द्रव्यसंख्याकालभेदान्न प्रसज्यत इति । तदुच्यते । सर्वः कथंभाव

---

१ शब्द उपदेशः—ग. । २ विध्यन्तस्तत्रापेक्ष्यते—क. । विध्यन्तः, तत्राक्षेपात्—ख. । ३ न खलु । तत्र—क. । ४ अङ्गकृत उपकारः—क. । ५ समीपे करोतीति—पुरोडाशस्यापि समीपे प्राकृतं प्रकारं करोतीति कथमवगम्यते । यतः पशुसमीपे हि स कृतः, न पशुपुरोडाशसमीपे, इति प्रश्नाभिप्रायः । ६ नावधार्यत इति—अदृष्टरूपत्वादुपकारस्येति शेषः । ७ संबन्धादिति—त्रयाणामेककालसंबन्धात्करणेतिकर्तव्यतयोर्यः कालः स उपकारस्यापीत्यवधार्यत इत्यर्थः । ८ (अ० १ पा० ४ अ० ६ सू० ९) ।

विकारेऽपि न भेदः स्यादर्थस्याविकृतत्वात् । अर्थः—अङ्गजनित उपकारः, स न विकृतः । यो दर्शपूर्णमासयोः स एव । कथं ज्ञायते । तदुच्यते । प्रयाजानुयाजास्तावदेते दार्शपौर्णमासिकाः । तत्र प्रयाजानुयाजशब्दो प्रज्ञातो । ते च चोदकेनेह प्राप्ताः संनिहिता विद्यन्ते । प्रकृतगामित्वं च शब्दस्य न्याय्यम् । न चैकः शब्दोऽनेकार्थो युक्तः । तस्माद्दार्शपौर्णमासिकास्ते । तदुपकारोऽप्येषां दार्शपौर्णमासिक एव । स हि तेषां प्रज्ञातः । यदि च प्राकृतादुपकारादुपकारान्तरं प्रकुर्युस्ततो प्राकृतकार्यत्वान्नैव चोदकेन प्राप्येरन् । अपूर्वा भवेयुः । यथा सत्रे गोग्गुलुकादिभिरभ्यञ्जनम् । अथासौ वाऽनेनैव प्रयाजा विधीयन्ते, अनेनैव तेषां विकार इति। तत्र द्विकरः शब्दः स्यात् । न च सकृदुच्चरितः शक्नोत्यर्थद्वयं विधातुम् । अपूर्वत्वे चैतेषां प्राकृता अपि चोदकेन प्राप्येरन् । तत्र वैश्वदेवे त्रिंशत्संपत्तिराहुतीनां न युज्यते, नव प्रयाजा नवानुयाजा द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये सवनघति वाजिनो यजत्याहुतीनां संपत्त्यै त्रिंशत्त्वायेति । तस्माद्गुणविकारेऽप्यविकृतः प्राकृतोऽङ्गोपकारः । तत्कृता एव पुरोडाशस्याप्युपकुर्वन्तीति न गुणकालविकारेऽपि तन्त्रभेदः । तदानीं तावुभौ प्रार्थ्येते पशुः पुरोडाशश्च । उभयोश्च प्रकृतिवत्क्रियन्तेऽङ्गानि । तस्मात्सकृत्कृतान्येवोभयोरुपकुर्वन्ति । विकार इदानीं किमर्थः । पश्वर्थः । पाशुकेषु हि प्रयाजानुयाजेषु श्रूयन्ते । न च पशोः पुरोडाशस्य च साधारणान्यङ्गानि । पाशुकान्येव संनिधानात्पुरोडाशस्याप्युपकुर्वन्तीत्युक्तम् ।

---

उपकारमाकाङ्क्षति । तमुपकारं चोदकः साहश्येनोत्पादयति प्रापयति च । उत्पादितं प्रापितं प्रयोगवचन उपसंगृह्णाति । ते च शास्त्राण्यन्तरेण न संभवन्तीति शास्त्राणामुत्पत्तिं प्राप्तिं च करोति । पूर्ववत्प्रयोगवचनोपसंग्रहः । तदिह पाशुकचोदकप्रयोगवचनौ सर्वं कुरुतः । पौरोडाशिकस्तु चोदक उत्पत्तिप्राप्ती करोत्येव ।

---

१ प्रकृति—ग. । २ विकार इति—एकादशत्वादिगुणरूपो विकारो विधीयत इत्यर्थः । ३ श्रूयन्ते, न तु पशोः पुरोडाशस्य च । न च साधारण—क. । ४ सन्तीति—घ. पु. । ५ शास्त्राणामिति—शास्त्रपदं पदार्थानामप्युपलक्षणं ज्ञेयं, पदार्थजन्यत्वादुपकाराणां पदार्थाभावे, उपकारासंभवादिति ।

अपि च पृषदाज्येनापीज्यमाना अनुयाजा आज्येनेष्टा भवन्ति । न हि पृषत्त्वमाज्यत्वं नाशयति । यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चिद्विरोधो भवति, सशर्करमपि तत्पय एवेति । तथा य एकादश प्रयाजान् यजति, असौ तदन्तर्गतान् प्राकृतान् पञ्च । येऽभ्यधिकाः षट् न तैरिज्यमानैः पञ्च प्राकृता नष्टा भवन्ति । एवं तिष्ठत्यपि पशौ क्रियमाणाः प्रयाजाः कृता एव पुरोडाशस्य भवन्ति । क्रमस्तेषां प्राकृतो हापितः । गुणमात्रं च क्रमः । न च गुणानुग्रहार्थं प्रधानस्याऽऽवृत्तिर्युक्ता । न च गुणवशवर्ति प्रधानम् । कामं क्रमविपर्यासनिमित्तं प्रायश्चित्तं भवेत्, नाऽऽवृत्तिः । प्रायश्चित्तं तर्हि कर्तव्यम् । क्रियते । अयाश्चाग्नेरिति सर्वप्रायश्चित्तं जुहोतीति । प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः । तस्मादविरोधः ॥ ४ ॥

## एकेषां चाशक्यत्वात् ॥ ५ ॥

एकेषां चार्थानामशक्या भेदेन क्रिया । यथा वेदेरग्न्युद्धरणस्य व्रतोपायनस्येति । वेदिः कृताऽनपवृक्ता तिष्ठति । सा न शक्या कर्तुम् । न ह्यर्थः कृतः सन् कर्तुं शक्यते । अथोच्यते । अन्यां करिष्यतीति । आहोपुरुषिकं स्यात् । तिर्यक् चासौ भवेत् । तत्र दिक्कृतं मुह्येत । विहारपृथक्त्वं चाश्रुतमापद्येत । तत्रैकदेशकालकर्तृकत्वमङ्गप्रधानानामिति स्थितो न्यायः प्रत्युद्ध्रियेत । एवमग्न्युद्धरणं तदाहवनीयनिर्वृत्त्यर्थम् । सकृ-

---

प्रयोगवचनस्तु पाशुकेनोपसंगृहीतत्वान्न पृथगुपसंगृह्णात्युपकारान् । न चेदुपसंगृह्णाति, ते पदार्था एव न सन्ति । नतरां पदार्थानां गुणाः । तस्मान्नास्ति वैगुण्यम् । न च संख्याभेदेन द्रव्यभेदेन वाऽपूर्वान्तरं भवति । किं तर्हि । प्राकृती संख्या प्राकृतं च द्रव्यमपनीयते । उपकारस्तु स एव । प्रयाजोपकाराश्चाऽऽदावुत्पद्यन्ते । ते चाऽऽफलनिष्पत्तेर्विद्यन्ते । विद्यन्ते चेददोष एव कालभेदः ॥ ४ ॥

---

१ पृषत्–क. । २ एकेषां वा–मु. । ३ एकेषां चाशक्या–ग. । ४ 'आहोपुरुषिकं स्यात्' इति सूत्रत्वेन काशीमुद्रितपुस्तके प्रकाशितमपि, तथाऽन्यत्र कुत्राप्यनुपलम्भादुपरितनभाष्यानुरोधेन सूत्रत्वाप्रतीतेश्च भाष्यग्रन्थत्वेनैव प्रकाशितमिति ज्ञेयम् । आहोपुरुषिकं–ग. । ५ दिक् संमुह्येत–ग. । ६ न सन्तीति—न कर्तव्या इत्यर्थः । ७ एवं कालाभावकृतवैगुण्यमपि परिहरति–प्रयाजेत्यादिना । ८ आदाविति—तिष्ठति पशावित्यर्थः । ९ अदोष एव ॥–घ. मु. ।

दुद्धरणेन च निर्वर्तितोऽसौ । न च निर्वर्तितः शक्यो निर्वर्तयितुम् । यथा कृतः कर्तुम् । अथोच्यते । अन्यं निर्वर्तयिष्यतीति । न तस्मिन्ननुपरते द्वितीयस्तत्राऽऽहवनीयोऽस्ति । यत्कारणम् । गार्हपत्याहवनीयावुभावेकस्थौ । आहवनीयेऽपयातिते परिशिष्टो गार्हपत्यो भवति । यथा सर्वसाधारणाद्ध्रौवादाज्यादुपांशुयाजार्थेऽपयातिते परिशिष्टमन्यदेवतार्थं भवति । विहारपृथक्त्वं च पूर्ववदापद्यते । तत्र पूर्वोक्ता एव दोषाः । तथा व्रतं यद्गृहीतं न तत्पुनरुत्सृष्टं शक्यते ग्रहीतुम् । अनुत्सृष्टं च तदाप्रधानापवर्गात् ॥ ५ ॥

एकाग्निवच्च दर्शनम् ॥ ६ ॥

एकाग्निं पशोः पुरोडाशस्य च दर्शयति, मध्येऽग्नेराज्याहुतीर्जुहोति पुरोडाशाहुतीः पश्वाहुतीश्चेति । नाग्न्युद्धरणस्य भेदः । तस्मात्पाशुकं तन्त्रं पुरोडाशे प्रसज्येत इति ॥ ६ ॥

( पशुपुरोडाशेऽन्यतोऽलब्धोपकाराणामाज्यभागादीनां कर्तव्यत्वाधिकरणम् ॥ २ ॥ )

[ २ ] जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥७॥ सि०

तस्मिन्नेव पशुपुरोडाशे चिन्ता । किमाज्यभागौ कर्तव्यावुत नेति । आह । तत एतत्परीक्ष्यम् । किं प्रसङ्गेन चोदको बाध्यते, उत प्रयोगवचन इति । यदि चोदको बाध्यते ततो न कर्तव्यौ । अथ प्रयोगवचनस्ततः कर्तव्याविति । किं पुनरत्र युक्तम् । चोदको बाध्यत

---

[ ९ ॥ १ ॥]

अस्यैव पशुपुरोडाशस्याऽऽज्यभागनिर्वापप्रोक्षणादि कर्तव्यं न वेति संशयः । अत इदमाह—किं प्रयोगवचनेन चोदको बाध्यते, उत प्रयोगवचनश्चोदके-

---

१ कर्तुं न ।— ग. । २ साधारणध्रौव—ग. मु. । ३ अन्यदेतदर्थे—ग. मु. । ४ प्रयुज्यते—ग. मु. । ५ परतन्त्रत्वापत्तेः—ग. मु. । ६ वार्तिकतन्त्ररत्नाद्यनुरोधेन प्रसङ्गेनेति स्थाने 'प्रयोगवचनेन' इति पाठ आवश्यक इति भाति । ७ प्रयोगवचनेनेति—नेयं कर्त्रर्थे तृतीया, किंतु, सहयोगे । तथा चायमर्थः । किं प्रयोगवचनसहित एव पशुपरोडाशयाग इति न स लुप्यते । अपि तु चोदक एव, किंवा चोदकसहित एव पुरोडाशयाग इति चोदको न लुप्यते, किंतु प्रयोगवचन इतीति ।

इति। किं कारणम्। आनुमानिकश्चोदकः। प्रत्यक्षः प्रयोगवचनः। प्रत्यक्षं चानुमानाद्बलीयः। दुर्बलस्य च बाधो न्याय्यो न च बलीयसः। एवं चेन्न कर्तव्यौ। चोदकेन हि तौ प्राप्येयाताम्। स चेह बाधितत्वान्नास्तीति।

एवं प्राप्ते, उच्यते। जैमिनेराचार्यस्य मतं कर्तव्यावाज्यभागाविति। कुतः। यतः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। यस्य स्वस्य[1] तन्त्रस्य कार्ये परतन्त्रमापद्यते तस्य प्रतिषेधः स्यात्। यथा पौरोडाशिकानां पाशुकम्। यस्य तु न किंचित्परकीयं कार्यमापद्यते तत्प्रतिषेधो न युक्तः। यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न वस्त्रालंकारः। न चेहाऽऽज्यभागयोः कार्ये[2] किंचित्पाशुकमङ्गमापद्यते। तस्य प्रतिषेधो न युक्तः। तस्मात्तयोरनिवृत्तिः। यत्तु प्रत्यक्षः प्रयोगवचन इति। नैवात्र प्रयोगवचनस्य प्रवृत्तिः। स ह्यङ्गानेति। चोदकबाधेऽकरणं, प्रयोगवचनबाधे करणम्। तत्राऽऽनुमानिकत्वाच्चोदको बाध्यते, न प्रयोगवचनः। तस्य प्रत्यक्षत्वादिति पूर्वः पक्षः।

सिद्धान्तस्तु—प्रयोगवचनस्यैकदेशो बाध्यते। कतरोऽसौ। उच्यते। उपशब्दः समीपवचनः, संशब्दः साकल्यवचनः, ग्रहशब्दो गृह्णातिवचनः[3]। एवं त्र्यंशः प्रयोगवचनः। तत्रायं ग्रहणात्मकस्वरूपः[4]। इतरे त्वस्य समीपकरणसाकल्ये विशेषणे। ताभ्यां[5] स विशिष्टः सर्वत्रोपलभ्यते[6]। विशेषणं चान्यथानुपपत्त्या गृह्यते। इतरथाऽहं[7] सामीप्यसाकल्यविशिष्टो न भवामीति सामीप्यं साकल्यं च करोति। इह च पाशुकेन प्रयोगवचनेन केषांचिदपूर्वाणां सामीप्यं कृतं येषां, तेषामन्यथानुपपत्तिः क्षीणा। येषामाज्यभागनिर्वापप्रोक्षणादीनां न कृतं सामीप्यं, तेषामन्यथानुपपत्त्या सामीप्यं करोत्येव। तस्मात्सामीप्यकरणैकदेशो बाध्यते तस्य प्रसङ्गेन।

अथ यदुक्तमानुमानिकत्वाच्चोदकबाध इति। तन्न। यदि चोदक उत्पत्तिप्राप्ती न

१ स्वतन्त्रस्य—क.। २ कार्ये हीयते। न च किंचित्पाशुकमङ्गमापद्यते। तस्मात्तयोरनुवृत्तिः। यत्तु—ग. मु.। ३ गृह्णातिवचन इति— अनुष्ठापनवचन इत्यर्थः। ४ ग्रहणात्मकस्वरूप इति—अंशत्रयमध्ये योऽनुष्ठापनाख्यग्रहणांशः स प्रयोगवचनस्य स्वरूपमिति भावः। ५ द्वाभ्यामयं विशिष्टः—घ.। ६ सर्वत्रोपलभ्यत इति—समीपस्थसकलाङ्गयुक्तप्रधानानुष्ठापको विशेषणविशेष्यभावेनांशत्रयात्मा प्रयोगवचन इत्यर्थः। ७ अन्यथानुपपत्तिस्वरूपमाह—इतरथेत्यादिना।

ऽभ्युपगृह्णीयात् । पाशुकैरेव चाङ्गैः पुरोडाशोऽङ्गवान् । प्रत्यक्षोऽपि सर्वं नाऽऽज्यभागौ गृह्णाति । प्रकरणसंनिहितमङ्गं प्रयोगवचनेन गृह्यते । न च पशावाज्यभागौ विद्येते । प्रतिषिद्धत्वात् । तौ न सौम्येऽध्वरे न पशाविति । अपि चोक्तमेतत्, प्रयोगवचन उत्पन्नानामङ्गानां ग्राहकः । चोदकस्तूत्पादको ग्राहकश्च । तस्मात्स बलवान् ॥ ७ ॥

( सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गाधिकरणम् ॥ २ ॥ )

## [ २ ] नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥ पू०

सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि महावेद्यां वर्तन्ते, तेषु चिन्ता । तेषां वेदिर्भेदेन कर्तव्योत नेति । किं प्राप्तम् । भेदेन कर्तव्या । किं कारणम् । चोदकं प्रापयति । एवं चोदकानुग्रहो भवति । ननु सौमिक्येव प्रसङ्गात्कार्यं साधयेत् । अत्रोच्यते । न साधयेत् । कस्मात् । नानार्थत्वात् । नानार्थे एते वेदी । दार्शपूर्णमासिकी हविषामासादनार्था । सौमिकी प्रचारार्था । तत्र प्रसङ्गो नोपपद्यते । यत्तन्त्रिणोऽङ्गमध्यपात्यङ्गेनैकार्थं तत्प्रसज्यते । यथा पाशुकाः प्रयाजाः पौरोडाशिकेषु । न त्विह तथा । तस्माद्वेदिः कर्तव्या ॥ ८ ॥

---

करोति कस्य सामीप्यकरणं कस्य वा साकल्येनोपसंग्रहः । तस्मात्प्रत्यक्षोऽपि प्रयोगवचनश्चोदकाद्दुर्बलः । उत्तरकालभावित्वात् । अपि च सति चोदके प्रसङ्गः । यदि चोदक आघारादीनि पत्नीसंयाजान्तानि पशुपुरोडाशस्य कल्पयति, तत उत्तरकालं प्रयोगवचनः समीपी करोति । तच्च समीपीकरणं पाशुकेन कृतमिति प्रसङ्गस्याऽऽत्मलाभः । यदि च तस्याङ्गानामुत्पत्तिप्राप्ती न स्तः, तथा सत्यनुत्पन्नानां प्रयोगवचनस्य समीपकरणे शक्तिरेव नास्ति । समीपकरणाभावादन्येन सामीप्यं कृतमिति नैवोपपद्येत, अनाकाङ्क्षितत्वादिति ॥ ७ ॥ [ ८ ॥

---

१ प्रत्यक्षो सर्व—ग. मु. । २ अपि च क्रमे तत्प्रयोगवचन उत्पन्नानामङ्गानां ग्राहकश्चुत्या चोदको ग्राहकश्च । – ग. मु. । ३ चिन्त्यते—ग. मु. । ४ दार्शपौर्ण–क. । ५ प्रधानार्था–ग. मु. । ६ अनाकाङ्क्षितत्वादिति—आकाङ्क्षितस्य हि समीपकरणस्यान्येन लाभे प्रसङ्गो भवति । न चानङ्गानां समीपकरणमाकाङ्क्षितं भवति । अतोऽवश्यं प्रयाजादिजन्योपकाराणां पुरोडाशाङ्गत्वसिद्धये चोदकोऽभ्युपगन्तव्यः । तथा चाऽऽकाङ्क्षितस्य समीपकरणस्य पाशुकप्रयोगवचनेनैव कृतत्वादिसर्वं सिध्यति प्रसङ्गस्याऽऽत्मलाभ इत्याशयः ।

अकर्म वा कृतदूषा स्यात् ॥ ९ ॥

न वा कर्तव्या दार्शिकी वेदिः । कुतः । कृतदूषा स्यात् । सा क्रियमाणा केवलं सौमिकया वेदेः कृताया दूषणं स्यात् । न किंचित्स्वार्थं साधयति । ननु हविषामासादनं तत्र करिष्यते । शक्यं तु तन्महावेद्यामपि कर्तुम् । नन्वन्यार्था सेत्युक्तम् । अन्यार्थाऽपि सती हविषामासादनेऽधिकरणी भवितुं प्रभवति । वेद्यां हविषामासादनं श्रुतम् । इयमपि च वेदिः । न तत्र तदर्थायामतदर्थायां वेत्येव विशेषः श्रूयते । तस्मान्न कर्तव्या दार्शिकी ॥ ९ ॥

( ज्योतिष्टोमे सवनीयपुरोडाशादिषु सौमिकपात्रैर्ग्रहचमसैर्दार्शिकपात्राणां जुह्वादीनां प्रसङ्गाभावाधिकरणम् ॥ ४ ॥ )

[ ४ ] पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥ पू०

सोम एव यानि दर्शपूर्णमासप्रकृतीनि ग्रहचमसे प्रयुक्ते वर्तन्ते, यथा सावनः पशुः, सावनाः पुरोडाशाः, सौम्यश्चरुरिति । तेषु विचार्यते । किं तेषां ग्रहैश्चमसैर्वा होमः कर्तव्यः, अथवा दार्शिकैः स्रुवादिभिः पात्रैरिति । तत्रोच्यते । पात्रेषु च प्रसङ्गः स्यात् । कुतः । होमार्थत्वात् । होमार्थानि तानि पात्राणि । स च होमो ग्रहचमसेनापि निर्वर्त्यते । सोमतन्त्रमध्यपतितानि कर्माणि । तेषु ग्रहैश्चमसैर्वा होमः कर्तव्यः ॥ १० ॥

न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥ सि०

न्याय्यानि वा दार्शपूर्णमासिकानि स्युः । तैर्होमः क्रियते । कुतः । प्रयुक्तत्वात् । प्रयुक्तानि तानि विद्यन्ते । यदगृहीत्वाऽऽज्यानि सोममासादयेयुरपघ्नन्ति यजमानम् । अथ यद्गृहीत्वाऽऽज्यान्यासादयन्ति न यजमानमपहन्तीति प्रथमं तावत्तेषां प्रयोगः । प्रोक्षणं संमार्जनं च । तत आज्यग्रहणम् । तान्येवाऽऽज्यप्रयुक्तानि विद्यन्ते । अप्रयुक्ते प्रसङ्गः स्यात् । यन्मध्यपातिनोऽङ्गं न प्रयुक्तं, तत्कार्ये तन्त्रिणोऽङ्गं प्रसज्यते । स्वस्याभावे हि परकीयमुपजीव्यते । असंनिहिते हि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति । संनिहिते तु स्वयानेनैव

९ ॥ १० ॥

१ तत्—ग. पु. । २ अधिकरणं—ग. पु. । ३ तदर्थायामित्येव विशेष.—क. । ४ कर्तव्या॥—ग. ।

हि याति। तत्र हि तस्य यादृशं स्वातन्त्र्येण[1] गमनसुखं न तादृशं परयाने। पुरोडाशानामपि दार्शिकैः पात्रैर्यादृशं साद्गुण्यं तादृशं ग्रहचमसैर्न। न तत्र प्राकृत्यो वृक्षजातयः प्रोक्षणादयश्च संस्कारा लभ्यन्ते। ग्रहचमसे तेषामभावः। येऽपि सौमिकास्तैः पुरोडाशानामसंबन्धः।

यदि पुनर्दार्शिकान्यप्रयुक्तानि भवेयुः, किं ग्रहचमसं प्रसज्येत। नेति ब्रूमः। दार्शिकान्येव प्रसज्येरन्। यत्र तन्त्रिणोऽङ्गं क्रियमाणमितरस्यापि कृतं भवति तत्र प्रसङ्गः, यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः। इह तु ग्रहचमसे प्रयुक्ते नेतराणि प्रयुक्तानि भवन्ति। न हि सोमे हूयमाने पुरोडाशा हुताः। तस्मान्नास्त्यत्र[2] प्रसङ्गः। किं तर्हीदमुच्यते, अप्रयुक्ते प्रसङ्गः स्यादिति। यदि प्रयोग एषां नोपपद्येत, प्रतिषिध्येत वा, ततः प्रसङ्गः स्यादित्यर्थः। अपि च न्याय्यानि दार्शपूर्णमासिकानि, न ग्रहचमसम्। किं तेषां न्याय्यत्वम्। दर्शपूर्णमासयोस्तानि शब्देनोक्तानि[3]। ततश्चोदकेन पुरोडाशेऽतिदिश्यन्त इत्यस्ति शब्दसंस्पर्शः। ग्रहचमसेन तु हविर्यज्ञे न कश्चिद्धोमः श्रुतः। अर्थात्क्रियेत। असति शब्दोक्तेऽर्थक्रिया भवति। दर्शयति चैतानि पात्राणि, युनज्मि ते पृथिवीं ज्योतिषा सहेति ध्रुवामभिमृशति। युनज्मि वायुमन्तरिक्षेण ते सहेत्युपभृतं, युनज्मि वाचं सह दिवा सूर्येणेति जुहूमिति। तस्मादेतैर्होमः कर्तव्यः॥ ११॥

(शामित्राग्नौ पशुपुरोडाशश्रपणानुष्ठानाधिकरणम्॥ ५॥)

## [५] शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात्॥ १२॥ सि०

पुरोडाश एव चिन्ता। किमेतस्य शामित्रेऽग्नौ श्रपणं कर्तव्यमुत शालामुखीय इति। तत्र स एव न्यायः। इतरस्य प्रयुक्तत्वादिति। गार्हपत्ये च हविषां श्रपणं श्रुतम्। स च प्रयुक्तो विद्यते, शालामुखीय एषोऽत ऊर्ध्वं गार्हपत्यो भवतीति। तस्मात्तत्र श्रपणं कर्तव्यम्॥ १२॥

११॥ १२॥

१ स्वतन्त्रेण—क.। २ तस्मादस्त्यत्र—ग. मु.। ३ शब्दोक्तानि—क.।

( कौण्डपायिनामयने प्राजहितेऽग्नौ मासाग्निहोत्रश्रपणानुष्ठानाधिकरणम् ॥ ६ ॥ )

[ ६ ] श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥ सि०

कौण्डपायिनामयनेऽग्निहोत्रे चिन्त्यते। किं तदीयस्य द्रव्यस्य शालामुखीये श्रपणमथवा प्राजहित इति। प्राजहित इति गार्हपत्यस्य पूर्वाचार्यसंज्ञा। अत्रापि स एव न्यायः। गार्हपत्ये श्रपणं श्रुतम्। स एव प्रयुक्तो विद्यते। अप्रयुक्ते च प्रसङ्गः स्यादिति। भूयांश्चात्र परिहारः। चोदकेन शालामुखीयः प्राप्यते। ज्योतिष्टोमे हि तस्य गार्हपत्यत्वं श्रुतम्। तच्च चोदकपरम्परया कौण्डपायिनामयनमागतम्। नामधेयेन तु प्राजहिते श्रपणं प्राप्यते। चोदकाच्च नामधेयशब्दो बलवत्तरः। तस्मात्तत्र श्रपणं कर्तव्यमिति ॥ १३ ॥

( ज्योतिष्टोमे हविर्धानशकटभिन्नशकटान्तरे पशुपुरोडाशादीनां हविर्निर्वापानुष्ठानाधिकरणम् ॥ ७ ॥ )

[ ७ ] हविर्धाने निर्वपणार्थं साधयेतां[1] प्रयुक्तत्वात् ॥ १४ ॥ पू०

कृते हविर्धाने यान्यौषधगुणकान्यैष्टिकानि[2] कर्माणि वर्तन्ते, यथा पशुपुरोडाशः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः। तेषु विचार्यते। किं तेषां निर्वापो हविर्धाने कर्तव्यः, अथवाऽनोन्तरमुपादेयमिति। किं प्राप्तम्। हविर्धाने निर्वपणार्थं साधयेताम्, एकं वा। कुतः। प्रयुक्तत्वात्। प्रयुक्तमस्ति। शक्नोति च तेषां निर्वापं साधयितुम्। अन्यस्योपादाने केवलमनर्थको व्यापार आपद्यते[3]। तस्मात्तयोरन्यतरेण निर्वापः कर्तव्यः ॥ १४ ॥

असिद्धिर्वाऽन्यदेशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १५ ॥ सि०

असिद्धिर्वा हविर्धानाभ्यां निर्वापस्य। न ताभ्यां साधयितव्यः[4]। कुतः। प्रधानवैगुण्यात्। निर्वापस्य देशः, अपरेण गार्हपत्यं प्रागीष-

१३ ॥ १४ ॥

१ साधयतां—मु.। २ यान्यौषध—ग, मु.। ३ आपद्येत—क.। ४ साधयितव्यम्—मु.।

मनोऽवस्थितं भवति । तस्य दक्षिणचक्रमारुह्यानेनसोऽधि निर्वपतीति । यदि हविर्धाने निर्वापः क्रियते तद्देशं तन्नीयेत । तथा प्रधानं सोमकर्म विगुणं भवेत् । हविर्धानयोर्मन्त्रवच्च नियमवच्च प्रवर्तनं स्थापनं कृतं तत्सर्वमनर्थकं स्यात् । अथ च पुनः क्रियेते, तथाऽप्यावृत्तिरश्रुताऽनुष्ठीयेत । अवैगुण्ये च प्रधानस्य प्रसङ्गो युक्तः । यत्कारणम् । प्रधानस्य यो धर्मस्तमितरे यथाश्रुतमुपजीवन्तीति । परवशत्वात् । यदि यथाश्रुतेनास्य कार्यं न सिध्यतीति ततः कामं कार्यलोपो भवेत्, स्वं वा साधनं प्रयुञ्जीत, न शक्नुयात्प्रधानकार्यं व्याहत्य स्वार्थं साधयितुम् ।

अथ कस्माद्धविर्धानदेशे निर्वापो न क्रियते । एवमपि तेषां कर्मणां वैगुण्यं भवेत् । अस्तु परतन्त्रोपजीवीन्येतानि यथावस्थितं परतन्त्रमुपजीवितुमर्हन्ति । यथा पाशुकान् प्रयाजानन्यकालानपि पशुपुरोडाश उपजीवति । उच्यते । युक्तं तत्र, कृतास्ते प्रयाजाः । न च कृतस्य क्रमानुग्रहार्थं पुनःक्रिया न्याय्या । अयं पुनः करिष्यमाणो निर्वापः शक्यते कर्तुम् । स यदि सगुणः शक्यते कर्तुं, तथा सगुणः कर्तव्यः । शक्यते चानोऽन्तरमुपादाय । तस्मान्न हविर्धानयोर्निर्वापः ॥१५॥

## अनसां च दर्शनात् ॥ १६ ॥

अनोबहुत्वं च दृश्यते । अनांसि प्रवर्तयन्तीति । तस्मादप्यनोऽन्तरमुपादेयमिति ॥ १६ ॥

( सौमिकेन दीक्षाकालीनजागरणेन प्रायणीयादिषु दार्शिकजागरणस्य प्रसङ्गाभावाधिकरणम् ॥ ८ ॥ )

## [ ८ ] तद्युक्तं च कालभेदात् ॥ १७ ॥ सि०

सोमे दीक्षाकाले रात्रिजागरणमाम्नातं, यां प्रथमां दीक्षितो रात्रिं जागर्ति तथा स्वप्नेन व्यावर्तत इति । दर्शपूर्णमासयोरप्यौपवसथ्येऽहन्येकेषामाम्नातम् । तत्प्रायणीयादिषु चोदकेन प्राप्यते । तेषां तन्त्रमध्य-

---

१५ ॥ १६ ॥

---

१ अनसोऽपाधि—ग. मु. । २ इतरे न यथा—ग. मु. । ३ उक्तं तत्र, प्राकृताः—ग. । ४ अहन्येवमाम्नातम्—मु. ।

पातर्दीक्षाकालेनैव जागरणेन प्रसङ्गात्कार्यसिद्धौ प्राप्तायामिदमुच्यते । तद्युक्तं च दीक्षायुक्तं च जागरणं, नेतरेषु प्रसज्येत । कुतः । कालभेदात् । यदि तावद्यज्ञाङ्गानां रक्षणायाप्रमादार्थं, ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्तीति तद्रक्षणार्थं प्रायणीयादिषूपवसथकाले भेदेन कर्तव्यम् । अथाप्यदृष्टार्थम् । तथाऽप्यौपवसथी रात्रिस्तस्य निमित्तम् । निमित्तप्राप्तौ नैमित्तिकं कर्तव्यम् । तस्माद्भेदेन कर्तव्यम् ॥१७॥

( वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा पृथक्मन्त्रोच्चारणाधिकरणम् ॥ ९ ॥ )

## [ ९ ] मन्त्राश्च संनिपातित्वात् ॥ १८ ॥

वरुणप्रघासेषु विहारपृथक्त्वे सति ये मन्त्राः संनिपातिनः, यथाऽऽज्यग्रहणे प्रोक्षणेऽभिमर्शने, तेषां किं तन्त्रेण प्रयोगः, अथवा भेदेनेति । तन्त्रावापचिन्तेयं, न प्रसङ्गचिन्ता । तत्र प्रयोगवचनानुग्रहाय तन्त्रभावे प्राप्ते, उच्यते । मन्त्राश्चाऽऽज्यग्रहणादयो भेदेन कर्तव्याः । कुतः । संनिपातित्वात् । संनिपत्योपकारिण एते मन्त्रा उपस्थितं कर्माभिदधति । पृथक्कर्मण्यध्वर्युप्रतिप्रस्थातारावुपतिष्ठेते । तस्मात्पृथक् प्रयोक्तव्याः । अपि च करणानां मन्त्रान्तेन कर्मादिसंपातं वक्ष्यति, मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात्सर्वस्य वचनार्थत्वादिति । तथा सति येन कर्मणा संनिपतितो मन्त्रस्तदर्थोऽसाविति गृह्यते विशेषः । तस्मादप्यावृत्तिः ॥ १८ ॥

( सोमे दीक्षणीयादिषु दार्शिकाग्निसमिन्धनाभावाधिकरणम् ॥१०॥ )

## [ १० ] धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥ सि०

सोमे दीक्षणीयादिष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं किं कर्तव्यमुत नेति । कर्तव्यम् । एवं चोदकोऽनुगृहीतो भविष्यति । एवं प्राप्ते, उच्यते । न कर्तव्यम् । कुतः । धारणार्थत्वात् । विहृतस्याग्नेर्धारणार्थं तत् । सोमार्थेन च विहृतस्यैव तत्कृतम् । तेन धृतोऽग्निः । न च

१७ ॥ १८ ॥

१ कर्माणि—ग. मु. । २ कारणानां मन्त्राः । तेन कर्मादि–ग. मु. । ३ ( अ० १२ पा० ३ अ० १० सू० २५) । ४ विधृतस्य—ग. मु. ।

धृतस्य धारणकार्यमस्ति । नन्वमन्त्रकं तत् । सत्यम॑मन्त्रकम् । अपि तु तत्कृतम् । न च कृतस्य मन्त्रार्थं पुनरावृत्तिरस्ति । तस्मान्न कर्तव्यम् ॥ १९ ॥

( सोमे प्रायणीयादिषु दार्शिकव्रतानुष्ठानाधिकरणम् ॥ ११ ॥ )

[ ११ ] तथा व्रतमुपेतत्वात् ॥ २० ॥ सि०

तत्रैव दार्शपौर्णमासिकं व्रतं चोदकप्राप्तं तथैव न क्रियते, यथाऽन्यन्वाधानम् । उपेतत्वात् । न ह्युपेतमनपवृक्तं सच्छक्यमुपेतुम् । अप्राप्तस्य हि प्रापणमुपगमनम् । तत्प्राप्तस्य न शक्यम् ॥ २० ॥

विप्रतिषेधाच्च ॥ २१ ॥

अग्ने व्रतपते व्रतं चरिष्यामीति चरतो वचनं विप्रतिषिद्धं, वर्तमानस्य भविष्यद्वचः ॥ २१ ॥

सत्यवदिति चेत् ॥ २२ ॥

अथ सत्यवत्कस्मान्न भवति । यथा सत्यवचनं व्रतं पुरुषधर्मत्वादनुवर्तमानमपि दर्शपूर्णमासयोः पुनरुपेयत इति । स्थितायां प्रतिज्ञायां सूत्रेण चोदयति ॥ २२ ॥

न संयोगपृथक्त्वात् ॥ २३ ॥

नैतत्तेन तुल्यम् । संयोगपृथक्त्वात् । तत्र पुरुषसंयोगः कर्मसंयोगश्च । पुरुषार्थमुपेतं कर्मार्थं पुनरुपेयते । नन्विहापि संयोगपृथक्त्वात्सोमार्थमुपेतमैष्टिकार्थं पुनरुपेयत इति । नेह पुनरुपगमनेनार्थः । यत्सोमार्थं तदेवेतरत्र प्रसङ्गात्कार्यं साधयति । नन्विहापि तद्वदेव साधयिष्यति । साधयेत् , यदि कर्मार्थता तस्य ज्ञाता चेत् । सा त्विहैव ज्ञाप्यते । ऐष्टिकानां तु प्रकृतौ ज्ञाता । तस्मात्सत्यवदित्यदृष्टान्तः । कर्मार्थत्वज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयेऽध्याये व्याख्यातः ॥ २३ ॥

( सोमाङ्गेष्टिपश्वादिषु दार्शिकान्यन्वाधानप्रसङ्गस्याऽऽक्षेपसमाधानाधिकरणम् ॥ १२ ॥ )

[ १२ ] प्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २४ ॥ सि०

---

१९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ ]

---

१ सत्यममन्त्रकमपि तु—क. ग. मु. । २ वचनं—क. । ३ पृथक्त्वं—क. । ४ तस्याज्ञाता—ग. मु. । ५ तस्मात्सत्यदृष्टान्तः किमर्थम् । ज्ञानस्य—ग. ।

पूर्वोक्तमग्न्यन्वाधानं सौमिकं प्रसङ्गादैष्टिकेषु कार्यं साधयतीत्युक्तम्। तदिदानीमाक्षिप्यते। धारणार्थत्वात्तस्य प्रसङ्ग उक्तः। न च तत्केवलं धारणार्थम्। किं तर्हि। धारणार्थं च, देवतापरिग्रहार्थं च। एवं हि दर्शपूर्णमासयोः श्रूयते, ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाति, देवता एव तत्पूर्वेद्युर्गृहीताः श्वोभूते यजत इति। तत्र यद्यपि धारणार्थं सौमिकेन प्रसङ्गात्सिध्यति। देवतापरिग्रहार्थं तद्दार्शपौर्णमासिकमैष्टिकेषु कर्मसु कर्तव्यम्। आह। नैतद्युक्तम्। देवतापरिग्रहार्थमपि प्रसङ्गादेव सिध्यति। कुतः। इष्टेस्तदर्थत्वात्। सोमेऽपि दीक्षणीयेष्टिर्देवतापरिग्रहार्था श्रूयते, आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः। अग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता यज्ञं च तदुभयतः परिगृह्य दीक्षत इति। सैव देवतापरिग्रहणार्था प्रसङ्गादैष्टिकानां कार्यं साधयिष्यतीति ॥ २४ ॥

---

न देवतापरिग्रहार्थमग्न्यन्वाधानं वस्तुतोऽवगम्यते। नापि शब्दतः। वस्तुतस्तावत्प्रत्यक्षेणाग्निधारणार्थमवगम्यते। 'ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति। देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते' इत्ययं शब्दो देवतापरिग्रहार्थत्वमवबोधयेत्। न चेदृशेन शब्देन देवतापरिग्रहार्थत्वं प्रतिपादयितुं शक्यते। अर्थवादत्वादस्य वाक्यस्य अन्वाधानमेवानेन स्तूयते। एवं चादृष्टकल्पना न भविष्यति। मन्त्रोऽपि स्वसामर्थ्येनाग्निमभिदधाति, नान्यत्किंचित्।

यदप्युक्तं दीक्षणीयया देवतापरिग्रहः कृत इति। एतदप्ययुक्तम्। कथम्। दीक्षिष्यमाण इति शानचा कर्ताऽभिधीयते। लृटा भविष्यत्कालः। दीक्षाशब्देन मुण्डनवपनादिसंस्कारो लक्ष्यते। तेन तद्विषयः संकल्पः। तस्मादीदृशस्य संस्कारो विधीयत आग्नावैष्णवः श्रुत्या। असौ दीक्षां संपादयितुम्। तस्य विधीयमानस्य 'सर्वा एता देवताः परिगृह्णाति' इत्यर्थवादोऽयमाग्नावैष्णवस्य स्तुत्यर्थः। न चेदृशेन देवतापरिग्रहः शक्यो विधातुम्। देवतापरिग्रहार्थतायां च सत्यां पुरुषसंस्कारिका देवतापरिग्रहार्थेति वाक्यभेदः स्यात्। द्विरदृष्टकल्पना च ॥ २४ ॥

---

१ प्रसङ्गादेतत्सि—ग. मु.। २ कपालं पुरोडाशं—ग. मु.। ३ अन्वाधानस्य देवतापरिग्रहार्थत्वमभ्युपेत्यापि दीक्षणीयया प्रसङ्गः साधितः। वस्तुतोऽन्वाधानस्य देवतापरिग्रहार्थत्वे न किंचित्प्रमाणमिति परमार्थमाह—न देवतेत्यादिना। ४ ग्रहण—घ. मु.। ५ ईदृशस्येति—भविष्यद्दीक्षाकर्तृपुरुषस्येत्यर्थः।

## शेषवदिति चेत् ॥ २५ ॥

उच्यते, न सिध्यति । दीक्षणीया प्रधानार्था । सा प्रधानदेवतापरिग्रहणे वर्तते । शेषास्तु—अङ्गाङ्गानां देवताः, अपरिगृहीताः । तत्परिग्रहार्थं दार्शपौर्णमासिकमैष्टिकेषु कर्तव्यम् ॥ २५ ॥

## न वैश्वदेवो हि ॥ २६ ॥

न कर्तव्यम् । दीक्षणीययैव[1] प्रसङ्गाद्देवतापरिग्रहार्थः सेत्स्यति । ननु प्रधानदेवतापरिग्रहार्था[2] दीक्षणीयेत्युक्तम् । प्रधानदेतार्था सत्यङ्गदेवतां गृह्णाति । कथम् । वैश्वदेवो हि । अस्ति सोमे वैश्वदेवो ग्रहयजिः[3] । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये चाङ्गदेवता अपि । तस्मात्ताः परिगृहीताः । अनेन तत्परिग्रहार्थेनैष्टिकेनाग्न्यन्वाधानेन[4] नार्थः ॥ २६ ॥

## स्याद्वा व्यपदेशात् ॥ २७ ॥

स्याद्वाऽर्थ ऐष्टिकेनाग्न्यन्वाधानेन । नाङ्गदेवतापरिग्रहणम् । ननु विश्वेदेवा इज्यन्त इति परिगृहीताः । न तत्र सर्वा देवता इज्यन्ते । किं तर्हि । विशेषदेवतागणः[5] । यथा, साध्या वसवो रुद्रा इति । कथं ज्ञायते । व्यपदेशात् । व्यपदेशो भवति । अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैरिति[6] वस्वादिभ्योऽर्थान्तरभूतान् विश्वान् देवान् दर्शयति । यदि च सर्वे देवा उच्येरन् विश्वं[7]देवशब्देन तेभ्योऽर्थान्तरभूता न स्युः । तस्माद्विश्वदेवशब्दो गणवचन एव । एवं चेदपरिगृहीता अङ्गदेवताः । तदर्थमैष्टिकमग्न्यन्वाधानं कर्तव्यम् । ॥ २७ ॥

## न गुणार्थत्वात् ॥ २८ ॥

नैतदेवम् । कस्मात् । गुणार्थत्वात् । नानेन व्यपदेशेन गणो विश्वेदेवः शक्यः कल्पयितुम् । गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रशंसार्थः । अग्न्यादयो वस्वादिभिः केवलैः समेताः । बृहस्पतिस्तु सर्वैर्देवैः, तैश्चान्यैश्चेति । यथा सेनापतिर्भृत्यबलेन सहागतः समाहर्ता निजेन बलेन ।

---

[ २९ ॥ २१ ॥ २७ ॥

---

१ दीक्षणीयैव—मु. । २ परिग्रहार्था—मु. । ३ ग्रहयज्ञः—मु. । ४ अग्न्यन्वाधानार्थेन—क. ग. मु. । ५ विशेषादेवतागणः—क. । ६ विश्वेदेवैः—मु. । ७ विश्वेदेव—ग. मु. ।

राजा तु सर्वैर्बलैस्तैश्चान्यैश्चेति । अपि च वैश्वदेवो गणः कल्प्यः । सर्वे तु देवाः शब्दादेवावगम्यन्ते । तथा च दीक्षणीययाऽङ्गदेवतापरिग्रहोऽपि प्रसङ्गात्सिध्यतीति न कर्तव्यं दार्शपौर्णमासिकमैष्टिकेष्वग्न्यन्वाधानम् ॥ २८ ॥

( सोमाङ्गेष्टिपश्वादिषु पत्नीसंनहनाननुष्ठानाधिकरणम् ॥ १३ ॥ )

## [ १३ ] संनहनं च वृत्तत्वात् ॥ २९ ॥ सि०

पत्न्याः संनहनं च दर्शपूर्णमासयोः समाम्नातम् । योक्त्रेण पत्नीं संनह्यतीति । तत्सोमाङ्गभूतेष्वैष्टिकेषु कर्मसु चोदकेन प्राप्तमपि न कर्तव्यम् । कुतः । वृत्तत्वात् । दीक्षाकाले सोमार्थे पत्न्याः संनहनं वृत्तं, योक्त्रेण पत्नीं संनह्यति, मेखलया दीक्षितं, मिथुनत्वायेति यदाम्नातम् । संनहनं च वाससो धारणार्थं सर्वार्थम् । सौमिकेनैवाऽऽकर्मापवर्गात्प्रसङ्गेन सिध्यतीति ॥ २९ ॥

( सोमाङ्गप्रायणीयादिषु सौमिकेन पयोव्रतेनाऽऽतिदेशिकस्याऽऽरण्याशनस्य प्रसङ्गाधिकरणम् ॥ १४ ॥ )

## [ १४ ] अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥ ३० ॥ सि०

दर्शपूर्णमासयोरारण्यभोजनमाम्नातम् । यदारण्यानश्नाति तेनाऽऽरण्यानथो इन्द्रियं वाऽऽरण्यम्, इन्द्रियमेवाऽऽत्मं धत्त इति । तत्प्रायणीयादिषु चोदकेन प्राप्यते । प्राप्तमपि सन्न कर्तव्यम् । किं कारणम् । अन्यविधानात् । यद्दर्शपूर्णमासयोरारण्यभोजनं तद्वृत्त्यर्थम् । सोमेऽप्येतदाम्नातं, पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्याऽऽमिक्षा वैश्यस्येति । तदपि दृष्टकार्यत्वाद्वृत्त्यर्थमेव । तयोः सौमिकं प्रत्यक्षं, श्रुतत्वात्प्राधान्याच्चावश्यं कार्यम् । तेनैव च वृत्तौ प्रसङ्गात्सिद्धायामितरन्निवर्तते ॥ ३० ॥

( सोमाङ्गेष्टिपश्वादिषु शेषभक्षानुष्ठानाधिकरणम् ॥ १५ ॥ )

## [ १५ ] शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ ३१ ॥ सि०

---

२८ ॥ २९ ॥ ३० ॥

---

१ यत्तु—क. । २ तेन वृत्तौ—ग. मु. ।

दर्शपूर्णमासयोः शेषभक्ष ऐडादिः, सोमे चैष्टिकेषु कर्मसु चोदकप्राप्तः। सोऽपि सौमिकेन व्रतेनाऽऽरण्यवान्निवर्तेत इति चेत्। न। कस्मात्। न स वृत्त्यर्थः। न ह्यलं वृत्तये। संस्कारार्थोऽसौ, उपयुक्तशेषत्वाद्भक्षाणां, द्वितीयानिर्देशाच्च, यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीति। तस्मात्कर्तव्यम् ॥ ३१ ॥

( सोमाङ्गदीक्षणीयादिष्वन्वाहार्यदक्षिणाया अननुष्ठानाधिकरणम् ॥ १६ ॥ )

[ १६ ] भृतत्वाच्च परिक्रयः ॥ ३२ ॥ सि०

दर्शपूर्णमासयोः परिक्रयोऽन्वाहार्य आम्नातः, इह चोदकेन प्राप्तः सन्न कर्तव्यः। कुतः। भृतत्वात्। भृतास्त ऋत्विजः सोमार्थेन परिक्रयेण, तस्य द्वादशशतं दक्षिणेति। एकदेशकालकर्तृत्वं चाङ्गप्रधानानाम्। तस्मात्तैरेवाङ्गानि कर्तव्यानि। अतो न पृथगङ्गानां परिक्रयः। तस्मादन्वाहार्यो निवर्तते ॥ ३२ ॥

( सौमिकदक्षिणया शेषभक्षाणां प्रसङ्गाभावाधिकरणम् ॥ १७ ॥ )

[ १७ ] शेषभक्षास्तथेति चेत् ॥ ३३ ॥ पू०

अथ शेषभक्षा अपि तथा निवर्तेरन्, यथा, अन्वाहार्य इति चेत्। परिक्रयार्थाशङ्कयोच्यते ॥ ३३ ॥

न कर्मसंयोगात् ॥ ३४ ॥ सि०

नैते निवर्तेरन्। न ह्येते परिक्रयार्थाः। अन्वाहार्येण कर्मार्थमानतानां निर्वृत्ते भूयिष्ठे कर्मण्येते विधीयन्ते। न चालमानमनाय। तस्मान्नैते परिक्रयार्थाः, किंतु संस्कारार्थाः। अतस्तदर्थं कर्तव्याः ॥ ३४ ॥

( सोमाङ्गेष्टिपश्वादिषु दार्शिकहोतृवरणानुष्ठानाधिकरणम् ॥ १८ ॥ )

[ १८ ] प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३५ ॥ सि०

दर्शपूर्णमासयोर्होतुर्वरणमाम्नातम्। अग्निर्देवो दैव्यो होता देवान् यक्षदिति। तच्चोदकेनैष्टिकेषु कर्मसु सोमाङ्गभूतेषु प्राप्यते। अस्ति तु सोमेऽपि होतुर्वरणम्, अग्निर्होता स मे होता होतस्त्वं मे होताऽसीति

३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

१ भक्षणामिति—ग.। २ चोद्यते—ग. मु.।

होतारं वृणीत इति । तत्र विचार्यते । किमैष्टिकेषु कर्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्तव्यमुत नेति । किं प्राप्तम् । कर्तव्यमिति । कस्मात् । वरणं तावदानत्यर्थम् । सौमिकेन च वरणेनाऽऽनतो होता । साङ्गस्य सोमस्य करणेन चाऽऽनतस्याऽऽनमनकार्यमस्ति । तस्मान्न कर्तव्यम् । एवं प्राप्ते, ब्रूमः । प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत । नैतदस्ति, सौमिकं वरणं प्रसङ्गाद्दार्शपौर्णमासिकस्य कार्यं साधयिष्यतीति । प्रवृत्ते वरणात्प्रवृत्ते कर्मणि दार्शपौर्णमासिकं वरणं क्रियते । अतस्तन्नाऽऽनत्यर्थम् । किं तर्हि । कर्ममात्रम् । न चेत्क्रियेत तेन गुणवैगुण्यं स्यात् । तस्मात्प्रतिकर्म भेदेन कर्तव्यम् ॥ ३५ ॥

ब्रह्माऽपीति चेत् ॥ ३६ ॥

इति चेत्पश्यसि प्रवृत्तवरणाद्धोतुर्वरणं प्रतिकर्म कर्तव्यमिति । ब्रह्माऽपि प्रवृत्ते कर्मणि व्रियते प्रणीताप्रणयनकाले । तस्मात्तस्यापि वरणं धर्ममात्रम् । अतस्तदपि प्रतिकर्म कर्तव्यम् । वक्तव्यो वा विशेषः ॥ ३६ ॥

न प्राग्नियमात्तदर्थं हि ॥ ३७ ॥

न ब्रह्मवरणं कर्तव्यम् । किं कारणं, प्राङ्नियमात्-प्राग्वरणादित्यर्थः । सत्यम्, प्रवृत्ते कर्मणि ब्रह्मणो वरणम् । प्राग्वरणान्न किंचिद्ब्रह्मत्वमस्ति । वरणादुत्तरकालं ब्रह्मणः कर्म, तदर्थं वरणं कर्मार्थम् । तस्मान्न धर्ममात्रम् । किमर्थं तर्हि । आनत्यर्थमेव । सौमिकेन वरणेनाऽऽनतोऽसौ । तस्माद्ब्रह्मवरणं न कर्तव्यम् ॥ ३७ ॥

निर्दिष्टस्येति चेत् ॥ ३८ ॥

अथोच्येत । अस्त्यमावास्यायामौपवसथ्येऽहनि वेदिकर्म[1] निर्दिष्टं, पूर्वेद्युरमावास्यायां वेदिं करोतीति । तत्र वेदिपरिग्रहप्रसवो[2] ब्रह्मणा क्रियते । तेन ब्रह्माऽपि प्रवृत्तवरण इति ॥ ३८ ॥

नाश्रुतित्वात् ॥ ३९ ॥

पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतं, न परिग्रहणम् । अश्रुतत्वात् । यथाकालमेव वृत्ते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्मार्थत्वात् । न प्राग् वेदिकरणात्पूर्वं[3]परिग्रहः । तत्रापि ब्रह्मणा प्रसवो दातव्यः ।

---

३९ ॥ ३६ ॥ ३७ ॥ ३८ ॥

---

१ गुणे—ग. मु. । २ वेदिपरिग्रहे—ग. मु. । ३ पूर्वं—ग. मु. ।

बाढम् । अयं तर्ह्यन्यः परिहारः । दर्शपूर्णमासप्रकरणे हविषामभिवासनादूर्ध्वं वेदिकरणमाम्नातम् । ब्रह्मवरणमपि प्रणीताप्रणयनकाले । प्राग् ब्रह्मत्वप्रवृत्तेर्दृष्टार्थत्वादानत्यर्थम् । एवं स्थितेऽमावास्यायां वेदिकरणं वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽप्यपकृष्टः प्रसबोऽपि ब्रह्मवरणमपि, प्रधानदेशकालत्वाद्गुणानाम् । एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम् । अमावास्यायां पूर्वेद्युः । उभयत्राप्रवृत्ते ब्रह्मत्वे । तस्मादुभयत्राऽऽनत्यर्थम् । अतो न प्रतिकर्म ब्रह्मवरणं कर्तव्यम् । सौमिकेनैव वरणेनाऽऽनतत्वाद्ब्रह्मणः ॥ ३९ ॥

होतुस्तथेति चेत् ॥ ४० ॥

इति चेत्पश्यसि, यद्यपि प्रवृत्ते कर्मणि ब्रह्मणो वरणं, न च वरणात्प्राक् किंचिद्ब्रह्मणः कर्मास्ति । तस्मान्न प्रवृत्तवरणो ब्रह्मेति । होतुस्तथा । होतुरपि प्राग्वरणान्न किंचित्कर्मास्ति । तस्यापि वरणं न धर्ममात्रम् ॥ ४० ॥

न कर्मसंयोगात् ॥ ४१ ॥

अस्ति होतुः प्राग्वरणात्सामिधेनीकर्मणा संयोगः, अन्वृतः[1] सामिधनीरन्वाहेति । तस्माद्धोतृवरणमदृष्टार्थम् । तदैष्टिकेषु कर्मसु दीक्षणीयादिषु[2] कर्तव्यम् । ब्रह्मवरणं तु दृष्टार्थम् । तत्सौमिकेनैव कृतत्वान्न कर्तव्यमिति ॥ ४१ ॥

( आतिथ्याबर्हिःप्रोक्षणादेरुपसदग्नीषोमीययोः प्रसङ्गाधिकरणम् ॥ १९ ॥ )

[१९] यज्ञोत्पत्त्युपदेशे निष्ठितकर्म प्रयोगभेदात्प्रतितन्त्रं क्रियेत ॥ ४२ ॥ पू०

सोमे श्रूयते, यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति । तत्र यन्निष्ठितस्य बर्हिषो लूनस्य क्रियते, यथा प्रोक्षणमग्राणामुपपातनं मूलानामवसेचनं, तत्किमातिथ्यादिप्रयोगभेदेन कर्तव्यम्, अथवा यदातिथ्यायां कृतं तदेवेतरत्र प्रसज्यते । किं प्राप्तम् । यज्ञोत्पत्त्युपदेशे-

३९ ॥ ४० ॥ ४१ ॥

1 प्रवृत्तः—ग. मु. । 2 दीक्षादिषु—क. ग. मु. ।

आतिथ्योत्पत्त्युपदेश एकस्मिन्, यदातिथ्यायां बर्हिस्तदुपसदामिति, यस्मिंश्चितकर्म क्रियेत, तत्प्रयोगभेदाद्भिन्नम् । भिन्नप्रयोगाण्येतान्यातिथ्यादीनि कर्माणि । तेषु गृह्यते विशेषः । यस्यस्य प्रयोगे प्रोक्षणादि कृतं तत्तदर्थमिति । तस्मादन्यार्थमावर्तयितव्यमिति । एवं प्रतिकर्माभ्यासः । न चात्र प्रसङ्गो युज्यते । न ह्यातिथ्यायास्तन्त्रमध्यपतिता उपसद अग्नीषोमीयो वा ॥ ४२ ॥

## न वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥ सि०

न वा प्रोक्षणादि कर्तव्यम् । कुतः । कृतत्वात् । कृतं तदातिथ्यायां बर्हिषः । तेन संस्कृतं तद्बर्हिः, पुनः क्रियायां हेतुर्नास्ति । ननु कर्मार्थाः संस्काराः । तच्च कर्म भिन्नम् । अतो यस्मिन्नेव कर्मणि क्रियन्ते तदर्था भवन्ति । उच्यते । कर्मार्था अप्येते सन्तो नाऽऽस्कन्दपालिकावत्कर्मणि संबध्यन्ते । किं तर्हि । बर्हिर्द्वारेण । यदीयं बर्हिः, तेन संबध्यते । साधारणं चेदमातिथ्यादीनां बर्हिः । कथं ज्ञायते । तदुपदेशो हि । यदातिथ्यायां बर्हिरित्यनेन वाक्येन तेषां बर्हिषः साधारण्यमुच्यते । न धर्मातिदेशः । न हि निरिष्टकोपदेश इत्युक्तम्, अपि चोत्पत्तिसंयोगात्तदर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यादिति । एवं चेदातिथ्यायामपि क्रियमाणाः संस्काराः सर्वार्था एव भवन्ति । तस्मान्न प्रतिकर्म कर्तव्या इति ॥ ४३ ॥

( आतिथ्याबर्हिषोऽग्नीषोमीयार्थे स्तरणकाले स्तरणमन्त्रावृत्त्यधिकरणम् २० ॥ )

## [ २० ] देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ॥ ४४ ॥ सि०

तत्रैव स्तरणमन्त्रश्चिन्त्यते । किमग्नीषोमीये भेदेन कर्तव्यः, अथवाऽऽतिथ्यायां प्रयुक्तः स एव प्रसज्यत इति । साधारणे बर्हिषि प्रयोगात्पूर्वोक्तेन न्यायेन प्रसङ्गे प्राप्ते, उच्यते, मन्त्रोऽभ्यावर्तते, भेदेन कर्तव्य इति । कुतः । देशपृथक्त्वात् । पृथग्गतौ देशौ, उत्तरवेदिसमीपं प्राग्वंशश्च । देशभेदात्स्तरणमावर्तेत । स्तरणाङ्गं च मन्त्रः,

---

४२ ॥ ४३ ॥

---

१ सन्तानास्कन्दपातिका यत्कर्मणि—ग. पु. । २ ( अ० ४ पा० २ अ० १४ सू० ३० ) ।
३ भ्यावर्तते—ग. पु. ।

ऊर्णाम्रदसं त्वा स्तृणामीति । स्तरणावृत्तौ मन्त्रस्याऽऽवृत्तिर्न्याय्या । प्रधानतन्त्रत्वाद्गुणानाम् । अपि च स्तरणं देशसंस्कारकम् । तेनाऽऽतिथ्यायां प्राग्वंशदेशः संस्कृतो नोत्तरवेदिदेशः । तत्र यदि मन्त्रो न प्रयुज्येत, विगुणस्तस्य संस्कारः स्यात् । तस्मादावृत्तिः स्तरणमन्त्रस्य ॥ ४४ ॥

( आतिथ्यावर्हिष्यग्नीषोमीयदेशे स्तरणार्थं संनह्याऽऽह्रियमाणे संनहनाहरणमन्त्रयोरनावृत्त्यधिकरणम् ॥ २१ ॥ )

## [ २१ ] संनहनहरणे तथेति चेत् ॥ ४५ ॥ पू०

अग्नीषोमीय एव देशान्तरं नीयमानस्य बर्हिषः संनहनहरणमन्त्रौ प्रयोक्तव्यौ नेति चिन्त्यते । तत्राऽऽह । संनहनहरणमन्त्रौ तथा, यथा, स्तरणमन्त्रः । भेदेन प्रयोक्तव्यावित्यर्थः । कुतः । उक्तो न्यायः । संनहनहरणमन्त्रौ कर्माङ्गे । ते च कर्मणी आवर्तेते । अतो मन्त्रयोरावृत्तिर्न्याय्या । तस्माद्भेदः ॥ ४५ ॥

## नान्यार्थत्वात् ॥ ४६ ॥ सि०

नैतद्युक्तम् । कुतः । अन्यार्थत्वात् । लूनस्य बर्हिषो ये संनहनहरणे ते उपादानार्थे । तत्र हि मन्त्रौ स्वीक्रियमाणस्यैवोपवर्णनारूपौ, पूषा ते ग्रन्थिं ग्रथ्नातु, बृहस्पतेर्मूर्ध्ना हरामीति । इमे पुनः स्वीकृतस्य देशान्तरप्रापणार्थे, अन्यार्थत्वादप्राकृतकार्ये न मन्त्रं गृह्णीतः । यथा तत्रैवाऽऽतिथ्यायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्षणाय बर्हिर्नीयते न तदाऽऽहरणमन्त्रः प्रयुज्यते । एवमिहापि ॥ ४६ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य प्रथमः पादः ॥

===

४४ ॥ ४५ ॥ ४६ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां द्वादशाध्यायस्य प्रथमः पादः ।

---

१ व्यावृत्तिः—ग. मु. । २ गुणानामपि च—ग. मु. । ३ तथा हि स्वीक्रि- ग. मु. । ४ प्रोक्ष्य-ग. मु. ।

## अथ द्वादशाध्यायस्य द्वितीयः पादः ।

( गार्हपत्याद्यग्निषु लौकिककर्मानुष्ठानाधिकरणम् ॥ १ ॥ )

**[ १ ] विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥ पू०**

विहार इति गार्हपत्यादिरग्निस्त्रेतोच्यते, विहरणात् । स लौकिकानां कर्मणां पार्वणस्थालीपाकादीनाम्, अन्येषां चाग्निसाध्यानां पचनदहनप्रकाशनादीनामर्थं साधयेत्—निर्वृत्तिं कुर्यात्, प्रभुत्वात् । प्रभवति ह्याहुतिप्रक्षेपणे पाकादौ च । संयुक्तं च न केनचित्प्रयोजनेनाग्निद्रव्यमुत्पन्नं, वसन्तेऽग्नीनादधीतेति । तत्सामर्थ्याद्यत्र यत्रोपयुज्यते तत्र तत्रोपयोज्यम् । एवं तस्योत्पत्तिरर्थवती भवति ॥ १ ॥

**मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥**

मांसपाकप्रतिषेधो भवति तद्वत् । यद्वन्न्यायोऽपदिष्टः । मांसं न पचेयुस्तस्मिन्नग्नौ, यत्पचेयुः क्रव्यादं कुर्युरिति । लौकिके हि पाके मांसप्रसङ्गो न वैदिके, शामित्रे मांसपाकः ॥ २ ॥

**निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सि०**

वैदिकानां वा कर्मणां विहारोऽर्थं साधयेत्, न लौकिकानाम् । कुतः । निर्देशात् । निर्दिश्यते गार्हपत्यादीनां कार्यम्, यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवतीत्येवमादिभिर्वाक्यैः । याऽसावुत्पन्ना कार्याकाङ्क्षा सैतैर्वचनैर्निवर्तिता । अत एवमर्थैवैषामुत्पत्तिः । तस्मान्न लौकिकेषु प्रसज्येरन् । भवेत्पाकादीनामयं परिहारो न स्थालीपाकादीनाम् । तेषामप्याहवनीय एव होमः प्राप्नोति । नैष दोषः । यदाहवनीये जुहोतीति नियमार्थ एष वादः । अन्तरेणापि हि वचनमाहवनीये होमोऽन्यत्र च प्राप्तः । तदेतन्नियमशासनं, यत्रानियमप्रसङ्गस्तद्विषयो विज्ञायते । वैदिकेषु चानियमप्रसङ्ग आगतः । आयतनस्यानिर्दिष्ट-

---

किमाहवनीयादिभिर्यद्यच्छक्यं कर्तुं तत्कर्तव्यं, उत यदेव निर्दिष्टं तदेव कर्तव्यम् । तत्र लिङ्गेन प्रमाणेन यद्यच्छक्यते तत्तत्कर्तव्यं, वैदिकं लौकिकं वाऽग्निसाध्यम् । ॥ १ ॥ [ २ ॥ ]

एवं प्राप्ते, आह—आहवनीयादय उत्पन्नाः साकाङ्क्षा वाक्येनैव निराकाङ्क्षी क्रियन्ते । 'यदाहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति' 'दक्षिणाग्नाव-

---

१ कर्तव्यमिति—इति चिन्त्यत इति शेषः ।

स्यात् । लौकिकानां तु निर्दिष्टमायतनम्, औपासनोऽग्निः । तस्मान्न तान्याहवनीये प्रसज्येरन् ॥ ३ ॥

सति चौपासनस्य दर्शनात् ॥ ४ ॥

सति च विहार औपासनोऽग्निर्दृश्यते, यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति, तस्यौपासने प्रतिहितमालभ्य जुहुयादिति । राजसूये प्रवृत्ते कर्मण्येतद्वचनम् । तस्मिंश्च काले विहारोऽस्ति । यदि च त्रेतैव लौकिकानां कार्यं साधयेत्, सत्यां तस्यां नौपासनः कार्याभावात्स्यात् ॥ ४ ॥

अभावदर्शनाच्च ॥ ५ ॥

मांसपाकस्य च वैहारिकेऽग्नावभावं दर्शयति । मांसीयन्ति ह वा एतस्याजुह्वतोऽग्नयो यजमानस्य, ते यजमानमेव ध्यायन्ति, यजमानं संकल्पयन्ति, पचन्ति ह वाऽन्येष्वग्निषु वृथा मांसम्, अथैतेषां नातोऽन्या मांसाशा विद्यते, इत्यन्यत्र पशुबन्धान्मांसस्पर्शनमेव वैहारिकाणामग्नीनां परिहरति । तस्मादपि न लौकिकेषु विहारप्रसङ्गः ॥ ५ ॥

मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ॥ ६ ॥

यत्तु, मांसपाकप्रतिषेधश्च तद्वदिति । तद्विहितप्रतिषेधः स्यात् । आहवनीये वपायाः श्रपणं विहितम् । तस्यायं प्रतिषेधः । कस्मात् । प्राप्तत्वात्, आहुतिसंयोगाच्च । तस्मिन्नग्नौ न मांसं पचति, यस्मिन्नाहुतीर्जुहोति, इत्याहुतिसंयोगेन वाक्यशेषः श्रूयते । आहवनीये चाऽऽहुतयो हूयन्ते । तस्माद्वपाश्रपणस्यायं प्रतिषेधः ॥ ६ ॥

वाक्यशेषो वा दक्षिणेऽस्मिन्नारभ्य विधानस्य ॥ ७ ॥

अथवाऽयमन्यः परिहारः । दक्षिणेऽग्नौ पत्न्या व्रतस्य श्रपणमाम्नातम् । यदाऽऽमयदोषान्मांसं व्रतकार्य उपादीयते तदा तत्र दक्षिणाग्नौ श्रपयित-

---

न्याहार्यं पचति ' इति । न च लौकिकेषु शक्या विधातुम् । ते हि सहैवाऽऽधानेनोत्पद्यन्ते होमादयः । यथा पदहोमः ॥ ३ ॥ [ ४ ॥ ५ ॥ ६ ॥

---

१ प्रतिहतमन्या जुहु—ग. मु. । २ मांसस्याशनमेव—ग. मु. । ३ दक्षिणस्मिन्ननारभ्य—क. ख. मु. । ४ प्रत्यक्षवाक्येनैव निराकाङ्क्षीकृतेष्वाहवनीयादिषु लिङ्गेनैवेन्द्रया विनियोगासंभवेऽपि वाक्येनैव लौकिकसाधारण्येन विनियोगो भवत्विति शङ्कां परिहरति—न चेति ।

ष्यमिति तस्य दक्षिणाग्नौ व्रतश्रपणवाक्यस्यायं शेषः, अन्यत्र मांसादिति। या सरस्वती वेशमतीति योऽसौ दक्षिणाग्नौ होमस्तत्रैतच्छ्रूयते। तस्माद्दक्षिणाग्न्यभिप्रायं विज्ञायते॥ ७॥

( सवनीयपशौ पशुपुरोडाशकर्तव्यत्वाधिकरणम्॥ २॥ )

## [२] सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात्॥ ८॥ पू०

सवनीये पशौ पुरोडाशो न स्यात्। न कर्तव्यः। कुतः। छिद्रापिधानार्थत्वात्। पशोश्छिद्रापिधानार्थः स एवं श्रूयते, सुषिरो वा एतर्हि पशुः, यर्हि वपामुत्खिदति, यद्व्रीहिमयः पुरोडाशो भवत्यपिधानायासुषिरायेति। अन्येषां चैवमर्थत्वात्। तच्छिद्रापिधानमन्यैरेव क्रियते, सवनीयैः पुरोडाशैः। तत्रापि श्रूयते, अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्तेऽपिहित्या अच्छिद्रताया इति। अतः कृतार्थत्वात्पशुपुरोडाशो निवर्तते॥ ८॥

## क्रिया वा देवतार्थत्वात्॥ ९॥ सि०

कर्तव्यो वा पशुपुरोडाशः। कुतः। देवतार्थत्वात्। देवतासंस्कारार्थोऽयमित्येतदुक्तम्, अपि वा शेषभूतत्वात्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगादिति। न च पुरोडाशश्छिद्रापिधानार्थः, प्रत्यक्षविरोधात्। अर्थवादमात्रं तत्। पुरोडाशविधानार्थं वादमात्रम्। सवनीयेष्वप्येवमेवार्थवादमात्रम्। तस्माच्चोदकप्राप्त्या कार्यः पुरोडाशः॥ ९॥

## लिङ्गदर्शनाच्च॥ १०॥

वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवन इति। तन्त्रविप्रकर्षपरे वाक्ये पुरोडाशं दर्शयति। तस्मादपि कार्यः॥ १०॥

( सवनीयपुरोडाशेषु हविष्कृदाह्वानाभावाधिकरणम्॥ ३॥ )

## [३] हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्द्वियमानत्वात्॥ ११॥ सि०

---

७॥ ८॥ ९॥ १०॥

---

१ प्रस्तूयते–ग. पु.। २ (अ० १० पा० १ अ० ९ सू० २३)।

सवनीयेषु पुरोडाशेषु हविष्कृदाह्वानं न कर्तव्यम् । कुतः । पशुं प्रत्याहूताऽसौ । पशुमध्यपतिताश्च सवनीयाः । तेषु सैव विद्यमानत्वा-त्प्रसङ्गादुपयोक्ष्यते । नार्थः पुनराह्वानेन । ननु नैव पशोर्हविष्कृदस्ति, औषधार्था, अवहननार्था वा । यथा पत्नी तुल्यवच्छ्रूयत इति संकर्षे वक्ष्यति । प्रकृतौ यदि सर्वार्था, आज्यौषधसांनाय्यार्थेत्येवं कृत्वा चि-न्त्यते । कृत्वाचिन्तेयम् ॥ ११ ॥

( तार्तीयसवनिकपुरोडाशादिषु भेदेन हविष्कृताह्वानाभावा-धिकरणम् ॥ ४ ॥ )

[४] पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ पू०

तार्तीयसवनिकेषु पुरोडाशेषु तु सौम्याश्विनयोश्च भेदेन हवि-ष्कृत्स्यात् । कुतः । पशौ संस्कृते विधानात् । पक्वे पशावेते विधी-यन्ते । तस्मिन् काले पाशुकी हविष्कृत्कृतार्थत्वादपवृक्ता । तस्माद-न्याऽऽह्वातव्या ॥ १२ ॥

योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥ सि०

न वाऽन्याऽऽह्वातव्या । सैव कुर्याद्विद्यमानत्वात् । ननु कृतार्थ-त्वादपवृक्ताऽसौ । नापवृज्यते । कुतः । योगाद्यज्ञाय । यज्ञायासौ पशुबन्धाय, युक्ताऽऽदावेव । न केवलं सा यज्ञाङ्गानि सर्वाणि साध-यितुम् । कस्त्वा युनक्ति स त्वा युनक्तीत्येवमादिना मन्त्रेण यज्ञार्थं युक्ता । तस्या यज्ञविमोके विसर्गो न्याय्यः । यत्कारणम् । कस्यां-चिदापादि पुनस्तया कदाचित्कार्यं भवेत् । तस्मान्न भेदेनाऽऽह्वा-तव्या ॥ १३ ॥

( निशियज्ञेऽमावास्यातन्त्रस्य प्रसङ्गाधिकरणम् ॥ ५ ॥ )

[ ५ ] निशियज्ञे प्राकृतस्यापवृत्तिः स्यात्प्रत्यक्ष-शिष्टत्वात् ॥ १४ ॥ पू०

---

११ ॥ १२ ॥ १३ ॥

---

१ आज्यौषधि—ग. मु. । २ संस्थिते—क. । ३ अपवृत्ता—ग. मु. ।

इदं श्रूयते, अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयादिति । पुनरपि तत्रैव, अमावास्यायां निशि यजेतेति । तस्मिन् किममावास्यातन्त्रं प्रसज्यते, उत नेति चिन्तायां, पक्षः परिगृह्यते, निशियज्ञे प्राकृतस्याप्रवृत्तिरिति । अस्मिन्निशियज्ञे प्राकृतस्य—अमावास्यातन्त्रस्य, अप्रवृत्तिः—न प्रसज्यते । कुतः । प्रत्यक्षशिष्टत्वात् । प्रत्यक्षशिष्टेयमिष्टिः । अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयादिति[1] । किमतः । तत एवं विज्ञायते । स्वतन्त्रेयमुत्पन्ना, न कस्यचित्कर्मणस्तन्त्रमध्ये, यथा पशुपुरोडाशः, अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपतीति । यथा च वैष्णवो वैश्वदेवस्य, यदधोऽवमृद्येत्, यच्च स्फ्य आश्लिष्येत्, तद्विष्णव उरुक्रमायावद्येदिति । ननु, अमावास्यायामिति, आमावास्यस्य कर्मणो मध्ये श्रुता । नामावास्याशब्दः कर्मवचनः । किं तर्हि । कालवचनः । काले श्रुतिः, कर्मणि लक्षणा । श्रुतिश्च लक्षणातो न्याय्या । न चेत्कस्यचित्कर्मणो मध्ये श्रूयते, कस्य तन्त्रं ग्रहीष्यते । तस्मात्स्वतन्त्रा ॥ १४ ॥

कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥

कालभेदाद्वाक्यभेदाच्च । कालभेदस्तावदमावास्यायां रात्रौ निशियज्ञः । प्रतिपद्यहन्यामावास्यम् । कालभेदेन वैगुण्यान्नामावास्यातन्त्रं निशियज्ञस्योपकर्तुमर्हति । कथं तर्हि पाशुकाः प्रयाजादिप्रवृत्ति पशौ क्रियमाणाः सन्तस्तस्य पुरोडाशस्योपकुर्वन्ति । उक्तस्तत्र न्यायः । न कृतस्य गुणानुग्रहार्थमावृत्तिरस्तीति । इह पुनरकृतमामावास्यम्[3] । तस्मादवैगुण्याय स्वतन्त्रं कर्तव्यम् । वाक्यभेदाच्च । भिन्नदेशे चैते वाक्ये, अमावास्यायां यजेत, अमावास्यायां निशि यजेतेति । एकं दर्शपूर्णमासप्रकरणे । एकं काम्यास्विष्टिषु । किमतः । यदि समानदेशे स्यातां ततः, अमावास्यायां यजेतेति, योऽसावामावास्ये कर्मणि काल उपात्तस्तस्मिन्नेव च निशियज्ञश्चोदित इति गम्येत । तत्रामावस्यातन्त्रमध्य

---

१४ ॥

---

१ तन्त्रं निशि प्रस—ग. म. । २ इत्युक्तम्—ग. मु. । ३ अकृताऽमावास्या—ग. मु. ।

एव विहितः स्यात् । अथ पुनर्देशभेदे सति यथा, अमावास्यायां यजेतेत्युपात्तः काल उपादेयत्वेन चोद्यते, एवमिहापि । न च तुल्यकालत्वे प्रसङ्गो भवति । यथा वैकृत्य इष्टयो दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यो न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति । तस्मात्तन्त्रभेदः ॥ १५ ॥

वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥

किमेष एवोत्सर्गः सर्वं तन्त्रं भिन्नम् । न खलु । वेद्युद्धननं व्रतं च स्यात्तदेव, यद्दर्शार्थं वेदेरुद्धननं कृतम् । तेनोद्धतायाः पुनरुद्धनने नेहं किंचित्कार्यमस्ति । केवलं कृतदूषणं भवेत् । व्रतं चोपेतमनुत्सृष्टं पुनरुपेतुमशक्यम् । उपेयमानं च पिष्टपेषणवदकिंचित्करं स्यात् । तस्मादेतदुभयमपि तदेव प्रसज्यते ॥ १६ ॥

तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ सि०

तत्तन्त्रा वा निशीष्टिः स्यात् । आमावास्यातन्त्रेयं, न स्वतन्त्रा । कुतः । तन्त्रमध्ये विधानात् । आमावास्यातन्त्रमध्य इयं विहिता, अमावस्यायां निशि निर्वपेदिति । ननु कालवचनोऽमावास्याशब्दो न कर्मवचन इत्युक्तम् । सत्यं, कालवचनः । स तु कालस्तन्त्रमध्ये । तत्र विधीयमाना तन्त्रमध्ये विहिता भवति, सवनीयवत् । तद्यथा सवनीयाः पुरोडाशा न तावत्पशुकर्मोद्दिश्य विधीयन्ते । अथ च पशुतन्त्रमध्ये विहिता भवन्ति । यस्मिन्स्थाने विहितास्तत्स्थानं पशुतन्त्रमध्य इति । इयमपि तन्त्रमध्ये पतिता चेत्सवनीयवदेव न स्वतन्त्रा भवितुमर्हति ॥ १७ ॥

वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवतार्थम् ॥ १८ ॥

अत्राऽऽह । किमेष एवोत्सर्गः । सर्वममावास्यातन्त्रं निशीष्ट्यर्थं साधयतीति । न खलु । इध्माबर्हिर्न साधयेत् । कुतः । वैगुण्यात् ।

---

१५ ॥ १६ ॥ १७ ॥

---

१ विहिता—क. । २ सर्वतन्त्रं—ग. मु. । ३ नहि—ग. मु. । ४ विधीयमानत्वात्—मु. । ५ पतिता । सव—ग. । ६ आमावास्यं तन्त्रं-क. ।

इध्मोऽग्निसमिन्धनार्थः । स [2]प्रतिपद्याहृतोऽमावास्यायां निशि वर्तमानस्य निशियज्ञस्याग्निसमिन्धनं न साधयेत् । बर्हिरपि वेदिस्तरणार्थम् । ते यदि प्रसज्येयातां विगुणो निशियज्ञः स्यात् । तस्माद्भेदेन ते कर्तव्ये । अग्न्यन्वाधानं च यदि देवतार्थम् । यदि देवतापरिग्रहार्थमग्न्यन्वाधानं, तदपि भेदेन कर्तव्यम् । प्राकृतेनाग्न्यन्वाधानेनामावास्यादेवता परिगृहीताः । न च रक्षोघ्नोऽग्निः । तत्परिग्रहार्थमप्यग्निधारणार्थं, ततः प्राकृतेनैव धारितत्वादग्नेर्न कर्तव्यम् । देवतापरिग्रहार्थता वाक्यशेषे श्रूयते, ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति । देवता एव तत्पूर्वेद्युः परिगृहीताः । श्वोभूते यजत इति ॥ १८ ॥

( दर्शपूर्णमासविकृतिषु सौर्यादिष्वन्वारम्भणीयानुष्ठानाधिकरणम् ॥ ६ ॥ )

अत्राऽऽशङ्कते—

[ ६ ] आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ १९ ॥ पू०

वैकृतेषु कर्मसु दार्शपौर्णमासिकारम्भणीया कर्तव्या, उत नेति विचारे न कर्तव्येत्युच्यते । किं कारणम् । प्रकृतिकालमध्यत्वात् । प्रकृतेः—दर्शपूर्णमासयोः, कालः, [3]यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । तन्मध्ये वैकृतानि कर्माणि पतन्ति । कृता पुनस्तदर्थेन । कृतस्य यावज्जीविकस्य प्रयोगस्यार्थेनाऽऽदौ कृताऽऽरम्भणीया, [4]सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगादित्युक्तम् । एवं सैव तेषां प्रसङ्गात्कार्यं साधयिष्यतीति । तस्मान्न तेषु भेदः स्यात् ॥ १९ ॥

स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ सि०

स्याद्वा विकृतिष्वारम्भणीया । कुतः । चोदकेन प्राप्यत इति । ननु प्रकृतिकालमध्यपातात्प्रसज्यत इत्युक्तम् । न यावज्जीवकालः प्रकृतेः शेषभूतः । कर्तृधर्मोऽसावित्युक्तं, [4]कर्तुर्वा श्रुतिसंयोगादीति । योऽसौ कर्तृधर्मो नियमः, तस्यायं कालः । प्रकृतेस्तु दर्शश्च

१८ ॥ १९ ॥

१ इध्मो नामाग्नि—मु. । २ प्रतिपद्याहृतः । अमा—क ग. मु. । ३ ( अ० ९ पा० १ अ. १० सू० ३५ ) । ४ ( अ० २ पा० ४ अ० १ सू० २ ) ।

पूर्णमासश्च कालः। तस्मान्न दर्शपूर्णमासप्रयोगस्य तन्त्रमध्ये पतिता विकृतयः । अतो न तास्वारम्भणीया प्रसज्यते। अन्यथा कृत्वा दोष उक्तोऽन्यथा परिहारः । दार्शपूर्णमासिको यावज्जीवकाल इति कृत्वा दोष उक्तः । नैयमिक इति परिहारः । पक्षान्तरैरपि परिहारा भवन्ति ॥ २० ॥

## आरम्भविभागाच्च ॥ २१ ॥

विभक्तः प्रकृतिविकृत्योरारम्भः। यदा प्रकृतेरारम्भस्तदा विकृतिरनुत्पन्नैव । सा हि कामेन निमित्तेन वा चोद्यते । अतस्तस्याः प्रकृत्यारम्भे नाऽऽरम्भः । आरम्भभेदाच्च तन्निमित्ताया आरम्भणीयाया भेदः स्यात् । तस्मा[1]त्तस्या[2]द्विकृतिष्वारम्भणीया ॥ २१ ॥

( सहानुष्ठीयमानेषु प्रधानेषु धर्मविरोधे भूयसां स्वधर्मानुष्ठानाधिकरणम् ॥ ७ ॥ )

## [७] विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २२ ॥ सि०

पञ्चदशरात्रेऽग्निष्टुदेकाहः प्रथममहः। ततो ज्योतिर्गौरायुरिति त्र्यहः। परिशिष्टान्येकादशाहानि द्वादशाहप्रकृतीनि । तत्र धर्मविप्रतिषेधे सत्येकादशानामह्नामग्निष्टुतश्च विचार्यते । किमेषु द्वादशाहिको धर्मः कर्तव्य उताग्निष्टुत इति । ननु सिद्धमेतत्, चोदकनामधेययोर्बलाबलपरीक्षायामैकाहिको धर्मः कर्तव्य इत्युक्तम्, [3]न वा क्रत्वभिधानादधिकानामशब्दत्वमिति । तथा सिद्धं न्यायान्तरेणाऽऽक्षिप्यते । अथवा नाम्नामेव मिथोऽन्वा ।

विप्रतिषिद्धधर्माणामेते[4]षामग्निष्टुतश्चैकादशानां चाह्नां समवाये एतस्मिन् पञ्चदशरात्रे भूयसामेकादशानामह्नां सधर्मत्वं स्यात् । तदीयो धर्मः कर्तव्यः । को हेतुः । भूयस्त्वमेव । बहुषु गुणसंपन्नेषु महत्फलं

---

२० ॥ २१ ॥ ]

अस्मिन्सूत्रे पञ्चदशरात्रस्तावदनुदाहरणम् । कथम् । या तावद्वसतीवरीग्रहणोत्तर-

---

१ प्रतीमाः—मु । २ तस्माद्विकृ—ग मु.। ३ ( अ० ७ पा० ४ अ० २ सू० १५ ) । ४ एतेषामिति—ज्योतिरादीनां नामातिदेशविषयाणामित्यर्थः ।

भवति । एकस्मिन्नल्पं फलम् । एष हि लोके दृष्टान्तः । लोके, एकादशसु प्रदीपेषु तैलवर्तिसंपन्नेष्वेकस्मिन् गृहे महान् प्रकाशो भवति । विपर्ययेऽल्पः । किं पुनरिहोदाहरणम् । सुब्रह्मण्याऽग्निष्टुत्याग्नेयी । इतरेष्वहःस्वैन्द्री । तत्रैन्द्री कर्तव्या ॥ २२ ॥

( समानसंख्येषु प्रधानेषु धर्मविरोधे प्रथमपठितस्यैव धर्मानुग्रहाधिकरणम् ॥ ८ ॥ )

## [८] मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥ सि०

काली सुब्रह्मण्या, सा प्रतिदिवसं क्रियते । यथादेवतं चाग्निष्टुत्याग्नेयी । अन्येष्वैन्द्री । तत्र तावत्संशय एव नास्ति । अविरोधात् । या त्वातिथ्यान्ते, उपसत्सु च तस्यां विरोधः । तत्रापि देवतासंस्कारकत्वान्निगदस्य यथादेवतमेव तन्त्रभेदः । नास्ति तन्त्रेणेहोच्चारणम् । यथा निर्वापमन्त्रः संस्कारकत्वात्प्रतिनिर्वापं भिद्यते, एवमियमपि । तस्माद्द्वे अपि सुब्रह्मण्ये आह्वातव्ये । किं तर्ह्यत्रोदाहरणं, यत्र पञ्च यागाः सह चोद्यन्ते फलं प्रति । तत्र च त्रयाणां पौर्णमासिको विध्यन्तः । द्वयोर्दार्शिकः । तत्राभिमर्शनाज्यभागमन्त्रयोर्विरोधः । तत्र भूयसां धर्माणामनुग्रहः, प्रयोगवचनानुग्रहाय ॥ २२ ॥

१ कालं—च. मु. । २ क्रियत इति—'तत्कालात्वावर्तेत प्रयोगतो विशेषसंयोगात्' । ( अ० ११ पा० ३ अ० ११ सू० २२ ) अत्रत्यन्यायादिति शेषः । ३ आग्नेय्यग्निष्टुति—छ. ज. । ४ आतिथ्यासु—घ. मु. । ५ विरोध इति—तन्त्रेण क्रियमाणायामिति शेषः । ६ तन्त्र भेदः—प्रयोग भेद इत्यर्थः । ६ भवतीति भेदः—घ. मु. । ७ तन्त्रे किंचिच्चारणम्—च. मु. । ८ दार्शिक इति—तदुदाहरणमिति शेषः । तद्यथा, 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं, दधि मधु घृतमापो धानाः, तत्संसृष्टं प्राजापत्यं पशुकामः' इति वाक्येन चित्रेष्टिवदेव द्रव्यदेवतासंबन्धभेदात्सप्त यागाः सह चोद्यन्ते । तत्राऽऽद्यस्याऽऽग्नेयपुरोडाशस्य, अन्त्यस्य च प्राजापत्यस्य धानायागस्याऽऽग्नेयविकारत्वादाग्नेयस्य चोभयकालत्वाद्धर्मविरोधाभावेन न तत्र विचारः । इतरेषु पञ्चसु धर्मविरोधाद्विचार्यते । तत्र, ऐन्द्र एकादशकपाल ऐन्द्राग्नविकारः । दधियागो दधियागस्यैव । अतस्तयोर्दार्शिका धर्माः । मधुघृतोदकानां तूपांशुयाजविकारत्वात्पौर्णमासिका धर्माः, अत्र धर्मविरोधे केषां धर्मा अनुग्राह्या इति चिन्त्यत इति भावः । वस्तुतस्त्विदमप्युदाहरणममावास्यायामुपांशुयाजाभावपक्षाभिप्रायेणैव ज्ञेयम् । यदि तु शाङ्खायनशाखानुरोधेनामावास्यायामप्युपांशुयाजसत्त्वं तदोदाहरणान्तरं मृग्यम् । ९ मन्त्रयोरिति—'चतुर्होत्रा पौर्णमासीमभिमृशेत, पञ्चहोत्राऽमावास्याम्' इति विहितावभिमर्शनमन्त्रौ । 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति विहितावाज्यभागमन्त्रौ ज्ञेयौ ।

यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः, तत्र मुख्यधर्मः कर्तव्यः। यथा, आग्नावैष्णवमेकादशकपालं निर्वपेदपराह्णे। सारस्वतीमथाऽऽज्यस्य यजत इति। तत्र मुख्यस्याऽऽग्नावैष्णवस्य कल्पो भवति। कुतः। पूर्वचोदनात्। पूर्वचोदितत्वात्पाठक्रमेण पूर्वमाग्नावैष्णवः कर्तव्यः। तस्य धर्मा अप्रत्यनीकाः प्राप्नुवन्ति। उत्तरस्य तु पूर्वेण विरुद्धाः। तदुत्तरकाला हि तस्य प्राप्तिः। तद्धर्माणां च। पूर्वस्य कृते कल्प उत्तरस्य तेनैव कृतार्थत्वात्स्वकल्पो निवर्तते। ऐकाधिकरण्यं त्वेके मन्यन्ते। तेषां पञ्चदशरात्रेऽपि मुख्यधर्मानुग्रह एव ॥ २३ ॥

## तथा चान्यार्थदर्शनम् ॥ २४ ॥

अन्यार्थोऽपि पूर्वं प्राप्तस्य बलीयस्त्वं दर्शयति। अध्वरस्येव पूर्वमथाग्नेयीज्यते रूपाऽपि ह्येव कर्मवदग्निकर्मेति[1]। इदं चापि, यथा वै पूर्वावसायिनो जघन्यावसायिनं नोन्नीयन्ते[2] नावसास्यन्तीत्येवमेवैतदिति। ॥ २४ ॥

( अङ्गप्रधानयोर्धर्मविरोधे प्रधानस्यैव धर्मानुग्रहाधिकरणम् ॥ ९ ॥ )

## [९] अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥ सि०

ज्योतिष्टोमे दीक्षणीया, आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाण इति। तत्रैव सौत्यमहः। तयोः पर्वकालः, य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति वचनात्। यदा एका दीक्षा, तिस्र उपसद इत्येवमादयः कल्पास्तदा विरोधः। तत्र चिन्ता। किं दीक्षा पर्वणि कर्तव्या, अपर्वाणि सुत्या, उत विपर्यय इति। मुख्यत्वाद्दीक्षा कार्येति प्राप्ते, उच्यते। अङ्गगुणेन प्रधानगुणस्य विरोध एतस्मिन, अङ्गगुणो बाध्येत। कुतः। तादर्थ्यात्।

---

'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति समसंख्ययोर्धर्माणाम्[3]। तस्माद्भिन्ने एवैते[4] अधिकरणे ॥ २३ ॥ [ २४ ॥

---

१ अध्वरस्य पूर्वमथाग्नेः। उपाहि ह्येतत्कर्मेति—क.। २ नेनीयन्ते—क.। ३ समसंख्ययोर्धर्माणामिति—समसंख्ययोः प्रधानयोर्धर्मविरोधेऽनियममाशङ्क्य मुख्यस्य साधर्म्यमनेन सूत्रेणोच्यत इति पूरणम्। ४ भिन्ने एवैते इति—एवकारेण, 'विप्रतिषिद्धधर्माणाम्' 'मुख्यं वा' इति सूत्रयोरैकाधिकरण्यं वृत्तिकाराभिमतं निरस्तं वेदितव्यम्।

अङ्गं गुणवत्क्रियते प्रधानं सगुणं स्यादिति । तच्चेदङ्गे गुणवति क्रियमाणे विगुणमापद्यते, कोऽर्थोऽङ्गेन गुणवता कृतेन । तस्मात्पर्वणि सुत्या कर्तव्या । अपर्वणि दीक्षा ॥ २५ ॥

( पाशुकचातुर्मास्येषु परिधौ यूपपरिध्युभयधर्माणामविरुद्धानामनुष्ठाना-धिकरणम् ॥ १० ॥ )

## [ १० ] परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥२६॥ सि०

पशुमत्सु चातुर्मास्येषु श्रूयते, परिधौ पशुं नियुञ्जीतेति । स परिधिरुभयधर्मा स्यात् । परिधिधर्मा यूपधर्मा च । कस्मात् । द्व्यर्थत्वात् । स करोति, अग्नेश्च परिधानं, पशोश्चामावल्यम् । अर्थप्रयुक्ताश्च धर्माः । तस्मादुभये कर्तव्याः, अविरुद्धाश्च ये । यथा, यवमतीभिरद्भिः प्रोक्षणमञ्जनं परिव्याणमिति यूपधर्माः । इध्मसंनहनं संमार्जनं जुह्वा वसुरसीत्येवमादिभिरञ्जनमभ्याश्रावणमिति परिधिधर्माः ॥ २६ ॥

( परिधौ स्वधर्मविरोधे यूपधर्माननुष्ठानाधिकरणम् ॥ ११ ॥ )

## [११] यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥२७॥ पू०

विरोधे तु सति यूपधर्मः कर्तव्यः, न परिधिधर्मः । कस्मात् । मुख्यानन्तर्यात् । मुख्यः पशुः । स हि यागं निर्वर्तयति । तस्यानन्तरो यूपः । संनिपातित्वात् । तेन सोऽन्तरङ्गः । परिधिस्त्वग्निना संबध्यते, अग्निर्हविषा । स बहिरङ्गः । अन्तरङ्गबहिरङ्गयोश्चान्तरङ्गं बलीयः । तत्कस्य हेतोः । अत्र हि पूर्वः प्रत्ययो भवेत् । ये धर्मा अपूर्वार्थास्ते साक्षादपूर्वेणासंबध्यमानास्तदङ्गेषु विज्ञायन्ते । अतस्तत्र बुद्धिरपूर्वासंभवेन निवर्तमानाऽङ्गेषु प्रवर्तमानाऽन्तरङ्गे तावदापतति । ततो व्यवहिते बहिरङ्गे । यत्र च पूर्वमापतति तत्रैव तिष्ठति । तदतिक्रमे कारणाभावात् । तस्माद्विरोधे यूपधर्मः कर्तव्यः । कः पुनरसौ । तक्षणमुच्छ्रयणं निखननमिति ॥ २७ ॥

---

२१ ॥ २१ ॥ २७ ॥

---

१ परिधेः—ग. । २ नियुञ्जन्तीति—क ख. मु. । ३ अप्रागल्भ्यम्—क. । ४ यूपधर्माः कर्तव्याः, न परिधिधर्माः—ग. । ५ आतिष्ठति—क. । ६ यूपधर्माः कर्तव्याः—ग. मु. ।

इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ सि०

इतरो वा–यूपधर्मो वा, अविरोधी कर्तव्यः । कुतः । तस्य तत्र विधानात् । तस्य यूपकार्यस्य पशुनियोजनस्य, तत्र–परिधौ, विधानात्, परिधौ पशुं नियुञ्जन्तीति । अवस्थाप्य परिधित्वं नियोजनमुच्यते । तत्परिधित्वानुपमर्देन विज्ञायते, तथाभूतोपदेशात् । यथा, खलेवाली यूपो भवतीति । यद्युच्छ्रयेत तक्षेद्वा परिधित्वमेव व्याहन्येत । सत्वक्कोऽसावुपशयश्च । तत्र, परिधौ पशुं नियुञ्जन्तीत्येतदेवायथार्थं स्यात् ॥ २८ ॥

उभयोश्चाङ्गसंयोगः ॥ २९ ॥

उभयोश्च पक्षयोरङ्गेनैव धर्मस्य संयोगः । न कचित्प्रधानेन प्रत्यासत्तिरिति । नाऽऽसत्योपकारविशेषः । तस्मादकारणं सा । अतः परिधिधर्मः कर्तव्यः ॥ २९ ॥

( सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव प्रसङ्गाधिकरणम् ॥ १२ ॥ )

[१२] पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥ पू०

सवनीये पशौ सवनीयेषु च पुरोडाशेषु प्रसङ्गे विकल्पः स्यात् । पाशुकं वा तन्त्रं सवनीयेषु प्रसज्यते । सवनीयतन्त्रं वा पशौ । कुतः । विशेषाभावात् । नात्र पुरोडाशाः पशुतन्त्रे विधीयन्ते, न पशुः पुरोडाशतन्त्रे । उभये स्वतन्त्राः । आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति, अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्त इति । तत्र यदि कस्यचित्तन्त्रं प्रत्यक्षशिष्टं स्यात् , कस्यचिदानुमानिकं, तदा

---

२८ ॥ २९ ॥ ]

सवनीयस्य पशोः सवनीयानां च, इतरस्य वेतरेषु तन्त्रं प्रसज्यते, इतरेषां वेतरस्मिन् । कुतः । यतो नास्तीदृशी चोदना, सवनीयमुपक्रमस्य सवनीया निर्वप्तव्या इति । यथा पशुपुरोडाशस्य प्रक्रान्ते पशौ । निशीहिर्न्यायोऽप्यत्र नास्ति । तत्र

---

१ पशोः–ग. मु. । २ उभयोः स्वतन्त्रम्–ग. मु. । ३ पशाविति—' अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत ' इत्येवं श्रवणम् । येन पशुतन्त्रमध्यपातात्सवनीयपुरोडाशाः प्रसज्येरन्निति शेषः । ४ ( अ० १२ पा० २ अ० ५ सू० १४ ) अत्रत्यन्यायो द्रष्टव्यः ।

यस्य प्रत्यक्षशिष्टं स तन्त्री स्यात्, इतरः प्रसङ्गभाक्। उभयोश्चाश्रुतिभूतत्वम्। पशुरपि वैकृतः, पुरोडाशा अपि। तेनायमपि विशेषो नास्ति। अत उभयोस्तुल्यप्राप्तेरन्यतरेण कृतार्थत्वाद्विकल्पः। ननु वैकृत एवायं पशुः। तत्र वैकृतश्चेदिति संशयवचनं न युक्तम्। अत्रोच्यते। असंशयितेऽपि संशयवादो भवति। यथा—

ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः।
शास्त्राणि चेत्प्रमाणं स्युर्यातास्ते परमां गतिम्॥ ३०॥

## पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात्॥ ३१॥ सि०

पाशुकं वा तन्त्रं पुरोडाशेषु प्रसज्यते। न विकल्पः स्यात्। कुतः। तस्य वैशेषिकाम्नानात्। पशोर्वैशेषिको धर्मस्तत्राऽऽम्नातः सूक्तवाकप्रैषः—अग्निमद्येति। तदाम्नातमनर्थकं विकल्पे सति स्यात्। अन्तरेणापि ह्याम्नानं पक्षे भवत्येव सः। अत आम्नातसामर्थ्यान्नित्योऽसौ। न च पौरोडाशिके तन्त्रे प्रसज्यते। स हि मैत्रावरुणेन प्रैषो वक्तव्यः। न च तत्र मैत्रावरुणोऽस्ति। दर्शपूर्णमासयोश्चत्वार ऋत्विज इति नियमात्। पशौ तु सोऽस्ति। पशुतन्त्रे प्रसज्यमाने न किंचिद्वैगुण्यम्। पुरोडाशतन्त्रे सति ऋत्विक्संख्या वा वर्जयितव्या, अमैत्रावरुणेन वाऽयं प्रैषो वक्तव्यः।

---

हि प्रक्रान्ते दर्शे कतिपयैः पदार्थैः कृतैः सति निमित्ते नैमित्तिकीष्टिरापतति। साऽपि तन्त्रमध्ये पतत्येव। इह तु प्रातरनुवाककाले पशुसवनीययोः समानकालः प्रक्रमः। तस्माद्विकल्पस्तन्त्रस्य॥ ३०॥

दार्शिकः सूक्तवाकप्रैषोऽग्नीषोमीये पशौ 'अग्निमद्य होतारमवृणीत' इत्येवं विकृतः पुनः सवनीये पशौ विक्रियते 'अग्निमद्य होतारमवृणीतायं यजमानः सुतासुती' इति। यदि पौराडाशिकं तन्त्रं स्यात्तत इदं नित्यवदाम्नानं पाक्षिकं कृतं स्यात्। तस्मादाम्नानसामर्थ्यान्नित्यमसौ प्रयोक्तव्यः। तस्य च मैत्रावरुणेन कर्त्रा क्रियमाणस्य पशोः सादूगुण्यं भवति।

---

१ यतस्ते परमा गतिः—ग. मु.। २ सति ततो निमित्तेन—छ. ज.। ३ दार्शिक इति—'इविता दैव्या होतारः' इत्येवंरूप इत्यर्थः। ४ स्यादिति—सवनीये पशौ कदाचित्स्यादित्यर्थः। ५ आम्नातं—घ. मु.।

उभयथाऽपि प्रकृतिविरोधः। तस्मान्नियमेन पाशुकं तन्त्रं प्रसज्यते ॥ ३१ ॥

## पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥

अपि च पशोस्तन्त्रस्य विप्रकर्षः, वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवन इति। तस्य विप्रकृष्टत्वा-त्तन्त्रमध्ये पुरोडाशानां विधानं युज्यते। प्रातःसवनीयानां तु पुरोडा-शानां तन्त्रं प्रातःसवन एवापवृज्यते। अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्त इति वचनात्। तन्मध्ये पशोः पातो न घटते, पुरोडाशाङ्गप्र-चारयोर्व्यतिरेकात्। इह च प्रातःसवनीयैरेव सह पशोः संदेहः। इतरे पुनः पुरोडाशा असंशयं पशोः प्रातःसवनीयानां वा तन्त्रमध्ये पतिताः।

ननु, आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यनुयाजानामुत्कर्षात्पौरोडा-शिकमपि तन्त्रं प्रततम्। नेत्याह। अयमपि पाशुकानामनुयाजानामुत्कर्षः।

---

न च सवनीयानां मैत्रावरुणोऽस्ति[1] ॥ ३१ ॥

पशुमन्ति त्रीणि सवनानि कर्तव्यानीति[2]। तत्रेदं[3] वचनं 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने, इति'। एवं[4] पशोर्विप्रकर्षः। प्रातःसवनादारभ्याऽऽतृतीयसवनाद्ध्रियते पशुः। पुरोडाशेषु 'अनुसवनं सवनीया निरुप्यन्ते' इति। माध्यंदिने ये पुरोडाशास्ते तस्मिन्नेव प्रक्रम्यन्ते, परिसमाप्यन्ते च। प्रातःसवने प्रक्रमस्याविधानात्। तार्तीयसवनिकानाम्[5]प्ययमेव न्यायः। तस्माद्येषां[6] माध्यंदिनतृतीयसवनयोः प्रारम्भपरिसमाप्ती तेषां तु पशुना सह चिन्तैवं[7] नास्ति प्रसङ्गं प्रति। तेषां पशुरेव तन्त्री।

येऽपि प्रातःसवने सवनीयास्तेऽपि नैव तन्त्रिणः। कथम्। तेऽपि हि प्रातःसवन एव प्रक्रम्यन्ते, परिसमाप्यन्ते। न पशुवद्दीर्घकालाः। वचनाभावात्। दीर्घकाल-स्तन्त्री भवति। पशुश्च दीर्घकालः। तस्मात्स एव तन्त्री। यदि[8] चैषां दीर्घकालता

---

१ अस्तीति—अतो वैगुण्यपरिहाराय पशुस्तन्त्री, पुरोडाशाः प्रसङ्गिन इति शेषः। २ कर्त-व्यानीति—सवनीय इति समाख्यया सवनत्रयार्थत्वावगमादिति हेतुपूरणम्। ३ कथमेकस्यैव पशुयागस्य सवनत्रयसंबन्ध इति चेत्तत्रेदं विभागवचनमाह—तत्रेदमित्यादिना। ४ एवं पशोर्विप्रकर्षे आतृतीयसवनाद्ध्रियते—घ. मु.। ५ तृतीयसवनीयानां—घ. मु.। ६ येषां तयोः प्रारम्भ—छ. ज.। ७ चिन्ताऽपि—घ. मु.। ८ ननु 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति वचनेन सवनीयपुरो-डाशसंबन्धिनामेवानुयाजानामुत्कर्षविधिर्भवतु। तथा च तेषां दीर्घकालता सिध्यतीति शङ्कामनूद्य दूषयति—यदि चेत्यादिना।

कथं ज्ञायते। सोमान्ते स्वरोः प्रतिपत्तिर्दृश्यते, संस्थिते यज्ञे प्रस्तरं प्रास्यति सस्वरुम्, अयज्ञवेशसायेति। सा पश्वनुयाजैरुत्कृष्टस्य युज्यते, न पौरोडाशिकैः। तस्योत्कर्षो न प्राप्नोति। प्रासङ्गिकं च नोत्कर्षेदसंयोगादिति। तेषां हि हविःप्रचारादूर्ध्वमवसरः। तद्देशश्चोत्कर्षवादः। प्रातःसवनीयानां तु येऽनुयाजा न ते तद्देशाः। अतो न तेषामुत्कर्षः। तस्मात्पाशुकं तन्त्रम्। अथ वचनमिदं कस्मान्न भवति। परिहृतमेतत्, द्विकरं वाक्यं स्यात्, प्रतिपत्तिविशेषं कालं च विदधत्। तस्मात्पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते, न विकल्पत इति ॥ ३२ ॥

( प्रकृतिविकृत्योः समानतन्त्रत्वे वैकृताङ्गेन प्रकृतेः प्रसङ्गित्वाधिकरणम् ॥ १३ ॥ )

## [ १३ ] अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥ सि०

यदा प्रकृतिर्विकृत्या समानतन्त्रा, तदा किं प्राकृतं तन्त्रं कर्तव्यम्, उत वैकृतम्। ननु नैव प्रकृतिर्विकृत्या समानतन्त्राऽस्ति। समानतन्त्रा चेदित्येवं कृत्वा चिन्तेयम्। किं प्राप्तम्। यदि पूर्वं प्रकृतिः प्रयुज्यते तत्प्राकृतम्। अथ विकृतिस्ततो वैकृतम्। किं पुनरत्र युक्तम्। प्रकृतिरिति। नित्या प्रकृतिः, आगन्तुर्विकृतिरिति। कामे वा निमित्ते वोत्पन्न आगच्छति। पूर्वावसायिनश्च बलीयांसो जघन्यावसायिभ्यः। तस्मात्प्रकृतिः पूर्वं प्रयुज्यते। तस्य तन्त्रं कर्तव्यम्। प्राप्तकालत्वात्। तस्मात्प्राकृतं तन्त्रं कर्तव्यमित्येवं प्राप्तम्।

---

विधीयेत, अनुयाजास्तृतीये सवने कर्तव्या इति[३] विधातव्यं स्यात्। ते चाऽऽग्निमारुतादूर्ध्वं कर्तव्याः, नानियमेनेति[४] वाक्यं भिद्येत। पशोः पुनस्तन्त्रित्वे 'अङ्गैस्तृतीयसवने' इत्यङ्गप्रचारोत्कर्षादनुयाजा उत्कृष्यन्ते। तेषामनियतकाले प्राप्ते विशेषमात्रं विधीयते 'आग्निमारुतादूर्ध्वम्' इति[५] ॥ ३२ ॥

---

१ ( अ० ५ पा० १ अ० १५ सू० २८ )। २ तत्—तदा। ३ इतीति—इत्यपीत्यर्थः। ४ इति वाक्यं भिद्येतेति—इत्यपि विधातव्यं स्यात्। तथा च गौरवलक्षणो वाक्यभेद इत्यर्थः। ५ इतीति—तथा च लाघवमपेक्षितविधानं च संभवतीति पाशुकानामेवानुयाजानां तेनोत्कर्ष इत्याशयः।

एवं प्राप्ते, ब्रूमः। अपूर्वं च वैकृतं तन्त्रं प्रकृतौ प्रसज्यते, समानतन्त्रा चेत्। अनित्यत्वाद्विकृतेः। अनित्या विकृतिः कामे वोत्पन्ने निमित्ते वाऽसावागच्छति। नैमित्तिकी चिकीर्षा नित्यां चिकीर्षां बाधते। सत्यां हि नित्यायां सा भवति। अतस्तामबाधमाना नैवोत्पद्यते। यदि न बाध्येत, अनर्थकं स्याद्वैकृतं विधानम्। यस्य चिकीर्षा प्रत्युपस्थिता तस्य पूर्वं प्रयोगः। तस्माद्विकृतेः पूर्वं क्रिया। यस्य च पूर्वं क्रिया तत्तन्त्रं पूर्वं यथा कर्तव्यं तत्पूर्वपक्ष उक्तम्। तस्माद्वैकृतं तन्त्रं प्रकृतौ प्रसज्यत इति ॥ ३३ ॥

( आग्रयणे जघन्यद्यावापृथिव्यानुरोधेन मुख्यस्यैन्द्राग्नादेरपि विरोधाभावे प्रसूनमयबर्हिर्नियमाधिकरणम् ॥ १४ ॥ )

## [ १४ ] अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवद्‌मुख्येऽपि ॥ ३४ ॥ सि०

आग्रयणे द्यावापृथिव्य एककपालः। स वैश्वदेविकैककपालप्रकृतिः। तस्य धर्मः प्रसूनं बर्हिः। इतरेषां प्रसूनमप्रसूनं वा। तत्र किमनियमः, उत प्रसूनमेवेति विचारः। आग्रयणे त्वैन्द्राग्नस्य मुख्यत्वादनियमे प्राप्ते, उच्यते।

साधारण एतस्मिन्, दार्शपौर्णमासिकैन्द्राग्नादीनां योऽयमधिको गुणो द्यावापृथिवीयस्य वैशेषिकः, सोऽमुख्येऽपि सति द्यावापृथिवीये नियम्येत। अविरोधात्। कांस्यभोजिवत्। तद्यथा शिष्यस्य कांस्यपात्रभोजित्वनियमः, उपाध्यायस्य न नियमः। यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते, अमुख्यस्यापि शिष्यस्य धर्मो नियम्येत, मा भूद्धर्मलोप इति। एवमिहापि न स्यादनियमः ॥ ३४ ॥

( आग्रयणे, ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रानियमाभावाधिकरणम् ॥ १५ ॥ )

## [ १५ ] तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथापाशुक सूक्तवाकेन ॥ ३५ ॥ पू०

[ ३३ ॥ ३४ ॥

१ प्रकृत्यै—क.। प्रकृतः—मु.। २ द्यावापृथिवीयः—क. ख. मु.। ३ दार्शपौर्णमासिके, आग्नेयैन्द्राग्नादीनां—ग. मु.।

तस्य प्रसूनस्य प्रवृत्त्या वैश्वदेविकं तन्त्रं नियम्यते । यथा पाशुकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतम् ॥ ३५ ॥

न वाऽविरोधात् ॥ ३६ ॥ सि०

न वा नियम्यते । कुतः । अविरोधात् । अविरुद्धोऽयं धर्म इतरेषामपि हविषाम् । तेन न वैशेषिकः । अवैशेषिकत्वान्न ततोऽन्यतरन्नियन्तुं शक्नोति । वैशेषिकस्तु सूक्तवाकः । तस्मात्सोऽन्यतरन्नियन्तुमुत्सहते ॥ ३६ ॥

किंच—

अशास्त्रलक्षणाच्च ॥ ३७ ॥

न च शास्त्रविहिताः प्रसूनाः । किं तर्हि । चोदकप्राप्ताः । किमतः । यदि शास्त्रविहिता भवेयुः, ततस्तेन प्रकृतिलिङ्गेन वैश्वदेविकं तन्त्रं नियम्येत । अथवा द्यावापृथिवीयधर्मत्वात्प्राप्तानामेव प्रसूनानां पुनर्वचनमानर्थक्यपरिहाराय लक्षणया वैश्वदेविकस्य तन्त्रस्य विधानं विज्ञायते । प्रसूनादि तत्र भवतीति न तच्छास्त्रलक्षणम् । तस्मान्नास्ति तन्त्रस्य नियम इति ॥ ३७ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य द्वितीयः पादः ॥

---

३५ ॥ ३६ ॥ ३७ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां द्वादशाध्यायस्य द्वितीयः पादः ॥

---

१ पूर्व—ग. पु. । २ प्रसूनादि तन्त्रं—

अथ द्वादशाध्यायस्य तृतीयः पादः।

( अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम् ॥ १ ॥ )

[ १ ] विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ पू०

अस्त्यष्टरात्रोऽहीनः। तस्य विश्वजिदभिजितावग्निष्टोमावभित उभयतो ज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेतेति। विश्वजित्येकाहे वत्सत्वक् परिधानार्थमाम्नाता, अवभृथादुदेत्य वत्सत्वचं परिधत्त इति। ज्योतिष्टोमेऽहतं वासः। अष्टरात्र उभयं प्राप्यते। तयोः परिधानयोरेकार्थत्वाद्विकल्पे प्राप्ते, उच्यते। वत्सत्वक् स्यान्न विकल्पः। नामधेयेन वत्सत्वक् प्राप्यते। चोदकेनाहतम्। चोदकाच्च नामधेयशब्दो बलवत्तर इत्युक्तम्। न वा क्रत्वभिधानादधिकानामशब्दत्वमिति। यदि नामधेयतः प्राप्तिर्न स्यात्ततो भूयस्त्वेन ज्योतिष्टोमप्रकृतीनामह्नामहतं स्यात्। अस्ति त्वसौ। तस्मान्नाहतं भवति। ननु, अभितो ज्योतिरिति ज्योतिष्टोमिकधर्मग्राहीण्येतानि नामधेयानि सन्ति। तथाऽपि मुख्यत्वाद्विश्वजित एव बलवत्त्वम् ॥ १ ॥

अविरोधो वा, उपरिवासो हि वत्सत्वक् ॥ २ ॥ सि०

न वा नियमो वत्सत्वगेवेति। किं तर्हि। समुच्चयः। समुच्चये सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुगृह्यते। ननु नामधेयस्य बलवत्त्वादहतं बाध्यते। विरोधे सति बाध्येत। अविरोधश्चानयोः। कथम्। उपरिवाससः कार्ये वत्सत्वग्भविष्यति। वासोद्वयं पुरुषस्याऽऽचारतः प्राप्यते। नन्पूरिवाससि, परिधत्त इति न भवति। नैतदेवम्। उपरिवाससयपि भवति। यथा, कंबलं परिधत्ते, रौरवं परिधत्त इति। तस्मात्समुच्चयः ॥ २ ॥

( अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गाधिकरणम् ॥ २ ॥ )

[२] अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥३॥ पू०

अग्नौ श्रूयते, अग्नीषोमीयस्य पुरोडाशमनुदेवसुवां हवींषि निर्वप-

---

[ ॥ १ ॥ २ ॥

---

१ ( अ० ५ पा० ४ अ० २ सू० १५ )। २ स्यात्त्विवष्टकृद्दर्शनाच्च-मु.।

सीति । अनुबन्ध्यायामपि देविकाहवींषि । तत्र भूयस्त्वेन तन्त्रं नियम्यते । अनुनिर्वाप्याणां बहुत्वात् । तत्तन्त्रं पशुपुरोडाशे प्रसज्येत । किंच यत्स्विष्टकृच्छब्दकं स्विष्टकृतो वचनं दृश्यते पशुपुरोडाशस्य देविकाहविषां च, अग्नये स्विष्टकृते समवद्यतीति, तदनुनिर्वाप्याणां तन्त्र उपपद्यते । यदा तु पशुपुरोडाशतन्त्रं तदाऽस्विष्टकृच्छब्दकं स्यात् । तस्मादनिरुक्तं स्यात् ॥ ३ ॥

आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषा-
दितरस्य च मुख्यत्वात् ॥ ४ ॥ सि०

आगन्तवोऽनुनिर्वाप्याः। श्रुतिविशेषात् । एवं हि श्रूयते, पशुपुरोडाशमनुनिर्वपतीति । एवं श्रुते पूर्वं पशुपुरोडाशः, पश्चादनुनिर्वाप्या भवन्तीति । स मुख्य इतरे तु जघन्याः । अतस्तेषामागन्तुकत्वादितरस्य च मुख्यत्वात्पशुपुरोडाशः स्वधर्मा स्यात् ॥ ४ ॥

स्वस्थानत्वाच्च ॥ ५ ॥

अपि च पशुपुरोडाशस्थानं यद्वपाप्रचारात्परतः, अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं, प्रधानदेशत्वात्तेषाम् । यद्यनुनिर्वाप्याणां तन्त्रं स्यात्, ततस्तस्मिन् स्थाने तदङ्गानि क्रियेरन् । पशुपुरोडाशाङ्गान्यन्यस्थानानि भवेयुः । तेषां स्वस्थानत्वाय पशुपुरोडाशस्य तन्त्रं कर्तव्यम् ॥ ५ ॥

स्विष्टकृच्छ्रवणान्नेति चेत् ॥ ६ ॥

इति यदुक्तं तत्परिहर्तव्यम् ॥ ६ ॥

अत्रोच्यते—

विकारः पवमानवत् ॥ ७ ॥

एवं च पशुपुरोडाशस्य तन्त्रेणानिरुक्ते स्विष्टकृति प्राप्ते विकारो वचनाद्भविष्यति, अग्नये विष्टकृते समवद्यति, सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । यथा, अग्नये पवमानाय निर्वपतीति वचनात्पवमानशब्दको निर्वापः क्रियते, एवमिहापि ॥ ७ ॥

---

३ । ४ ॥ ५ ॥ ६ ॥ ७ ॥

---

१ तस्मादनिरुक्तत्वादागन्तुकत्वाद्वा तथा॥-मु. । २ स्वस्थानाय-ख. मु. । ३ तन्त्रं स्यात्कर्त-ख. मु. ।

## अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥

अविकारः। अस्विष्टकृच्छब्दकं वचनं कर्तव्यं, प्रकृतिवदतिदेशात्। यत्तु वचनादिति। नात्र विकारो विधीयते। किं तर्हि। समवदानं देविकाहविषां, अग्नये स्विष्टकृते समवद्यतीति। तत्र विकारेऽन्यस्मिन् विधीयमाने वाक्यं भिद्यते। कथं तर्हि स्विष्टकृद्वचनम्। चोदनां प्रति भावाच्च। दर्शपूर्णमासयोर्याऽस्ति स्विष्टकृच्चोदना, सा स्विष्टकृच्छब्दिका। तस्मात्येतद्वचनं, तदुपलक्षणाय। तस्मादग्नये योऽसौ शेषभागिति यावदुक्तं स्यात्तावत्, अग्नये स्विष्टकृत इति। यथा, शरमयं बर्हिर्भवतीति, नवनीतमाज्यमिति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन, एवमिहापि स्विष्टकृच्छब्देन प्राकृती लक्षणया देवताऽनूद्यते ॥ ८ ॥

( एकस्मिन्कर्मणि भिन्नकार्याणां गुणानां समुच्चयाधिकरणम् ॥ ३ ॥ )

## [३] एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥ सि०

य एकस्मिन् कर्मणि गुणा बहवः शिष्यन्ते, तेषां सर्वेषां क्रिया स्यात्, समुच्चयः। एवं सर्वेषां शासनमर्थवद्भविष्यति। सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुगृह्यते। यथाऽऽघारे, ऋजुमाघारयति, सन्ततमाघारयति, प्राञ्चमाघारयतीति च ॥ ९ ॥

( एककार्याणां विकल्पाधिकरणम् ॥ ४ ॥ )

## [ ४ ] एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ १० ॥ सि०

ये त्वेकार्थाः, एककार्यार्थास्ते विकल्पेरन्[1]। यथा व्रीहियवौ, यथा खादिरादीनि यूपद्रव्याणि, बृहद्रथंतरे च। ते विकल्पेरन्। कस्मात्। समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य। एकेन कार्ये कृते यदि द्वितीय उपादीयते, आवृत्तिः प्रधानस्य भवेत्। सा चायुक्ता। किं कारणम्। प्रधानं हि फलाय वा क्रियते, फलवदुपकाराय वा, नाङ्गाय। सकृत्कृतेन च कृतं कार्यम्। तस्य निरर्थिकाऽऽवृत्तिः ॥ १० ॥

---

८ ॥ ९ ॥ १० ॥

---

[1] विकल्प्येरन्—मु.।

अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥

इति चेत्पश्यसि, अनर्थकोऽभ्यास इति। नानर्थकः। गुणान्तरशासनस्यार्थवत्त्वायाभ्यस्येत ॥ ११ ॥

नाश्रुतित्वात्[1] ॥ १२ ॥

नैतद्युक्तम्। कुतः। अश्रुतित्वात्। अश्रुतोऽभ्यासः। तस्य प्रमाणं नास्ति, केन करिष्यति। गुणान्तरशासनस्यार्थवत्त्वं वक्ष्यति, कालान्तरेऽर्थवत्त्वं स्यादिति ॥ १२ ॥

सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥

अभ्यासशास्त्रं क्वचिद्भवति, संसव उभे कुर्यात्, गोसव उभे कुर्यात्। अपचितावप्येकाहे श्रूयते, उभे बृहद्रथंतरे कुर्यादिति। तत्समुच्चये सति न स्यात्। तस्मादपि विकल्पः ॥ १३ ॥

विकल्पवच्च दर्शयति ॥ १४ ॥

विकल्प इव दर्शनं भवति, बैल्वो वा खादिरो वा पालाशो वाऽन्येषां यज्ञक्रतूनां यूपा भवन्ति, अथैतस्य खादिर एव कार्य इति वाजपेये खादिरं नियच्छन्नन्यत्र विकल्पमनुवदति। तस्मादपि विकल्पः ॥ १४ ॥

कालान्तरेऽर्थवत्त्वं स्यात्[2] ॥ १५ ॥

यच्च गुणान्तरशासनस्याऽऽनर्थक्यमिति[3]। नाऽऽनर्थक्यम्। कालान्तरे—प्रयोगान्तरेऽर्थवत्त्वं तस्यापि भविष्यति। तस्मिन्नर्थवति नाभ्यासस्य प्रमाणम्। ननु विकल्पस्यापि नास्ति प्रमाणम्। न। विकल्पे न किंचिदश्रुतं क्रियते। व्रीहिभिर्यजेतेति श्रुतं, तैरिज्यते। यवैर्यजेतेत्यपि। तैरपीज्यत एव[4]। एकस्मिन् प्रयोगे कार्याभावान्नोभाभ्यामिज्यते। अथ कस्मान्न मिश्रीयते। नैतद्युक्तम्। एकैकस्य निरपेक्षस्य साधकत्वं श्रुतम्। तन्मिश्रीभावे बाध्येत। तस्माद्विकल्पः ॥ १५ ॥

---

११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

---

१ नाश्रुतत्वात्—मु.। २ (अ० १२ पा० ३ अ० ४ सू० १५)। ३ आनर्थक्यमिति। कालान्तरे—ग. मु.। ४ यजेतेतीति श्रुतैरिज्यते। यवैर्यजेत्यपि श्रुतम्। तैरपीज्यते—ग. मु.।

( दोषनिर्घातार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् ॥ ५ ॥ )

## [ ५ ] प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोग-स्तस्मात्सर्वस्य निर्घातः ॥ १६ ॥ सि०

प्रायश्चित्तानि द्विःप्रकाराणि । कानिचिद्वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि । कानिचिन्निमित्ते कर्माङ्गानि । तत्र समाधानार्थानि यथा, यद्यृक्तो यज्ञ आर्तिमियात् , भूः स्वाहेति गार्हपत्ये जुहुयात् , अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः स्वः स्वाहे-त्याहवनीये । यद्यविज्ञातो भूर्भुवः स्वः स्वाहेत्याहवनीय एवेति । आर्ति-मियात् , विनाशमियादित्यर्थः । कः पुनर्यज्ञस्य विनाशः । शिष्टस्या-क्रिया, प्रतिषिद्धसेवनं च । कथं पुनर्ज्ञायते, विनष्टस्य समाधानार्थं तत्प्रायश्चित्तमिति । वाक्यसंयोगात् । यद्यार्तिमियादिदं कुर्यात् । यदि तस्मिन् कृतेऽपि तद्विनष्टमेव, कोऽर्थस्तेन कृतेन । यस्त्वत्र ब्रूते, आर्त्तौ निमित्ते कर्माङ्गं प्रायश्चित्तमिति । स च वक्तव्यः । अङ्गं नाम तत्, यत्प्रधानं फलवत्करोति । प्रधानं च विनाशादफलत्वमापन्नम् । यदि तदनेन फलवत्क्रियते तत एतदङ्गम् । तच्चेदफलं प्रसक्तमेतेन फलव-त्क्रियते, हन्त तर्हि जातस्य विनष्टस्य समाधानार्थम् । अथ न क्रियते न तर्हि कर्माङ्गम् । तत्र यदुच्यते निमित्ते कर्माङ्गमिति तदेव नास्ति ।

अपि च तत्र तत्र नष्टसमाधानमेव वाक्यशेषे श्रूयते, अग्निर्वै देवानां पथिकृत्स्वेन भागधेयेनोपासीरन् । स एवैनं पन्थानमपि नयति, स एनं व्रतमालम्भयतीति । तस्मादेते दोषनिर्घातार्थाः । तेषु विकल्पः स्यात् । कुतः । ऐकार्थ्यात् । कथमैकार्थ्यमेतेषाम् । निष्पन्नेन दोषेण केवलस्य तस्य तस्याभिसंयोगो, यद्यृक्तो यज्ञ आर्तिमियात्, भूः स्वा-हेति जुहुयादिति । तस्मात्सर्वस्य दोषस्यैकेन निर्घातः । एकेन चेन्नि-र्हतो दोषो द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति । एवं स्मार्तेष्वपि द्रष्टव्यम् ॥ १६ ॥

---

१६ ॥

( अदोषनिर्घातार्थानां प्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ६ ॥ )

[६] समुच्चयस्त्वदोषार्थेषु[1] ॥ १७ ॥ सि०

यानि तु न दोषनिर्घातार्थानि, तेषु समुच्चयः। कानि पुनस्तानि। यानि श्रुतस्याक्रियया प्रतिषिद्धसेवनानि[2], तान्युच्यन्ते। यथा, यस्याहुतमग्निहोत्रं सूर्योऽभ्युदियान्मैत्रं चरुं निर्वपेत्, सौर्यमेककपालम्। यस्याहुतमग्निहोत्रं सूर्योऽभ्युदियात्, अग्निं समाधाय वाचं यत्वा दंपती सर्वाहमुपासीयातामिति। तत्र दोषो न दृश्यते। दोषस्याभावान्निर्घातार्थता नास्ति। केवलमभ्युदये निमित्ते कर्म विधीयते। तन्नैमित्तिकं कर्मणः प्रकरण उत्पन्नत्वात्कर्माङ्गं विज्ञायते। यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन गृह्यन्ते। तेषां समुच्चयः ॥ १७ ॥

( अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगाधिकरणम् ॥ ७ ॥ )

[७] मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥ पू०

कर्मणि प्रयुज्यमानानां मन्त्राणां स्वधर्मेण प्रयोगः स्यात्, य एषां ग्रहणकाले धर्माः—पर्वणि नाध्येयं, वाते नाध्येयं, स्तनयित्नौ नाध्येयमित्यादयः। कस्मात्। धर्मस्य तन्निमित्तत्वात्। धर्मोऽयं मन्त्रप्रयोगनिमित्तः। अयमपि च मन्त्रप्रयोगः। तस्मादत्रापि तेन भवितव्यम् ॥१८॥

विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य ॥ १९ ॥ सि०

सर्वकालं प्रयोगः स्यात्[3], अध्यायेऽनध्यायेऽपि। कुतः। विद्यार्थो यः प्रयोगः, तं प्रत्येतद्धर्मविधानम्। स एष ग्रहणस्य धर्मः। तस्माद्ग्रहणं गुणवत्करोति। कः पुनर्ग्रहणस्य गुणः। अविघ्नेन निर्वृत्तिः। कथं पुनर्ज्ञायते ग्रहणार्थोऽयं धर्म इति। ग्रहणकाले श्रूयते न कर्मकाले। मा भूत्कर्मधर्मो, मन्त्रधर्मो भविष्यति। मन्त्रधर्मश्च सन् यत्र मन्त्रस्तत्र प्राप्नोति। उच्यते। न धर्मो मन्त्रेषु विधीयते। किं तर्हि।

---

१७ ॥ १८ ॥

---

१ 'समुच्चयस्त्वदोषनिर्घातार्थेषु'—इति न्यायमालायां पाठः। २ प्रतिषिद्धानि वा तानि—मु.। ३ स्यादनध्यायेऽपि—क.।

ग्रहणे । ग्रहणमेवमभिनिर्वर्त्यते, नैवं मन्त्रो भवति । तस्माद्ग्रहणधर्मः । न च कर्मणि ग्रहणार्थः प्रयोगः । किं तर्हि । कर्मार्थः । तस्मात्तत्र धर्मस्याप्राप्तिः । अपि च कर्म पर्वणि । पर्वणि चाध्ययनस्य प्रतिषेधः । यद्यमन्त्रकं कर्म क्रियते, मेयासानर्थक्यम् । अथापर्वणि तथाऽपि स एव दोषः । श्रुत्यनुरोधेन प्रयोगः प्राप्नोति । स्मृत्यनुरोधेनाप्रयोगः । श्रुतिश्च स्मृतितो बलीयसी । तस्मान्नाऽऽद्दत्यः प्रयोगनियमः ॥ १९ ॥

( जपादिमन्त्रेषु मन्त्रसमाम्नायसिद्धस्वरनियमाधिकरणम् ॥ ८ ॥ )

[८] भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात् ॥२०॥ पू०

भाषिकेण स्वरेण केचिन्मन्त्रा ब्राह्मण उपदिष्टाः । मन्त्रसमाम्नाये त्रैस्वर्येण पठिताः । यथा, इमामगृभ्णन्नित्यश्वमेधे । कः पुनर्भाषिकः स्वरः । उच्यते—

छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ इति ।

तेषु मन्त्रेषु प्रावचनस्य स्वरस्य प्रतिषेधः स्यात्—निवृत्तिः । कस्मात् । स्वरान्तरोपदेशात् । ऐरवत् । यथा, इरापदस्योपदेशात्कर्मकाले गिरापदस्य निवृत्तिः । कथं पुनर्ज्ञायते स्वरस्यायमुपदेशो न मन्त्रस्येति । मन्त्रो नोपदेष्टव्यः । रूपादेव प्राप्नोति । स्वरस्त्वनुपदिष्टो न प्राप्नोति । तस्मात्तस्योपदेशः ॥ २० ॥

मन्त्रोपदेशो [redacted] न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ २१ ॥ सि०

मन्त्रस्य वाऽयमुपदेशो न स्वरस्येति । कथं ज्ञायते । मन्त्रोपदेशसरूपोऽयं शब्दः । किमस्य तत्सारूप्यम् । इत्यश्वाभिधानीमादत्त इत्याह ।

१९ ॥ ]

सामर्थ्येन मन्त्रो यच्छक्नोत्यभिधातुं तत्र न विधीयते, प्राप्तत्वादेव । किंतु भाषिकस्वरस्त्वप्राप्तः, स विधीयते ब्राह्मणेन । अथवा स्वरविशिष्ट एव मन्त्रो विधीयते ॥ २० ॥

ये तावन्मन्त्रा लिङ्गेन विनियुज्यन्ते, ते यादृशा एव निर्ज्ञातास्तादृशा एव

मन्त्रेण चासावादीयते । न भाषिकेण स्वरेण । मन्त्रोपादानं प्रत्याययति । नेतरस्य । कस्मात्तर्ह्युच्चार्यते । प्रायापत्तेर्भाषिकश्रुतिः । भाषास्वरो ब्राह्मणे प्रवृत्तः । तन्मध्ये यदि प्रवचनेन पठ्यते, भाषिकस्वरसंतानो विच्छिद्येत । तत्परिहारार्थं भाषिकेणोपदेशः । यथा गायना गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति तान्यपि तेनैव गीतिस्वरेणैवोच्चारयन्ति, मा भूत्स्वरसंतानस्य विच्छेद इति । तस्माद्भाषिकस्वरोपदेश इति ॥ २१ ॥

## विकारः कारणाग्रहणे ॥ २२ ॥

इरापदेन तु गिरापदस्य विकारो युक्तः । कारणाग्रहणात् । यथा भाषिकस्यानुपदेशो मन्त्रोपदेशेन कारणेनोक्तः, नैवमिरापदस्यानुपदेशे किंचित्कारणं गृह्यते । तस्मात्तस्योपदेशः । स कर्मकाले विधानात्समाम्नायेन प्राप्तं गिरापदं बाधते । तस्मात्तत्र विकारः ॥ २२ ॥

( ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरानियमाधिकरणम् ॥ ९ ॥ )

## [ ९ ] तन्न्यायत्वाददृष्टोऽप्येवम् ॥ २३ ॥ पू०

यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टस्तस्य तथैव प्रयोगः । यस्तु तत्र न दृष्टो, ब्राह्मणेन च भाषिकेणोपदिष्टः । यथा तं वै प्रोह्रैद्वानस्पत्योऽसीति । तत्र का प्रतिपत्तिः । उच्यते । तन्न्यायत्वाददृष्टोऽपि । योऽसौ न्याय उक्तः, मन्त्रोपदेशोऽयं तद्रूपत्वाच्छब्दस्येति, तेनैव न्यायेनादृष्टोऽपि मन्त्रोपदेश एव, न भाषिकोपदेशः । तस्मात्तस्यापि प्रावचनेनैव स्वरेण प्रयोगः ॥ २३ ॥

---

प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार[1] एव नास्ति । ये पुनर्लिङ्गेनाप्राप्ता वचनेन विधीयन्ते, तेषामप्राप्तत्वादेव मन्त्रविधानेनैव कृतार्थं वाक्यं न भूयः स्वरमपि विधत्ते । वाक्यभेदभयात् । न[2] चारुणाधिकरणन्यायोऽत्र[3] । स्वरान्तरस्य स्वाध्याये सिद्धस्य द्वितीयस्यादृष्टार्थताप्रसङ्गात् ॥ २१ ॥ [ २२ ॥ २३ ॥

---

१ व्यापार एव नास्तीति–लिङ्गविनियोज्यमन्त्रविषये ब्राह्मणपुनःश्रवणस्य क्वचिद्गुणार्थत्वात्, क्वचित्परिसंख्यार्थत्वात्, क्वचिदर्थवादार्थत्वान्मन्त्रविनियोग एव व्यापाराभावे न सुतरां मन्त्राङ्गभूतस्वरविनियोजकत्वं संभवतीति भावः । २ न वा–घ. पु. । ननु वाक्यभेदपरिहारार्थं स्वरमन्त्रोभयविशिष्टार्थप्रकाशनं ब्राह्मणेन विधीयताम् । पश्चाच्चारुणान्यायेन स्वरमन्त्रयोर्नियमसिद्धेर्न कोऽपि दोष इति शङ्कां परिहरति–न चेत्यादिना । ३ ( अ० ३ पा० १ अ० ६ ) ।

तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २४ ॥ सि०

तदुत्पत्तेर्वा--ब्राह्मणोत्पत्तेर्मन्त्रस्य, भाषिकेण प्रयोगः स्यात्। प्रवचनलक्षणत्वात्। प्रवचनं मन्त्राणां लक्षणं, यथा प्रोच्यन्ते तथाविधा विज्ञायन्ते। ते च भाषिक एवोत्पन्नाः। तेषामन्यथाविधत्वे प्रमाणं नास्ति। तस्माद्यथोत्पन्नास्तथाविधा एव प्रयोक्तव्याः।

मन्त्रोपदेशो वा न भाषिकस्य ॥ २१ ॥ इत्यस्यापरा व्याख्या। इमामगृभ्णन्निति नैतस्योपदेशः। किं तर्हि। अनेन प्रतीकेन लक्षणेनासौ यथोत्पन्नो लक्ष्यते। प्रावचनेन च स्वरेणोत्पन्नः। तस्मात्तद्विधानं, उपदेशः। यस्तु ब्राह्मणोत्पत्तिरेव मन्त्रः, तत्र लक्षणस्याभावान्न लक्षणा। अतस्तस्य यथाश्रुति प्रयोगः ॥ २४ ॥

( करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भाधिकरणम् ॥ १० ॥ )

[१०] मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ २५ ॥ सि०

ये पदार्थकरणा मन्त्राः—यथा, इषे त्वेति छिनत्ति, देवस्य त्वा सवितुः प्रसव इत्यादत्त इति। तेषां मन्त्रान्तेन कर्मादिसंनिपातः, यस्मिन् कर्मण्युपयुज्यते। किं कारणम्। सर्वस्य वचनार्थत्वात्। सर्वो मन्त्रः समस्तं वचनार्थं करोति। कः पुनर्मन्त्रस्य वचनार्थः। प्रयोगकाले पदार्थस्योपस्थानम्। मन्त्रेणोपस्थितः पदार्थः कर्तव्य इति विज्ञायते, तदर्थस्य मन्त्रस्याऽऽम्नानसामर्थ्याद्वचनाच्च। क्वचित्, इत्यादत्ते, निर्वपतीति मन्त्रान्ते च तस्योपस्थानम्। उपस्थितः पर्याप्तो यावन्न भ्रंश्यत इति। तस्मान्मन्त्रान्तेन कर्मादिसंनिपातः करणमन्त्रेषु ॥ २५ ॥

( वसोर्धारासंज्ञकेषु कर्मसु मन्त्रान्तेन कर्मादिसंनिपाताधिकरणम् ॥ ११ ॥ )

[११] संततवचनाद्धारायामादिसंयोगः ॥ २६ ॥ पू०

अग्नौ श्रूयते, संततां वसोर्धारां जुहोतीति। अत्रापि पूर्वोक्तेन न्यायेन तथैव प्राप्ते, उच्यते। धारायामादिसंयोगः। कर्मादिः मन्त्रादिश्च संनिपात्यः। कस्मात्। संततवचनात्। समित्येकीभावः। ततो-

---

२४ ॥ २९ ॥

---

१ कर्तव्यो वि—ग. मु.। २ संततं—क. ग. मु.।

तिर्विस्तारे । द्वयोर्यत्र सह तननं भवति, तत्र संपूर्वस्तनोतिर्वर्तते । इह कर्म च मन्त्रश्च संनिहितौ । तस्मात्तयोः सह तननमुच्यते । तच्चाऽऽद्योः संनिपाते भवति । तस्मादादिसंयोगः ॥ २६ ॥

## कर्मसंतानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २७ ॥ सि०

कर्मणां वा संतानोऽयम्, संततं जुहोति, इति हि होमस्य केवलस्य हि संतान उच्यते । नात्र मन्त्रसंकीर्तनमस्ति । ननु द्वयोः संयोगे संशब्दो भवति । एकश्च होमः । उच्यते । नैष दोषः । नानाकर्मत्वात् । बहून्येतानि कर्माणि । तेषामनुपरमेण क्रियासंतानो भवति, कर्मनानात्वं वचनात् । द्वादश द्वादशानि जुहोतीति । ननु द्रव्यसंख्यैषा । नेत्याह । नात्र द्रव्यसंकीर्तनमस्ति । होमोऽत्र संख्यया युज्यते । द्वादश द्वादशानि जुहोतीति, एवंसंख्यान् होमान् करोतीति । किंच, इतरस्य च मन्त्रकर्मणोः संतानस्याशक्यत्वात् । क्षणिकं कर्म, न मन्त्रेण सह तानितुं शक्यते । तस्मादत्रापि कर्मादिसंनिपात एव ॥ २७ ॥

( आघारे मन्त्रान्तेन कर्मादिसंनिपाताधिकरणम् ॥ १२ ॥ )

## [ १२ ] आघारे च दीर्घधारत्वात् ॥ २८ ॥ सि०

दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते, संततमाघारयतीति । तत्रापि क्षणिकत्वान्मन्त्रेण कर्मणः सह तननं न घटते । एकत्वात्कर्मसंतानो नास्ति । तस्माद्द्रव्याभिप्रायः संतानशब्दः । संततं क्षारयतीति दीर्घधारया जुहोतीति दीर्घधारत्वात्संततशब्दः ॥ २८ ॥

( एकार्थानां करणमन्त्राणां विकल्पाधिकरणम् ॥ १३ ॥ )

## [१३] मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥ सि०

ये मन्त्रा एककार्याः, यथा पुरोडाशविभागार्थाः, पूषा वां विभजतु, भगो वां विभजतु, अर्यमा वां विभजत्वित्येवमादयः । तेषां विकल्पः । कुतः । संनिपातित्वात् । करणा एते मन्त्राः । करणानां च मन्त्रान्तेन

२६ ॥ २७ ॥ २८ ॥

१ संततं—क. ग. । २ दीर्घपरत्वात्—ग. मु. ।

कर्मादिसंनिपात उक्तः, मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यादिति । न च विकल्पमन्तरेण सर्वेषामन्तैः कर्मादिसंनिपातः कर्तुं शक्यः । किं वचनमेतत् । न हि । न्यायः, सर्वस्य वचनार्थत्वादिति । यद्येवं समुच्चयेऽपि स मन्त्रः सर्व उच्यते, तत्रापि वचनार्थः सिध्यति । एकेन तु कृते कर्मणि द्वितीयस्य प्रयोगोऽनर्थकः । तदेतदेककार्यत्वे भवति । तस्मादेकार्थत्वाद्विकल्पः । तच्च पूर्वमेवोक्तम् । एकार्थास्तु विकल्पेरन्निति । ततस्तत्प्राप्तिसूत्रमिदमुत्तरचिन्तार्थम् ॥ २९ ॥

( संख्यायुक्तवचनविहितानां मन्त्राणां समुच्चयाधिकरणम् ॥ १४ ॥ )

[१४] संख्याविहितेषु समुच्चयोऽसंनिपातित्वात् ॥ ३० ॥ सि०

संख्यया ये विधीयन्ते मन्त्राः, यथाऽग्नौ, चतुर्भिरादत्ते, द्वाभ्यां खनति, षड्भिराहरतीति । तेषु समुच्चयः स्यात् । किं कारणम् । संख्या शब्देनोच्यते । साऽङ्गीकर्तव्या । न च समुच्चयादृते सा शक्याऽङ्गीकर्तुम् । आह । समुच्चयेऽपि यः कर्मणा संनिपतितः, तेन तत्कर्म कृतं भवति । ये व्यवहिताः, न तैः । असंनिपातात् । तथा सति न संख्या कर्मण्यङ्गीकृता भवति । नैष दोषः । अर्थाभिधानेन मन्त्रोऽङ्गी भवति । सर्वे चैते तमर्थमभिदधति । एवमप्यनन्तरेण कर्म क्रियते । इतरे जपवददृष्टार्था भवन्ति । उच्यते । नादृष्टार्था भविष्यन्ति । सर्वे तदेव कर्मासकृदभिधास्यन्ति । भवति हि कारणार्थमन्त्रस्यासकृत्प्रयोगः । यथा कुरु कुरु, करवाणीति । तत्र यथा, अभिधानार्थस्य मन्त्रस्याऽऽम्नानसामर्थ्यादभिहितमभ्युदयकरं भवति, एवं—चतुर्भिरादत्त इति वचनाच्चतुरभिहितं कृतमभ्युदयकारि भवतीति । तस्मात्समुच्चयेऽपि नादृष्टार्थता । समुच्चयश्च सिद्धः ॥ ३० ॥

( ब्राह्मणविनियुक्तानां मन्त्राणां विकल्पाधिकरणम् ॥ १५ ॥ )

[१५] ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात् ॥ ३१ ॥ पू०

---

२९ ॥ ३० ॥

---

१ ( अ० १२ पा० ३ अ० ८ सू० २५ ) । २ द्वितीयप्रयोगः—क. । ३ ( अ० १२ पा० ३ अ० ४ सू० १० ) । ४ करणार्थस्य म—ग. मु. ।

ब्राह्मणे च ये मन्त्रा विधीयन्ते, यथा—उरुप्रथस्वेति पुरोडाशं प्रथयति, उरु प्रथा उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयतीति च । तेषु च समुच्चयः स्यात् । सर्वेषामुपदिष्टत्वात् । यो न प्रयुज्यते तस्योपदेशो बाध्यते । सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । संख्याविहितवच्च सर्वेषामसकृदभिधानेनार्थवत्ता भविष्यति । तस्मात्समुच्चयः ॥ ३१ ॥

## याज्यावषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् ॥ ३२ ॥

समुच्चय एव याज्यावषट्कारयोः समुच्चयदर्शनं भवति, याज्याया अधि वषट्करोतीति । समुच्चये हि पौर्वापर्यं भवति । तस्मादपि समुच्चयः ॥ ३२ ॥

## विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३३ ॥ सि०

विकल्पो वैषां मन्त्राणां, न समुच्चयः । कुतः । उक्तो न्यायः । मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यादिति । ननु संख्याविहितवदेकार्था अपि सन्तोऽसकृदभिधानेन समुच्चेष्यन्ते । नैतद्युक्तम् । कुतः । समुच्चयस्याश्रुतित्वात् । यथा तत्र संख्याश्रवणात्कृतकरमप्यसकृदभिधानमाश्रितं, नैवं समुच्चयश्रवणमस्ति । तस्माद्यथान्यायमेकार्थत्वाद्विकल्पः ॥ ३३ ॥

## गुणार्थत्वादुपदेशस्य ॥ ३४ ॥

यच्च सर्वेषामुपदेशोऽर्थवान् भविष्यतीति । अहेतुः सः । गुणार्थत्वादुपदेशस्य । नैवासौ मन्त्रप्राप्त्यर्थं उपदेशः । किं तर्हि । गुणार्थः । अर्थवादो गुणं विधास्यतीति । तदुक्तं—गुणार्थेन पुनःश्रुतिः, परिसंख्या, अर्थवादो वेति । यदि तर्हि नैवायं मन्त्रोपदेशः किमिदमुच्यते, सर्वे-

---

३१ ॥ ३२ ॥ ३३ ॥

---

१ समुच्चय एव याज्यावषट्कारयोः । समुच्चयोऽवगन्तव्यः । समुच्चयवद्दर्शनं भवति । याज्याया—ग. पु. । २ (अ० १२ पा० ३ अ० ११ सू० २९) । ३ यश्च—ग. पु. । ४ (अ० १ पा० २ अ० ४ सू० १३) । ५ (अ० १ पा० २ अ० ४ सू० ३४) । ६ (अ० १ पा० २ अ० ४ सू० ३५) ।

षामुपदिष्टत्वादिति । एवं तर्हि कृत्वाचिन्तेयम् । मन्त्रोपदेश इति कृत्वा चिन्त्यते । अथवा—उदाहरणान्तरं द्रष्टव्यम् ॥ ३४ ॥

वषट्कारे नानार्थत्वात्समुच्चयः ॥ ३५ ॥

वषट्कारः प्रदानार्थः, याज्या देवतोपलक्षणार्था । तयोर्नानार्थत्वात्समुच्चयः, न सर्वोपदेशात् ॥ ३५ ॥

( हौत्रमन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥ )

[ १६ ] हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥ पू०

हौत्रास्तु ये मन्त्राः, यूपोच्छ्रयणीया वा, उच्छ्रयस्व वनस्पते इति, यूपपरिव्याणार्था वा, युवा सुवासा इति । ते विकल्पेरन् । कुतः । एकार्थत्वात्। एकार्था एते, उच्छ्रयणस्य, परिव्याणस्य चाभिधायकाः। एकैकश्च तेषामितरानपेक्षस्तदभिदधाति । तस्माद्विकल्पः ॥ ३६ ॥

समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३७ ॥ सि०

समुच्चयो वा हौत्राणाम् । कुतः । क्रियमाणानुवादित्वात् । करणानां विकल्प उक्तः । न चैते करणाः । क्रियमाणानुवादिन एते । कः पुनरनयोर्विशेषः । करणाः करोमीत्येवं प्रत्ययं कुर्वन्ति । क्रियमाणानुवादिन एवं कर्तव्यमिति । कथं कृत्वा । उच्यते । अध्वर्योस्तावत्करोमीत्येतेन प्रत्ययेनार्थः । असति ह्येतस्मिन् क्रियैव न प्रवर्तते । एष च प्रत्ययः सति पूर्वस्मिन् प्रत्यये भवति । यो हि स्मरतीदं मया कर्तव्यमिति, स तत्करोति । क्रियमाणानुवादिनश्चाध्वर्युणा क्रियमाणमर्थमनुवदन्ति, अञ्जन्ति त्वामध्वरे देवयन्त इति । सोऽनुवादोऽलमध्वर्योः स्मृतिं कर्तुम्। अतस्तत्स्वरूपः। तेन च कर्मणाऽऽकाङ्क्षितत्वात्स्मरणार्था एते विज्ञायन्ते । स्मरणार्थस्य च मन्त्रस्याऽऽम्नानसामर्थ्यात्स्मारितं कृतमदृष्टार्थाय भवति । यथा प्रेषितं[1] कृतम् । ननु विधिशब्दादेव स्मृतिर्भवति । सत्यं, विधिशब्दादपि सामर्थ्याद्भवति । मन्त्रादपि भवति । मन्त्रस्याऽऽम्नानसामर्थ्यान्मन्त्रेण कर्तव्या । प्रततेषु च कर्मसु

---

२४ ॥ ३५ ॥ ३६ ॥

---

१ प्रोक्षितं—ग. । प्रसतं—मु. ।

स्मृतिसंतानेनार्थं इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्यैकस्मिन्नेव प्रयोगे संभव इति क्रियमाणानुवादित्वाद्धौत्राणां समुच्चयः ॥ ३७ ॥

समुच्चयं च दर्शयति ॥ ३८ ॥

त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह, ज्योतिष्मतीरनुब्रूयादिति । अनेकसंनिपाते चैतद्भवति प्रथमा, उत्तमेति । तस्मात्समुच्चयः ॥ ३८ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य तृतीयः पादः ॥

===

अथ द्वादशाध्यायस्य चतुर्थः पादः ॥

( जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयाधिकरणम् ॥ १ ॥ )

[ १ ] जपाश्चाकर्मयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥ सि०

जपाः—वैष्णवीमनूच्य वाग् यन्तव्या, सारस्वतीमनूच्य वाग्

---

३७ ॥ ३८ । ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां द्वादशाध्यायस्य तृतीयः पादः ॥

' वैष्णवीमनूच्य वाग्यन्तव्या ' एवमादीन्युदाहरणानि । एतेषां मन्त्राणां विकल्पः समुच्चयो वेति चिन्त्यते । पूर्वेण[1] न्यायेन विकल्पे प्राप्ते, उच्यते समुच्चय इति । कुतः । अन्यकार्यत्वात् । वैष्णव्यामृचि ये वर्णास्तेषामुच्चारणं कर्तव्यम्[2] । इदं हि जपशब्देनोच्यते । यः पुनस्तत्र पदैरुच्चार्यमाणैः स्वाभाविकोऽर्थप्रत्ययः, सोऽचोदितत्वादविवक्षित एव । अथवाऽयमर्थप्रत्ययः संयुक्तत्वाद्वर्णोच्चारणस्यैवाङ्गम् ।

---

१ पूर्वेण न्यायेनेति—' विकल्पो वा ' ( अ० १२ पा० ३ अ० १५ ) अत्रत्यन्यायेनेत्यर्थः ।
२ कर्तव्यमिति—अदृष्टार्थमिति शेषः । तथा चैकेनोच्चारणेन जायमानमदृष्टमपरेण जायत इत्यत्र प्रमाणाभावात्सर्वेषां समुच्चय इति भावः ।

यन्तव्या, बार्हस्पत्यमनूच्य वाग् यन्तव्येति । स्तुतयः—अग्निर्मूर्धा दिव इति । आशिषः—आयुर्दा अग्नेऽस्यायुर्मे देहीति । अभिधानार्थाः–एषोऽसीति । अथ जप इति कः शब्दार्थः । जप व्यक्तायां वाचीति । जप्यत इति जपः । यद्येवम्, अयमपि जपः, अग्निर्मूर्धा दिव इति । अयमपि जप्यते । सत्यम्, अयमपि जपः । स्तुतिरपि त्विष्यते । अयं तु जप एव केवलः । इतरैः स्तुत्यादिभिः समुच्चार्यमाण एतस्मिन्, जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्चेति केवला जपाः प्रतीयन्ते । यथा, ब्राह्मणाः परिव्राजका ब्रह्मचारिणश्च निर्गच्छन्तीत्युक्ते केवलब्राह्मणा ब्राह्मणशब्देनोच्यन्ते, तद्वत् ।

ननु, इदं विष्णुर्विचक्रम इति स्तुतिरियम् । न खलु । नास्त्यत्र स्तुतिशब्दः । नापि किंचित्स्तोतव्यमस्ति । ननु विष्णुः । न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुत्यो विष्णुः कचिदङ्गी क्रियते । नापि स्तुतिः कर्तव्या चोदिता । वचनमात्रं तु चोदितं, वैष्णवीमनूच्येति । तत्कर्तव्यम् । वचनं जपनमिति समानार्थः, यस्मात्—जप व्यक्तायां वाचीति स्मर्यते । तेन यत्र वचनमात्रं मन्त्रस्य क्रियते, न स्तूयते, नाऽऽशास्यते, स जपः ।

अथ जपस्याभिधानार्थस्य च को विशेषः । जपे वचनमात्रं मन्त्रस्य क्रियते न स्तूयते । अभिधानेन तु परः । सताऽसता वा गुणेनाऽऽदिश्यते, एषोऽसि त्वेषोऽसीति । तेषां तत्र तत्रैकार्थत्वाद्विकल्पे प्राप्ते, उच्यते । समुच्चयः । कुतः । आशीःपृथक्त्वात् । जपपृथक्त्वात् ।

---

यत्रे पुनः, 'आज्यैः स्तुवते' इति चोदना, तत्र कानिचित्पदानि गुणं प्रत्याययन्ति कानिचिद्गुणिनम् । तत्र गुणगुण्युच्चारणेन स्तुतिर्भवति । स्तुतिचोदनासु स्तुतिमात्रस्य चोदितत्वाद्विपरिवृत्त्या न गुणयर्थव्याप्तिर्विवक्ष्यते । करणेषु विपरिवृत्त्या स्तुतिर्गुणिनं व्यापयति ।

---

१ एषोऽसि त्वेषोऽसीति—ग. मु. । २ जपा इति—क. । ३ नाऽऽगच्छन्तीति—क. । ४ स्तुतिमुदाहरति—यत्रेत्यादिना । ५ अभिधानस्य स्तुतितो विशेषं दर्शयति—स्तुतीति । ६ स्तुतिमात्रस्येति—गुणाभिधानात्मकस्येत्यर्थः । ७ करणेष्विति—अभिधानेष्वित्यर्थः ।

स्तुतिपृथक्त्वात्। अभिधानपृथक्त्वाच्च। न हि, इदं विष्णुरिति योऽर्थोऽभिधीयते स एव, पावमानः सरस्वतीत्यनेन। एवं सर्वत्र। तस्मान्नानार्था एते। अतस्तेषां समुच्चयः स्यात्॥ १॥

समुच्चयं च दर्शयति॥ २॥

समुच्चयं दर्शयति अन्वानुवचनयोः, त्रिः प्रथमामन्वाहेति त्रिरुत्तमामन्वाहेति। समुच्चये च सति प्रथमा चोत्तमा च विद्यते, न विकल्पे। तस्मादपि समुच्चयः। याजमानेष्विति प्रायिको निर्देशः। एकस्मिंश्च मन्त्रे त्रितयमपि संभवति, स्तुतिरभिधानं जपश्च। यथा, इदं विष्णुर्विचक्रमे, इति यदि विष्णुर्बोध्यते ततः स्तुतिः। अथान्यस्यै वृत्तान्त आख्यायते ततोऽभिधानम्। अथाऽऽत्मनाऽवधार्यते ततो जपः॥ २॥

(ऐन्द्राबार्हस्पत्ये कर्मणि याज्यानुवाक्यायुगलद्वयस्य विकल्पाधिकरणम्॥ २॥)

[२] याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात्॥ ३॥ सि०

ऐन्द्राबार्हस्पत्ये कर्मण्यनेकं याज्यानुवाक्यायुगलमाम्नातम्। इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती। अयं वां परिषिच्यते सोम इन्द्राबृहस्पती इत्येकम्। अस्मे इन्द्राबृहस्पती। बृहस्पतिर्नः परिपातु पश्चादित्यपरम्। तयोः किं समुच्चयो विकल्प इति विचारः। तत्रोच्यते। याज्यानुवाक्यासु तु विकल्पः स्यादिति। कस्मात्। देवतोलक्षणार्थत्वात्। कर्मणि गुणभूता देवता याज्यानुवाक्याद्वयेन कर्मसिद्ध्यर्थमुपलक्ष्यते। सकृदुपलक्षणेन च तत्सिध्यति। कर्मसिद्धौ कर्मण्युपलक्षणकार्यं ना-

---

गुणी व्याप्तो यत्र प्राथ्यर्थते ते मन्त्रा आशिष उच्यन्ते॥ १॥ [२॥

---

१ अत एषां–ग. मु.। २ अवबोध्यते—ग. मु.। ३ ऋ सं. (३—७—२५)। ४ ऋ. सं. (३–७–२५)। ५ ऋ. सं (३–७–२५)। ६ ऋ. सं. (७–८–२७)। ७ आशीःस्वरूपमाह—गुणीति।

स्तीति द्वितीयं याज्यानुवाक्याद्वयं प्रयोगान्तरार्थं भवति । तस्माद्विकल्पः ॥ ३ ॥

लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गं चैवमर्थं दर्शयति । किं लिङ्गं भवति । एवमाह । ऊरू वै देवानां याज्यानुवाक्ये, एकया प्रत्यागच्छति, गमयत्यन्यया । अथात्र तिस्रः कार्या इति, पितृयज्ञे याज्यानुवाक्यात्रयविधानपरे वाक्ये तयोर्द्वित्वमुचितं दर्शयति । तथा, न सर्वाणि सह यज्ञायुधानि प्रहर्त्याणि, मानुषं तत्क्रियते । नैकमेकं, पितृदैवं तत् । द्वे द्वे सहप्रहृत्ये, याज्यानुवाक्ययो रूपमिति । तस्मादपि विकल्पः ।

अथ तयोरेव मिथः कस्माद्विकल्पो न भवति । एकार्थत्वात्प्राप्नोति । अन्यतरस्यापि हि देवतोपलक्षणं सिध्यति । उच्यते । समाख्या पुरोनुवाक्येति, पूर्वमनूच्यत इति पुरोनुवाक्या । आपेक्षिकः पूर्वशब्दो याज्यामपेक्ष्य भवति । समुच्चये चैतदुपपद्यते । तस्मात्समुच्चयः । ननूपलक्षिते, उपलक्षणकार्याभावादर्थलोपादन्यतरस्याः प्रयोगो न प्राप्नोति । उच्यते । समाख्यासामर्थ्याद्द्विरुपलक्षणसाध्यं कर्म भविष्यति । यथा, द्वाभ्यां खनतीति वचनसामर्थ्याद्द्व्यभिधानसाध्यम् । तस्मादविरोधः ॥ ४ ॥

( सोमक्रयद्रव्याणां समुच्चयाधिकरणम् ॥ ३ ॥ )

[ ३ ] क्रयणेषु[1] तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ पू०

सोमक्रयणार्थानि द्रव्याणि समाम्नातानि—अजया क्रीणाति, हिरण्येन क्रीणातीत्येवमादीनि । तेषु क्रयणेषु विकल्पः स्यात् । सर्वाणि हि क्रयणस्य साधनत्वेन निरपेक्षाणि विधीयन्ते । यथा व्रीहियवौ यागेषु । तथा, अजया क्रीणाति, हिरण्येन क्रीणाति, वाससा क्रीणातीति, तान्येकार्थानि भवन्ति । तस्मात्तेषु विकल्पः ॥ ५ ॥

समुच्चयो वा प्रयोगे[2] द्रव्यसमवायात् ॥ ६ ॥ सि०

३ ॥ ४ ॥ ९ ॥

१ क्रयेषु—ग.। २ प्रयोगद्रव्य—ग. मु.।

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, विकल्प इति । किंतु समुच्चयः । कस्मात् । प्रयोगे द्रव्यसमवायात् । क्रयणस्य प्रयोगे, अधिकस्यापि द्रव्यस्य समवाय उपपद्यते । तत्र विक्रेतुर्मूल्येनाऽऽनमनं क्रियते । तद्बहुभिः सुकरतरं भवति । तस्य तस्य द्रव्यस्याऽऽम्नानमपाक्षिकम् । सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । अपि च विषमाण्येतानि, अश्वशफेन क्रीणातीति, गोमिथुनाभ्यां क्रीणातीति । समुच्चयेनाऽऽनतिं कर्तुं शक्नुवन्ति, न विकल्पेन । विकल्प्यमानानामानर्थक्यमापद्यते । तस्मात्समुच्चयः ॥ ६ ॥

समुच्चयं च दर्शयति ॥ ७ ॥

तं वै दशभिः क्रीणाति, दशाक्षरा विराट्, विराजमेव प्राप्नोतीति क्रीणात्यनुवादोऽयम् । स एतेन न्यायेन प्राप्तानां स्यात् । तस्मादपि समुच्चयः । अथार्थवादेन विधिः कस्मान्न विज्ञायेत । तथाऽप्यनुवादरूपं बाध्यते । तच्च सति संभवे न बाधितव्यम् । तस्मादनुवादः ॥ ७ ॥

( पशुगणे—उपयाजसाधनानां गुदानां समुच्चयाधिकरणम् ॥ ४ ॥ )

[ ४ ] संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥ सि०

अग्नीषोमीये पशौ गुदेनोपयजनमाम्नातं, गुदेनोपयजति प्राणो वै गुद इति । ऐकादशिनेषु पशुष्वनेकगुदसंनिपाते विचारः प्रभवति, किमुपयजनगुदानां समुच्चयो विकल्पो वा । यद्यर्थकर्मोपयजनं ततो विकल्पः । अथ प्रतिपत्तिस्ततः समुच्चयः । किं पुनरत्र युक्तम् । अर्थकर्मेति । कुतः । भूतभव्यसमुच्चारणे भूतं भव्याय दृष्टार्थत्वाद्भवति । यदाऽर्थकर्म तदेकेनापि तत्सिध्यतीति बहूनामेकत्र प्राप्तानां विकल्पो भवति । एवं प्राप्ते—

उच्यते । संस्कारे च तत्प्रधानत्वात् । संस्कारोऽयं—प्रतिपत्तिरित्यर्थः । कुतः । उपयुक्तशेषत्वात् । अग्नीषोमीययागार्थः पशुरुत्पन्नः । तस्मिंश्चे तच्छेषाः प्रतिपादनार्हाः[1] । तस्माद्गुदस्य प्रतिपत्तिनियमोऽयं दृष्टार्थः ।

---

१ ॥ ७ ॥

---

१ प्रतिपादनार्थाः—ग. पु. ।

नन्वर्थकर्मपक्षेऽपि दृष्टार्थतैव हेतुरुक्तः । तुल्योऽसौ प्रतिपत्तावपि । तत्रापि हि प्रतिपाद्यमानः कर्म साधयति । तस्माद्वैशेषिकोऽसौ । यदा प्रतिपत्तिस्तदा समुच्चयः । तत्प्रधानत्वाद्द्रव्यसंस्कारार्थं कर्म । यस्यैव पशोर्गुदो न संक्रियते तस्यैव तेन संस्कारेण हानिः स्यात् । तस्मात्समुच्चयः ॥ ८ ॥

( अग्न्याधेये दक्षिणानां विकल्पाधिकरणम् ॥ १ ॥ )

## [ ५ ] संख्यासु तु विकल्पः स्याच्छ्रुतिप्रतिषेधात् ॥ ९ ॥ सि०

आधाने दक्षिणाविधयः, एका देया, षड् देयाः, द्वादश देयाः, इत्येवमादयः । तेषां समुच्चयो विकल्पो वेति विचारणा । तत्राङ्गभूयस्त्वाय सर्वाङ्गग्राहिणा प्रयोगवचनेन समुच्चये प्राप्ते, उच्यते । संख्यासु तु विकल्पः स्यात् । कुतः । श्रुतिविप्रतिषेधात् । एका देयेत्येकसंख्यापरिच्छिन्नं द्रव्यं परिक्रयसाधनं श्रूयते । तथा, षड् देयेति षट्संख्यापरिच्छिन्नम् । यद्येका च षट् च समुच्चीयेरन्, संख्यान्तरं सप्तसंख्योत्पद्यते । तत्परिच्छिन्नेन द्रव्येण परिक्रयः कृतः स्यात् । तत्रैकश्रुतेः षट्श्रुतेश्च विप्रतिषेधः स्यात् ।

ननु नैवात्र परिक्रयः श्रूयते । किं तर्हि । दानम्, एका देया षड् देया इति । अत्रोच्यते । दानं नामाऽऽत्मीयस्य द्रव्यस्य परस्वापादनम् । तच्च परः स्ववान्स्यादित्येवमर्थम् । स्ववानेवासौ । तस्याऽऽर्त्विज्यं करोति । तेन चास्य दातुरर्थः । एवं दृष्टार्थो भवति । अथ दानमात्रं कल्प्यते, ततोऽदृष्टं कल्पयितव्यम् । परिक्रय एवैकादीनां श्रवणम् । तत्र, यः सप्तभिः परिक्रीणीते, न तेनैकया षड्भिः परिक्रीतो भवति । न हि ते एकेत्यामनन्ति, न षडिति । किं तर्हि । सप्तेति । स एष श्रुतिविप्रतिषेधः । तस्माद्विकल्पः संख्यासु ॥ ९ ॥

८ ॥ ९ ॥ ]

१ मतेऽपि—क. । २ प्रतिपाद्यमानाः—मु. । ३ साधयन्ति—मु. । ४ विशेषं दर्शयति—तस्मादिति । तस्मात्—अर्थकर्मणः, प्रतिपत्तेश्चासौ—वक्ष्यमाणो विशेष इत्यर्थः । ५ विचारणम्—प. मु. । ६ दानं नाऽऽत्मीयस्य परस्वत्वापादनम् तत्र परस्वत्वात्स्यादित्येवमर्थः—मु. ।

( पशुगणे पत्नीसंयाजेषु जाघनीनां विकल्पाधिकरणम् ॥ ६ ॥ )

[ ६ ] द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥ सि०

जाघन्या पत्नीः संयाजयन्तीति श्रूयते । तत्र पशुगुणेषु विचारो भवति । किं जाघनीनां समुच्चय उत विकल्प इति । अत्रापि पूर्व एव न्यायः । यद्यर्थकर्म ततो विकल्पः । अथ प्रतिपत्तिस्ततः समुच्चय

पशुगणे जाघनीनां विकल्पो[1]ऽथ समुच्चय इति । समुच्चय इति ब्रूमः । कथम् । अग्नीषोमीये पशावाज्यं च जाघनी च विकल्पेन प्राप्येते[2] । पुनरुच्यते ' जाघन्या पत्नीः संयाजयन्ति ' इति । तत्पुनर्वचनं जाघनीं नियमयति । स चायं नियमो दृष्टार्थः[3] । कथम् । विशसनेन हृदयादीन्युत्पादितानि । तानि वाक्यान्तरै[4]र्विनियुक्तानि । जाघनी त्वविनियुक्ता । तेन प्रतिपत्त्यर्हा । साधनतयाऽपि नियतया तया यागे क्रियमाणे याऽसौ प्रतिपत्तिरपेक्षिता जाघन्याः सा भवत्येव ।

सांनाय्ये[5] तु यागादपूर्वम् । योऽप्ययमाज्यजाघन्योर्विधाननियमः[6], सोऽप्यदृष्टार्थ[7] एव । पशौ यागादपूर्वं[8], नियमो द्रव्यसंस्कारकः । पशुगणेष्वप्येवमेवं[9] प्राप्यते चोदकेन । तस्मात्सर्वाः संस्कर्तव्याः । यदेतत्[10]तस्यैकदेशोऽन्यदेवत्यः स्यादिति पूर्वपक्षवादी सिद्धान्ते दोषमुपन्यस्यति । तदयुक्तम् । हृदयादीनामग्नीषोमदेवतत्वात् । तदुक्तं दशमे[11] । तस्मात्पूर्वोक्तः[12] पूर्वपक्षो नेतरः[13] ।

१ विकल्पेन—क. ग. । २ प्राप्येते इति—पत्नीसंयाजद्रव्यतयेति शेषः । ३ दृष्टार्थ इति—जाघनीप्रतिपत्त्यर्थ इत्यर्थः । ४ वाक्यान्तरैरिति—'हृदयस्याग्रेऽवद्यति ' इत्यादिभिर्वाक्यान्तरैरग्नीषोमीययागार्थत्वेन विनियुक्तानीत्यर्थः । ५ ननु यदि देवतान्तरसंयुक्तस्य द्रव्यस्य देवतान्तरसंयोगः प्रतिपत्तिः, तदाऽमावास्येष्टौ अग्न्यादिप्रत्तिपन्नस्य तण्डुलसांनाय्यादेर्देवतान्तरगमनं प्रतिपत्तिर्भवत्विति शङ्कां निराकरोति—सांनाय्ये त्वित्यादिना । अयमाशयः । उपयुक्तावशिष्टं हि द्रव्यं प्रतिपत्तियोग्यं भवति । सांनाय्यादि तु न कथंचिदप्युपयुक्तम् । अतो यागादपूर्वमेव जायते, न प्रतिपत्तिरिति । ६ विधाननियम इति—प्रकृतौ दर्शपूर्णमासयोरिति शेषः । ७ अदृष्टार्थ एवेति—प्रतिपत्त्यनर्हत्वादिति पूरणम् । ८ यागादपूर्वमिति—प्रकृतिवत्पत्नीसंयाजा अदृष्टार्था एवेत्यर्थः । ९ एवमेव प्राप्यत इति—द्रव्यसंस्कारकतया नियमः प्राप्यत इत्यर्थः । १० ' प्रतिपत्तिस्तु शेषत्वात् ' इति सूत्रे ' जाघन्याः प्राधान्यं युक्तम् ' इत्यादि पूर्वपक्षभाष्यग्रन्थमनूद्य दूषयति—यदेतदित्यादिना । ११ ( अ० १० पा० ७ अ० २ ) । १२ पूर्वोक्त इति— सूत्रकारोक्त एवेत्यर्थः । १३ इतरः—भाष्यकारोक्तः ।

इति । किं प्राप्तम् । द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात् । पूर्ववदेतदर्थकर्म, यज्जाघन्या पत्नीसंयाजनं दर्शपूर्णमासपूर्वकं चोदकपरम्परया पशुगुणं प्राप्तम् । दर्शपूर्णमासयोश्चैतदर्थकर्म । न हि तत्र काचिच्छेषभूता जाघन्यस्ति, यस्याः प्रतिपत्तिः स्यात् । लौकिक्यास्तु तत्राऽऽज्येन सह विकल्पश्चोदकेनाग्नीषोमीयं पशुं प्राप्तः । तत्रापि श्रूयते, जाघन्या पत्नीः संयाजयन्तीति । सा श्रुतिर्विकल्पे प्राप्ते नियमार्था भवति । यथाप्राप्तयोश्च नियमः । गुणभूता च प्राप्ता । तस्मादग्नीषोमीये गुणभूता जाघनी, कर्म प्रधानम् । यथाऽग्नीषोमीये तथा पशुगुणेषु । तस्मात्तत्राप्यर्थकर्म । अर्थकर्माणि चैकार्थानां जाघनीनां समुच्चयो न युक्तः । तस्माद्विकल्पः ॥ १० ॥

द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥

यद्यपि जाघनी गुणभूता कर्मणि, एवमपि समुच्चयो युक्तः । कुतः । द्रव्यस्य कर्मनिष्पत्तेः । जाघनी द्रव्यं, कर्मणा—विशसनेन, निष्पन्नमिति । तत्र प्रयोजनापेक्षा भवति । इदं च श्रूयते, जाघन्या पत्नीः संयाजयन्तीति । तदेवं विज्ञायते, इदमस्य प्रयोजनम् । पशुगुणे च प्रतिपशु कर्मभेदः । तस्य तस्य पशोः कर्मनिष्पन्नं जाघनी द्रव्यम् । अतस्तत्रापि तत्पत्नीसंयाजार्थमेव कर्तव्यम् । एवं सति यथाप्रकृति कृतं भवति । तस्मादर्थकर्मण्यपि समुच्चय एव ॥ ११ ॥

---

एवं प्राप्ते, ब्रूमः । नास्ति समुच्चयो जाघनीनाम् । कुतः । यागोऽपूर्वार्थो दृष्टार्थं द्रव्यं, नियमाच्च यागः संस्कारक इति विवक्षाद्वयं न लभ्यत एकेन वाक्येन । अपि च यागादपूर्वं प्रधानभूतं, द्रव्याद्यागो, नियमाद्द्रव्यम् । तेन भवता प्रधानमङ्गाङ्गार्थं कृतं स्यात् । यदि च संस्कार्या जाघनी ततोऽप्राकृतकार्यत्वात्कर्मान्तरं पशौ प्राप्नोति । चोदकेन चान्ये पत्नीसंयाजाः प्राप्नुवन्ति । एवमेते दोषाः पूर्वपक्षे । तस्माद्यथा निर्ज्ञाताः पत्नीसंयाजाः प्रकृतौ तथा प्राप्तानां पशौ जाघनी नियम्यते ॥ १० ॥ [ ११ ॥

---

१ द्रव्यकर्म—ग. मु. । २ प्रधानमङ्गाङ्गार्थमिति—प्रधानभूतो यागः स्वाङ्गभूतद्रव्याङ्गनियमार्थः स्यादित्यर्थः ।

कपालेऽपि तथेति चेत् ॥ १२ ॥

इति चेत्पश्यसि कर्मनिष्पादितत्वाज्जाघनीनां समुच्चय इति। तेन तर्हि कपालेऽपि समुच्चयः प्राप्नोति, पुरोडाशकपालेन तुषानुपवपतीति । तदपि कर्मणा प्रयुज्यते । तस्यापि तुषोपवपनं प्रयोजनं भवितुमर्हति । तथा पुरोडाशगणे तस्य तस्य पुरोडाशस्य कपालेन तुषोपवपनं कर्तव्यम् । वक्तव्यो वा विशेषः ॥ १२ ॥

न कर्मणः परार्थत्वात् ॥ १३ ॥

नैतदेवम् । कुतः । कर्मणः परार्थत्वात् । परार्थं च कपालानां प्रयोगकर्म, पुरोडाशश्रपणार्थम् । तदर्थमुपात्ते कपाले तुषोपवपनमप्यन्वासज्यते । तद्यथा काष्ठान्याहर्तुं प्रस्थिते पुरुषे शाकाहरणमप्युपाधिः क्रियते, शाकमप्याहरेति । न तस्य गमनं शाकार्थमपि भवति । कथं पुनर्ज्ञायते पुरोडाशार्थे कपाले तुषोपवपनमन्वासज्यते, नैतदुभयार्थमिति । उक्तोऽत्र न्यायः । भविष्यता संयोगस्य तन्निमित्तत्वादिति । न चेत्तुषोपवपनार्था कपालानामुत्पत्तिः । नावश्यं सर्वैस्तुषोपवपनं कर्तव्यम् ।

अथवा—उभयोरपि प्रतिषेधोऽयं, न कर्मणः परार्थत्वादिति । कपाले व्याख्यातम् । जाघन्यामपि कर्मणः परार्थत्वम् । हृदयादीनां निष्पत्त्यर्थं विशसनकर्म, न जाघन्याः । अपि च, हृदयादिभिरवदानैर्यष्टुं पशोरालब्धस्य विशसनकर्मापि तदर्थमेव । तस्मान्न जाघन्या निष्पत्त्यर्थं विशसनम् । नु चेदेवं, नैवात्र प्रयोजनाकाङ्क्षा । कुतस्तत्संबन्धः । हृदयादीन्यनुनिष्पन्ना जाघनी, सा पत्नीसंयाजनिर्वृत्त्यर्थमुपदिष्टा । एकया च तथा ते निर्वर्त्यन्ते । तस्मात्पशुगुणे जाघनीनां विकल्पः ॥ १३ ॥

प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ पू०

भवेद्विकल्पो यद्यर्थकर्म स्यात् । प्रतिपत्तिस्त्वेषा । कस्मात् । शेषत्वात् । पशुना निर्वर्तिते यागे शेषभूता जाघनी निष्प्रयोजना कश्चिन्निक्षेपार्हा । तस्या निक्षेपः पत्नीसंयाजेषु क्रियते, न जाघनी विधीयते, न पत्नीसंयाजाः । उभये विहिताः । संबन्धो न विहितः । स विधीयते । तत्र च

१२ ॥ १३ ॥

१ पुरोडाशार्थकपाले—क. । २ ( अ० ४ पा० १ अ० ११ सू० २६ ) ।

जाघन्याः प्राधान्यं युक्तं, न गुणभावः। गुणभावेऽस्या अनेकत्र गुणभावः स्यात्। तत्र को दोषः। अग्नीषोमीयं पशुमालभेतेत्येषा चोदना बाध्येत। नानादेवतोऽयं तदा पशुर्भवति। एकदेशोऽस्याग्नीषोमीयः। एकदेशः पत्नीसंयाजदेवतानामिति। तस्मात्प्रतिपत्तिः। प्रतिपत्तौ यस्यैव पशो- र्जाघनी न प्रतिपाद्यते, तस्यैव तेन संस्कारेण वर्जनं स्यात्। तस्मादपि समुच्चयः॥ १४॥

शृतेऽपि पूर्ववत्त्वात्स्यात्॥ १५॥

शृते चरुं, दध्यंश्चरुमित्यत्रापि प्रतिपत्तिः स्यात्। कुतः। पूर्ववत्त्वात्। अन्यपूर्वकं शृतं दधि चेन्द्रायोत्पन्नम्। तस्यार्थान्तरगमनं विष्णुं शिपि- विष्टं प्रति। तस्मात्तस्यापि, उत्पत्तौ येन संयुक्तं तत्र तदर्थं तच्छ्रुतिहेतु- त्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यादित्यनेन न्यायेन प्रति- पत्तिः प्राप्नोति। वक्तव्यो वा विशेषः॥ १५॥

विकल्पे त्वर्थकर्म नियमप्रधानत्वाच्छेषे च कर्मकार्य- समवायात्तस्मात्तेनार्थकर्म स्यात्॥ १६॥ सि०

अस्मिन् सूत्रे द्वयोः सूत्रयोः परिहार उच्यते। प्रतिपत्तिस्तु शेषत्वा- दिति, शृते च पूर्ववत्स्यादिति च। यत्तावदुच्यते जाघन्याः प्रतिप- त्तिरिति। तत्र ब्रूमः। विकल्पः प्रकृतौ जाघन्या आज्येन सह। पशौ च तथैव विकल्पे प्राप्ते, नियमप्रधाना पुनःश्रुतिः, जाघन्या पत्नीः संयाजयन्तीति। आज्यस्य निवृत्तिं कृत्वा कृतार्था भवति। जाघन्या अर्थकर्म न वारयति। यत्तु शेषत्वादिति। शेषस्यापि वचनादनेकत्र गुणभावो भवति। यथा प्रस्तरस्य।

यच्च शृतस्यान्यार्थमुत्पन्नस्यान्यत्र गमनं प्रतिपत्तिरिति। तदप्ययुक्तम्। कुतः। शेषे च कर्मकार्यसमवायात्। य उपयुक्तः शेषस्तस्मिन् कर्मकार्यं समवैति। किं पुनस्तत्। संस्कारः। स हि कर्मणा क्रियते। न चैत- च्छृतं दधि च क्वचिदुपयुक्तम्। यस्मै यागायोत्पन्नं स नैव तावन्निर्वर्त्यते। तस्मात्तेन जाघनीद्रव्येण, दधिशृताभ्यां चार्थकर्म स्यात्, न प्रतिपत्तिः ॥ १६॥

---

१४॥ १९॥ ११॥]

---

१ पूर्ववत्–ग. मु.। २ (अ० ४ पा० २ अ० ७ सू० १९)। ३ (अ० १२ पा० ४ अ० ६ सू० १४)। ४ अशेषस्यापि वचनादेकत्र–ग. मु.

( काम्येन आह्वाग्निना नित्यस्योख्याग्नेर्विकाराधिकरणम् ॥ ७ ॥ )

[ ७ ] उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥ पू०

अस्त्युखासनावुख्योऽग्निः, संतापेनाग्निं जनयतीति । तं प्रकृत्य श्रूयते । वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याऽऽहृत्यावदध्यात्, आह्वादन्नाद्यकामस्य, वैद्युतादवृष्टिकामस्येति । तत्र विचार्यते, किं काम्यस्य नित्यस्य वाऽग्नेः समुच्चयः, अथवा काम्येन नित्योऽग्निर्विक्रियत इति । तत्रोच्यते । उखायां काम्यनित्ययोरग्न्योः समुच्चयः । कुतः । एवं सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुग्रहीष्यते । ननु नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषादित्यनेन न्यायेन काम्योऽग्निर्नित्यस्य विकारको भविष्यति । न भविष्यति । किं कारणम् । नियोगे कामदर्शनात् । अग्नेर्नियोजनेऽयं कामः श्रूयते, आहृत्यावदध्याद्ब्रह्मवर्चसकामस्येति, न ब्रह्मवर्चसकामस्यायमग्निर्होमार्थो भवतीति । एवं चेदाहृतस्यावधानात्फलं भविष्यति । होमस्तु यथाप्राप्त उख्य एव संनिपाताच्चाग्न्योः समुच्चयः ॥ १७ ॥

असति चास्संस्कृतेषु कर्म स्यात् ॥ १८ ॥

यदि च काम्येन नित्योऽग्निर्विक्रियेत, स नैव स्यात् । तस्मिंश्चासत्यसंस्कृतेषु आह्वादिषु कर्म स्यात् । तथा, आधानस्य सर्वार्थता बाध्येत । तस्मादपि समुच्चयः ॥ १८ ॥

तस्य च देवतार्थत्वात् ॥ १९ ॥

अग्निं चाग्न्यन्वाधानेन देवतापरिग्रहणं कृतम् । यदि सोऽग्निरुत्सृज्येत ततो देवता अपरिगृहीता भवेयुः । अग्न्यन्वाधानेनाग्निर्धार्यते, तत्कृताद्ग्निधारणाद्देवतापरिग्रहः ॥ १९ ॥

---

'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याऽऽहृत्यावदध्यात्' इत्यवधानात्कामः श्रूयते, नाग्न्यन्तरात् । एवं चेदवधानमात्रं कृत्वा कृतार्थः शब्दो नाग्न्यन्तरं निवर्तयितुं शक्नोति । तस्मादवधानमात्रात्फलम् ॥ १७ ॥ [ १८ ॥ १९ ॥ ]

---

१ उखाग्निः—ग. पु. । २ ( अ० ३ पा० ६ अ० ३ सू० १० ) । ३ संनिधानाच्च—ग. पु. । ४ यद्यप्यन्वाधानस्य 'धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते' इति द्वादशाध्यायप्रथमपादोक्तन्यायेनाग्निधारणार्थत्वमिष्यते तदाऽपि धारणस्यैव देवतापरिग्रहार्थतामभिप्रेत्य सूत्रकार आह—अग्निमिति ।

विकारो वा तदुक्तहेतुः ॥ २० ॥ सि०

विकारो वा नित्यस्याग्नेः काम्येन । तदेतदुक्तहेतुः, नैमित्तिकं तु प्रकृतो तद्विकार इति । सामान्येनैतदुक्तं, यदाहवनीये जुहुतीति । वृष्टिकामो वैद्युतादिति विशेषेण । तेन सामान्यं बाध्येत । किं कारणम् । स्वाश्रयेष्वव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसंभवात् । विशेषस्य चान्यपरिच्छिन्नस्य, एकावसायिनस्तदसंभवे विषयाभावप्रसङ्गादुपदेशवैयर्थ्यं मा भूदिति ।

---

स्वाश्रयेष्वव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसंभवादिति— स्वाश्रयेषु ब्राह्मणपिण्डेषु, अव्यावृत्तविषयस्य सामान्यस्य— अपरिच्छिन्नविषयस्य, विशेषापेक्षया ततोऽन्यत्रापि वृत्तिसंभवात् । तस्माद्विशेषात्कौण्डिन्यादन्यत्रापि ब्राह्मणपिण्डेषु वृत्तिः संभवत्येव । तस्मात्सामान्यशास्त्रं कृतार्थमन्यस्मिन् विषये । विशेषस्य चान्यतः परिच्छिन्नस्य तदवसायिनः, तदसंभवे विषयाभावप्रसङ्गादुपदेशवैयर्थ्यं मा भूदिति । विशेषस्य पुनः कौण्डिन्यादेः, अन्येभ्यो ब्राह्मणपिण्डेभ्योऽवच्छिन्नस्य, तदवसायिनः, तदसंभवे—तस्मिन्नसंभवे विषयाभावप्रसङ्गादुपदेशवैयर्थ्यं स्यात् । तस्मात्तदपि विशेषशास्त्रमनुग्रहीतव्यम् ।

एवं बाधो वर्णितः सोऽयुक्तः । यत्कारणम् । शास्त्रानुग्रहः कार्य इति नास्ति चोदना । यदि शास्त्रानुग्रहमात्रं स्यात् , दधिदाने कृतेऽनुगृहीतं शास्त्रमित्युभयत्र दधिदानम् । एतत्तु नेष्यते । तस्माद्य एव बाधोऽस्माभिर्वर्णितो नित्यनैमित्तिकयोः, स एव ।

---

१ ( अ० ३ पा० ६ अ० ३ सू०१० ) । २ स्वाश्रयेष्वव्यावृत्तिर्विशेषस्य–क. ग. । ३ स्वाश्रयेष्विति—ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय, इत्यादाविति पूर्वं शेषः । ४ विशेषापेक्षया—कौण्डिन्यरूपविशेषापेक्षयेत्यर्थः । ५ तदवसायिनः—केवलकौण्डिन्यपर्यवसायिनः । ६ तस्मादिति—वैयर्थ्यं मा भूदितीत्यर्थः । ७ एवं व्याख्यातं भाष्यं दूषयति—एवमित्यादिना । ८ स्यादिति—अदृष्टार्थं कार्यमिति पूर्वं शेषः । ९ उभयत्र—कौण्डिन्येऽन्यत्र चेत्यर्थः । स्यादिति शेषः । १० वर्णित इति—( अ० १ पा० ४ अ० ११ सू० २१ ) इत्यत्र ।

'पुरुषार्थसमाप्तेः काम्यं नित्यस्य बाधकम् ।
विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्तनात् ॥

इत्यादिना वर्णित इत्यर्थः । ११ स एवेति–युक्त इति शेषः ।

अथ यदुक्तं नियोगे कामदर्शनादिति। तत्र ब्रूमः। आम्राद्वाहृत्याव-दध्यादिति नित्यस्यैव होमार्थस्यावधानस्यायं विशेषकामसंयोगः, आम्रा-द्वाहृत्याधानकामस्येति। अवदध्यादिति पुनःश्रुतिः। यद्यवधाने काम-श्रुतिः स्यादवधानं विधीयेत, नाविधीयमानं कामस्य साधनत्वेन युज्य-ते[1]। तस्मिंश्च विधीयमाने विशेषश्च स चेत्यनेकार्थत्वाद्वाक्यं भिद्येत। तस्मान्न नियोगे कामश्रुतिः। किं तर्हि। होमायैवायं नित्यो नियोगोऽ-ग्निविशेषविधानार्थमनूद्यते। यावदुक्तं स्यात्, वैद्युतमग्निं होमार्थं कुर्या-दिति तावदेवेदम्। एवं चेन्नैमित्तिकस्तस्मिंस्तस्मिन् कार्ये नित्यमग्निं विकरोतीत्युपपन्नम्॥ २०॥

वचनादसंस्कृतेषु कर्म स्यात्॥ २१॥

यच्चेदमुक्तं, असति चासंस्कृतेषु कर्म स्यादिति। तत्र ब्रूमः। वचना-दसंस्कृतेषु कर्म स्यादिति। किमिव वचनं न कुर्यात्। नास्ति वचन-स्यातिभारः। यथा, पदे जुहोतीति[2]॥ २१॥

संसर्गे चापि दोषः स्यात्॥ २२॥

अपि च यदि समुच्चयः स्यात्प्रादाव्येन सह संसर्गः स्याद्वैहारिकस्य। तत्र तु दोषः श्रूयते, अग्नये शुचयेऽष्टाकपालं निर्वपेद्यस्याग्निः प्रादाव्येन सह संसृज्यते, अशुचितर एष योऽग्निः प्रादाव्यः॥ २२॥

वचनादिति चेत्॥ २३॥

आह। नैष दोषः। वचनात्संसर्गः, न वाचनिके क्रियमाणे दोषः॥ २३॥

उच्यते—

तथेतरस्मिन्॥ २४॥

---

अथ यदुक्तमभ्याधानात्फलमिति। अत्रोच्यते। 'तानि द्वैधम्' इत्यभ्याधानेन द्रव्यं चिकीर्ष्यते। दृष्ट एव संस्कारोऽग्नेः। तस्मान्नादृष्टार्थमिति[3] सिद्धम्॥ २०॥ [२१॥ २२॥ २३॥

---

१ युज्येत—क.। २ इतीति–( अ० २ पा० १ अ० ३ सू० ६ ) अत्रत्येन न्यायेनेत्यर्थः।
३ नादृष्टार्थमिति-न फलार्थमभ्याधानं, किंत्विन्द्रियकामाधिकरणन्यायेन प्रकृतोखाधिकरणकावधाना श्रितो आम्रादिरग्निः फलार्थं विधीयत इति तेन च काम्येन नित्यस्योख्यस्याग्नेर्निवृत्त्या गोदोहनेनेव चमसस्य प्रसक्तसिद्धिः संभवतीति भावः।

इतरस्मिन्नपि पक्षे वाचनिकोऽसंस्कृतेषु होमः । एवमुभयत्र वाचनिकत्वाद्दोषाभावे सति नैमित्तिकत्वाद्विकार आश्रीयते, न समुच्चयः ॥ २४ ॥

उत्सर्गेऽपि कर्मणः कृतत्वात् ॥ २५ ॥

अथ यदुक्तं, तस्य देवतार्थत्वादिति । तत्र ब्रूमः । उत्सर्गेऽपि नित्यस्याग्नेर्देवतापरिग्रहो न विरुद्धः । कर्मणः कृतत्वात् । अग्न्यन्वाधानेन देवताः परिगृह्यन्ते, नाग्निना । एवं श्रूयते, यः पूर्वेद्युरग्निं गृह्णाति स वै श्वोभूते देवता अभि यजत इति । तच्च कृतमग्नेरर्हणम् । तेन परिगृहीता देवताः । अग्न्यन्तरे वचनाद्यजते । तस्मादविरोधः ॥ २५ ॥

( काम्यस्याग्नेराहवनीयत्वाभावाधिकरणम् ॥ ८ ॥ )

[ ८ ] स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥ पू०

यश्चासौ वैहारिकोऽग्निः स आहवनीयः स्यात् । कुतः । आहुतिसंयोगात् । एतस्य हूयते यस्मिन् स आहवनीयः । हूयते चास्मिन्नित्ये— तस्मादयमप्याहवनीयः ॥ २६ ॥

अन्यो वोद्धृत्याऽऽहरणात् ॥ २७ ॥ सि०

अन्यो वाऽऽहवनीयात्स्यात् । नायमाहवनीयः । कस्मात् । उद्धृत्याऽऽहरणात् । लौकिकोऽयमुद्धृत्याऽऽह्रियते, भ्राष्ट्रादाहरेत्, मादाग्यादाहरेदिति । आहवनीयशब्दश्च संस्कारनिमित्तः, संस्कारेषु तत्संज्ञाभावात्, अभावाच्च प्राकृतेभ्यः । यच्चाऽऽहुतिसंयोगादिति, सिद्ध आहवनीयत्वे, आहुतयो विधीयन्ते, यदाऽऽहवनीये जुहोतीति । सिद्धेन तेनाऽऽसां विधानान्न तत्कृतं तद्भवति । तस्मान्नाहवनीयः । प्रयोजनं, आहवनीयधर्माभावः ॥ २७ ॥

( काम्येऽग्न्यावाधानादिसंस्कारलोपाधिकरणम् ॥ ९ ॥ )

[ ९ ] तस्मिन् संस्कारकर्म शिष्टत्वात् ॥ २८ ॥

---

१४ ॥ १९ ॥ २१ ॥ २७ ॥

---

१ यक्ष्यन्ते—ग. । २ आहवनीयधर्माभाव इति—'धार्यो गतश्रिय आहवनीयः' इत्यादिना विहिता गतश्रीधारण यो धर्मा नात्र भवन्तीत्यर्थः ।

तस्मिन्—वैहारिकेऽग्नौ, आधानिकाः संस्काराः कर्तव्याः। शिष्टत्वात्। सर्वकर्मार्था हि ते, आधानस्य सर्वशेषत्वात्। यदि न क्रियेरन्, तत्कर्म[1] तेनाङ्गेन हीनमफलं स्यात्॥ २८॥

## स्थानात्तु परिलुप्येरन्॥ २९॥

परिलुप्येरन् आधानिकाः संस्काराः। कस्मात्। स्थानात्। तस्य संस्कृतस्याग्नेः स्थानेऽयमसंस्कृतः[2] श्रुतः। स वैशेषिकत्वात्तस्य निवर्तकः। स चेन्निवृत्तः, किमर्थं संस्काराः करिष्यन्ते। संस्कृतः स्यादित्येवमर्थं ते क्रियेरन्। असंस्कृतेन चात्रार्थः। तस्माल्लुप्येरन्॥ २९॥

(नित्यस्योख्यस्याग्नेर्नित्यं धारणाभावाधिकरणम्॥ १०॥)

## [१०] नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात्॥ ३०॥ पू०

तस्मिन्नेवौख्ये चिन्ता। किमयं नित्यं धार्यो न वा। अथवा नैव धार्येति। तत्रोच्यते। नित्यधारणे विकल्पः, धार्यो वा न वा। कुतः। न ह्यकस्मात्प्रतिषेधः स्यात्। धारणप्रतिषेधस्तस्य भवति। न प्रतिसमिन्ध्येत्, यत्प्रतिसमिन्ध्यति।[3] भ्रातृव्यमस्मै जनयतीति श्रुतिः। धारणप्रसङ्गे च सति प्रतिषेधोऽर्थवान् भवति। यथा न गन्तव्यं, न भोक्तव्यमिति सति गमनप्रसङ्गे भोजनप्रसङ्गे च भवति। न च श्रुतिमन्तरेण प्रसङ्ग उपपद्यत इति नित्यधारणस्य विधायिका श्रुतिरनुमीयते। तया प्राप्तिः। प्रतिषेधेन निवृत्तिः। तस्माद्विकल्पः॥ ३०॥

## नित्यधारणाद्वा प्रतिषेधो गतश्रियः॥ ३१॥ सि०

यदि कदाचित्प्रत्यक्षया श्रुत्या प्रसङ्गो न स्यात्तत्रान्याऽनुमीयेत। अस्ति तु नित्यधारणस्य प्रसञ्जिका गतश्रियः श्रुतिः,[4] धार्यो गतश्रिय आहवनीय इति। आहवनीयस्थानापन्नत्वादुख्यस्यापि नित्यधारणं प्रसक्तम्। तत्प्रतिषेधार्थेयं श्रुतिः। तस्मान्न श्रुत्यन्तरस्यानुमानं भवति। अतो नित्यधारणस्याविधानात्कार्याभावाच्चाधारणमेव स्यात्॥ ३१॥

२८॥ २९॥ ३०॥ ३१॥

१ कर्म—ग. मु.। २ न संस्कृतः—ग. मु.। ३ न प्रतिसमिन्धीत, यत्प्रतिसमिन्धीत—क.। ४ श्रुतिः, नित्यधृत आहवनीयो गतश्रियः—क.।

( सत्राहीनयोरनेकयजमानसमवाये शुक्रान्वारम्भादीनामेकयजमानकर्तृकत्वाधिकरणम् ॥ ११ ॥ )

[ ११ ] परार्थान्येको यजमानगणे ॥ ३२ ॥ सि०

सत्राहीनयोर्यजमानानां गणे यानि परार्थानि कर्माणि यथा, शुक्रं यजमानोऽन्वारभते, यजमानसंमितोदुम्बरी भवतीति । तान्येको यजमानः कुर्यात्, न सर्वे । कस्य हेतोः । परार्थत्वादेव । न तत्र कर्मणा यजमानस्य कश्चिदुपकारः क्रियते । यदि क्रियेत ततः स्वस्मा उपकाराय सर्वे कुर्युः । यजमानेन तु तत्कर्म क्रियते । तदेकेनैव कृतमिति द्वितीयानां प्रवृत्तौ हेतुर्नास्ति । तस्मादेकः कुर्यात् ॥ ३२ ॥

( अहीने शुक्रान्वारम्भादीनामनियतयजमानकर्तृकत्वाधिकरणम् ॥ १२ ॥ )

[ १२ ] अनियमोऽविशेषात् ॥ ३३ ॥ सि०

तस्यैकस्यानियमो यः कश्चिदेकः कुर्यात् । कुतः । अविशेषात् । नात्र शब्दकृतो वाऽर्थकृतो वा विशेषो गृह्यते । तस्मादनियमः । अहीने मुख्यस्याभावादेवमवस्थितम् ॥ ३३ ॥

( सत्रे शुक्रान्वारम्भादौ नियोगतो गृहपतिकर्तृकत्वाधिकरणम् ॥ १३ ॥ )

[ १३ ] मुख्यो वाऽविप्रतिषेधात् ॥ ३४ ॥ सि०

सत्रे तु मुख्यः कुर्याद्गृहपतिः । कुतः । अविप्रतिषेधात् । कुर्वतोऽविप्रतिषेधः । न हि तेनाऽऽर्त्विजीनाः पदार्थाः कर्तव्याः । ऋत्विजां तु स्वपदार्थसंनिपाते विप्रतिषेधः स्यात् । एवं तर्हि गृहपतेरर्थवत्त्वं, ऋत्वर्थानि याजमानानि करिष्यतीति ॥ ३४ ॥

( सत्रे यजमानसंस्काराणां सर्वार्थत्वाधिकरणम् ॥ १४ ॥ )

[ १४ ] सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३५ ॥ पू०

अथ यानि याजमानानि संस्कारार्थानि कर्माणि, तान्यपि किं सत्रे गृहपतिनैव कर्तव्यानि, उत सर्वैरिति । उच्यते । गृहपतिना कर्तव्यानि । कुतः । असंयोगात् । एवं गृहपतिरिति समाख्याया अर्थेना-

---

३२ ॥ ३३ ॥ ३४ ॥

---

१ अन्वर्थेन—ग. मु. ।

संयोगो न भविष्यति । अर्थवत्ता भविष्यतीत्यर्थः। कथं कृत्वा। तत्रोच्यते। इहानेन गृहशब्देन कर्मोच्यते, न शाला। शालायामभिधीयमानायामविशेषः स्यात्। सर्वे हि ते शालायाः पतयः।

ननु च कर्मणोऽपि ते सर्व एव पतयः। सत्यमेवं, समाख्यानात्प्रकर्षावगतिर्विज्ञायते। यथा देवदत्तो मथुरायां ब्राह्मण इति। प्रकर्षश्च कर्मभूयस्त्वाद्वा स्यात्, फलभूयस्त्वाद्वा। तत्र कर्मभूयस्त्वं नोपपद्यते। यत इतरेषां बहुतरं कर्म। फलभूयस्त्वं तु युज्यते। यजमानसंस्काराणां तस्याधिक्यात्। तस्माद्गृहपतिसमाख्याया अर्थवत्त्वात्पुरुषार्थानां गृहपतिः कर्तेति। हौत्रवत्। तद्यथा हौत्रमिति समाख्याया अर्थवत्त्वाद्धोता हौत्रस्य कर्ता भवति, एवमिहापि ॥ ३५ ॥

आम्नायवचनाच्च ॥ ३६ ॥

आम्नायिकं वचनं गृहपतेः फलभूयस्त्वे भवति, यो वै सत्रे बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता। स हि भूयिष्ठामृद्धिमृध्नोतीति। तच्चैतस्मादेव कारणात्स्यात् ॥ ३६ ॥

सर्वे वा तदर्थत्वात् ॥ ३७ ॥ सि०

सर्वे वा यजमानाः पुरुषार्थानि कुर्युः, न गृहपतिरेव। कुतः। तदर्थत्वात्। सर्वार्थमेव हि कर्म, अविशेषेण हि श्रुतं, द्वादशाहमृद्धिकामा उपेयुरिति। यस्त्वेषां संस्कारैर्न युज्यते, तस्य गुणहीनमफलं कर्म भवेदिति। तत्राविशेषश्रुतिर्बाध्येत ॥ ३७ ॥

गृहपतिरिति च समाख्या सामान्यात् ॥ ३८ ॥

यथा गृहपतिः स्वयं कर्म न करोति, अन्ये तस्य कर्मकारा भवन्ति, एवमस्याप्यैत्यमेन सामान्येन स्वामित्वप्रकर्षः, न फलप्रकर्षः, फलप्रकर्षाभावात् ॥ ३८ ॥

ननु स्वार्थकामेन यजमानाः क्रत्वर्थं परिहापयन्ति। अत्रोच्यते—

विप्रतिषेधे परम् ॥ ३९ ॥

---

३९ ॥ ३६ ॥ ३७ ॥ ३८ ॥

---

१ अन्वयो—ग. पु.। २ क्रत्वर्थं न परिहापयेयुः—क.।

यत्र क्रत्वर्थेन पुरुषार्थस्याविप्रतिषेधः, तत्र स्वार्थं करिष्यन्ति। विप्रतिषेधे तु परकीयं क्रत्वर्थम्। किं कारणम्। क्रत्वर्थे ह्यक्रियमाणे क्रतुरेव न संपद्यते। पुरुषार्थे तु हीने पुरुषो विगुणः। अङ्गगुणविरोधे च तादर्थ्यादिति क्रत्वर्थो बलवान्। तस्मात्कर्तव्यः ॥ ३९ ॥

हौत्रे परार्थत्वात् ॥ ४० ॥

यत्तु हौत्रवदिति। हौत्रे परार्थः पुरुषः, न कर्म पुरुषार्थम्। तत्रैकेन केवलेन कर्तव्यं, न सर्वैः। तत्र समाख्या नियामिका स्यात्। इह पुनर्गृहपतिरिति समाख्या निवृत्तिं न शक्नोति कर्तुम्। यतोऽन्यथाऽपि युज्यते। अयुज्यमानाऽपि काममनर्थिका स्यात्। नैव निवर्तयितुं शक्नुयात्। निवर्तकस्य वचनस्याभावात् ॥ ४० ॥

वचनं परम् ॥ ४१ ॥

यत्तु दर्शनमुपदिष्टं, स सत्रस्य प्रत्येता, इति। न तद्दर्शनम्। किं तर्हि। वचनं तत्। फलभूयस्त्वस्याप्राप्तेः। प्राप्तिपूर्वकं हि दर्शनं भवति ॥ ४१ ॥

( ब्राह्मणस्यैवाऽऽर्त्विज्याधिकाराधिकरणम् ॥ १९ ॥ )

[१५] प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥ पू०

ऋत्विक्त्वं सर्ववर्णानां—ब्राह्मणराजन्यवैश्यानां स्यात्। कुतः। प्रभुत्वात्। प्रभवन्ति सर्वे, शक्नुवन्ति कर्तुम्। सर्वेऽध्ययनवन्तो विद्वांसश्च। न ह्यविद्वान् विहितोऽस्ति। ऋणापाकरणं सर्वेषां कर्म। प्रदर्शनार्थं ब्राह्मणग्रहणमित्युक्तम् ॥ ४२ ॥

स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥ ४३ ॥ सि०

ब्राह्मणानामेवाऽऽर्त्विज्यं स्यात्, नेतरयोर्वर्णयोः। कुतः। स्मृतेः। एवं शिष्टाः स्मरन्ति। याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति। स्मृतिश्च प्रमाणमित्युक्तम्। अपि वा कारणाग्रहणे प्रयुक्तानि

---

३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

---

१ (अ० १२ पा० २ अ० ६ सू० २५)। २ वचनम्। तत्फल—क. ग. सु.। ३ (अ० ३ पा० ८ अ० ८ सू० १८)। ४ (अ० ६ पा० २ अ० ११ सू० ३१)। प्रत्यत्रेति शेषः। ५ (अ० १ पा० ३ अ० २ सू० ३)।

प्रतीयेरन् । तस्माद्ब्राह्मणा एव याजयेयुः ॥ ४३ ॥

फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥

इतरेषां—राजन्यवैश्यानां, फलचमसो विधीयते । स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति । यथा यदि क्षीरे लिप्स्यति तक्रं दीयते, तत्र यदि वा क्षीराभावो विज्ञायते, यदि वा भोक्तुरक्षीरभोजित्वं, इहापि सोमे बिभक्षयिषिते फलानि दीयन्ते, तत्रापि सोमाभावो वा, यदि वा भोक्तुरसोमपत्वं विज्ञायते । तत्र सोमस्तावत्संनिहितः । तस्मान्न सोमाभावः, भोक्तुस्त्वसोमपत्वं विज्ञायते । न वाऽसोमपाभ्यां शक्यत आर्त्विज्यं कर्तुम् । नियमात्सोमभक्षस्य । तस्मान्न राजन्यवैश्ययोरार्त्विज्यम् ॥ ४४ ॥

सांनाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात् ॥ ४५ ॥ सि०

अपि च सांनाय्ये भक्षं राजन्यवैश्ययोः प्रतिषेधन्, असोमपीथत्वं हेतुमाह । न राजन्यो न वैश्यो वा सांनाय्यं पिबेत्, असोमपीथो ह्येष इत्येवं ब्रुवन् सोमपीथाभावं राजन्यवैश्यानां दर्शयति ॥ ४५ ॥

चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥

दर्शपूर्णमासयोश्च पुरोडाशस्य चतुर्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते । ब्राह्मणानामिदं हविः सौम्यानां सोमपीथिनां, नेहाब्राह्मणस्यास्तीति । शेषभक्षणार्थं चतुर्धाकरणमित्युक्तम् । शेषभक्षाश्चर्त्विजाम् । यदि राजन्यवैश्ययोरप्यार्त्विज्यमस्ति, न ब्राह्मणानामेवेदं हविः स्यात् । राजन्यवैश्ययोरपि पक्षे स्यात् । तत्रेदमवधारणमसमर्थं भवेत् ॥ ४६ ॥

अन्वाहार्ये च दर्शनात् ॥ ४७ ॥

दार्शपूर्णमासिक्यां चान्वाहार्यदक्षिणायां ब्राह्मणा एव दृश्यन्ते । त

---

४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

---

१ न्यग्रोधवल्लरी—क. मु. । २ प्रकल्पयेत्—क. ग. । ३ क्षीरे सति तक्रं—ग. । ४ न च—ग. । ५ प्रतिषेधः सोम—क. ख. मु. । ६ ( अ. ३ पा० ५ अ० १७ सू० ५० ) इत्यत्रोति शेषः ।

एते वै देवा अहुतादो यद्ब्राह्मणा यदन्वाहार्यमाहरन्ति तानेव तेन प्रीणातीति । दक्षिणा च ऋत्विग्भ्यो दीयते । तस्माद्ब्राह्मणानामार्त्विज्यम् । यस्मादित्थं[1] स्मृतिः । तां चैतानि दर्शनान्युपोद्बलयन्ति । तस्मादार्त्विज्यं ब्राह्मणानामेव स्यान्नेतरयोर्वर्णयोरिति[2] ॥ ४७ ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये द्वादशाध्यायस्य चतुर्थः पादः ॥

---

संपूर्णो द्वादशाध्यायः ॥

---

समाप्तं चोत्तरषट्कम् ॥

---

४७ ॥ ]

इति श्रीमद्भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां द्वादशाध्यायस्य चतुर्थः पादः ॥

---

समाप्तो द्वादशोऽध्यायः ॥

---

१ यस्मादित्थंलक्षणा स्मृतिः—ग. मु. । २ इतःपरं यत्, त्रयोदशाध्यायप्रभृति षोडशाध्यायान्तमध्यायचतुष्टयात्मकं संकर्षकाण्डापरनामधेयं जैमिनीयं शास्त्रं तन्मीमांसावासनावासितान्तःकरणानां सुप्रसिद्धमेवास्ति । येन च पूर्वमीमांसाशास्त्रं पूर्णतां यास्यति । तस्य च संकर्षकाण्डस्य शाबरं भाष्यं तत्र तत्र ग्रन्थकृतां व्यवहारेण सत्तां भजमानमपि नोपलभ्यते । तदुपलम्भने स्थितोऽप्याधिकं प्रयत्नं विधाय तत्प्रकाशनेऽपि यत्नं करिष्याम इति शम् ।

# पञ्चम–षष्ठभागस्थपूर्वमीमांसासूत्राणां वर्णानुक्रमसूचीपत्रम् ।


| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| **अ.** | |
| अकर्म वा कृतदूषा स्यात् ... | २२२९ |
| अकर्म वा चतुर्भिराप्तिवचनात्.... .... ... | १८२९ |
| अकर्म वा संसर्गार्थनिवृत्तित्वात् .... .... | १८३० |
| अक्रतुयुक्तानां वा धर्मः स्यात् .... ... .... | २०६८ |
| अग्न्यतिग्राह्यस्य विकृतावुपदेशात् .... .... ... | २०७७ |
| अग्रहणादिति चेत्... ... | २०३७ |
| अङ्गगुणविरोधे च.... ... | २१४८ |
| अङ्गविपर्यासो विना.... ... | २१८६ |
| अकार्यत्वाच्च नाम्नः .... | १८६८ |
| अकार्यत्वाच्च शब्दानाम् .... | १७०९ |
| अङ्गानि तु विधानात् ... | २१३८ |
| अङ्गानां तु शब्दभेदात् ... | २१०३ |
| अङ्गानां तु मुख्यकालत्वात्... | २१६६ |
| अग्न्याधेये त्वविप्रतिषेधात्.. | २१८४ |
| अग्न्याधेयस्य नैमित्तिके ... | १८७७ |
| अग्निधर्मः प्रतीष्टकम् ... | १६६८ |
| अग्निवदिति चेत् ... ... | २१७९ |
| अग्नियोगः सोमकाले .... | २१७५ |
| अग्निहोत्रे चाशेषवद्यवागूनियमः .... .... .... | २१२९ |
| अग्नीषश्च वनिष्टुरध्यूघ्नीवत्.... | २०३१ |
| अग्नीषोमविधानात्तु.... ... | २०९० |
| अग्नेर्वा स्यात् ... .... | १६७० |
| अङ्गेषु च तदभावः ... | २१६७ |
| अचोदनेति चेत् ... ... | २१४९ |
| अजामिकरणार्थत्वाच्च ... | २०९२ |
| अतिथौ तत्प्रधानत्वमभावः... | १६९७ |
| अतुल्याः स्युः परिक्रये .... | १८९६ |
| अर्थकर्म वा शेषत्वाच्छ्रयणवत् .... .... ... | २१९९ |
| अर्थकारिते च द्रव्येण ... | १६९९ |
| अर्थप्राप्तवदिति चेत् ... | २०९८ |
| अर्थभेदस्तु तत्राथेह .... | २१०३ |
| अर्थवादश्च तदर्थवत् .... | १७९२ |
| अथ विशेषलक्षणम् .... | १९८९ |
| अर्थवांस्तु नैकत्वात् .... | २११७ |
| अर्थस्य चासमाप्तत्वात् .... | १६२९ |
| अर्थात्तु लोके विधितः .... | २१२९ |
| अर्थाद्वा लिङ्गकर्म स्यात् ... | २२०९ |
| अर्थाभावात्तु नैवं स्यात् .... | १७९४ |
| अर्थाश्रितेस्तद्धर्मा ... ... | १८७९ |
| अर्थाभिधानसंयोगात् .... | १६८० |
| अर्थान्तरे विकारः... .... | १७६४ |
| अर्थाभावे संस्कारत्वम् .... | १६६२ |
| अर्थे त्वश्रूयमाणे शेषत्वात्.... | १९२१ |
| अर्थेन च विपर्यासे ... | १८६३ |
| अर्थैकत्वाद्विकल्पः स्यात् .... | १७२१ |
| अर्थैकत्वाद्विकल्पः स्यादृक्सामयोः.... .... ... | १७२१ |
| अर्थो वा स्यात्प्रयोजनम् .... | १६१६ |

| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| अदक्षिणत्वाच्च ... ... | २०१२ |
| अधर्मत्वमप्रदानात्... ... | १७८७ |
| अधिकश्च गुणः साधारणे... | २२९४ |
| अधिकैश्चैकवाक्यत्वात् .... | १९१९ |
| अधिकं वाऽर्थवत्त्वात् .... | २०३५ |
| अधिकं वाऽन्यर्थत्वात् .... | १९२० |
| अधिकं स्यादिति चेत् .... | २०१० |
| अधिकं च विवर्णं च .... | १७२८ |
| अध्रिगोश्च तदर्थत्वात् .... | १७८० |
| अध्रिगौ सवनीयेषु तद्वत् ... | १७९६ |
| अधिकारादिति चेत् .... | ११६२ |
| अधिकाराद्वा प्रकृतिस्तद्विशिष्टा | ११६७ |
| अधिकानां च दर्शनात् ... | १९९८ |
| अधिकारश्च सर्वेषाम् ... | २११२ |
| अध्रिगोश्च विपर्यासात् ... | २११४ |
| अध्यूध्नी तु होतुः .... | २०२९ |
| अनपायश्च कालस्य ... | २०९३ |
| अनभ्यासस्तु वाच्यत्वात् .... | २११९ |
| अनभ्यासे पराक्शब्दस्य .... | १९६२ |
| अनभ्यासो वा प्रयोगवचनैकत्वात् ... | २११८ |
| अनवानोपदेशश्च तद्वत् ... | १७०९ |
| अन्ते यूपाहुतिस्तद्वत् .... | २१४१ |
| अनसां च दर्शनात् .... | २२२८ |
| अन्यविधानादारण्यभोजनम् .... | २२३३ |
| अन्यतरतोऽतिरात्रत्वात् ... | ११११ |
| अन्वयो वाऽर्थवादः ... | १७२८ |
| अन्वयो वाऽनारम्भविधानात् ... .... | १९६१ |
| अन्वयं चापि दर्शयति ... | १७२८ |
| अनाम्नातवचनमवचनेन .... | १७७३ |
| अनाम्नानादशब्दत्वम् .... | १७१७ |
| अनाम्नाते च दर्शनात् .... | २०७७ |
| अन्यायस्त्वविकारेणं .... | १७४९ |
| अन्वाहार्ये च दर्शनात् .... | २२८७ |
| अन्वाहेति च शस्त्रवत्कर्म स्यात् .... ... | १९३७ |
| अनिर्देशाच्च .... .... | १७९२ |
| अनियमः स्यादिति चेत् ... | २१९२ |
| अनियमोऽविशेषात् ... | १८८८ |
| अनिज्यां च वनस्पतेः .... | १७९७ |
| अनिज्या वा शेषस्य .... | २०४६ |
| अनुनिर्वाप्येषु भूयस्त्वेन ... | २२९६ |
| अनुवादमात्रमन्तिकस्य .... | २१४६ |
| अनुवादो वा दीक्षा यथा .... | ११७२ |
| अनुवादश्च तदर्थवत् ... | ११६९ |
| अनुवषट्काराच्च ... | ११०६ |
| अनुत्तरार्थो वाऽर्थवत्त्वात् ... | ११३० |
| अन्ते वा कृतकालत्वात् ... | १९९९ |
| अन्ते वा कृतकालत्वात् .... | २००० |
| अन्ये स्युर्ऋत्विजः.... .... | २००९ |
| अपदेशः स्यादिति .... | २००८ |
| अपनयो वा प्रसिद्धेनाभिसंयोगात् ..... .... | २११३ |
| अपनयो वाऽर्थान्तरे .... | १७९१ |
| अप्रकरणे तु यच्छास्त्रम् .... | २०७४ |
| अप्रमाणाच्छब्दान्यत्वे .... | १६९७ |
| अप्रातिकर्षो वाऽर्थहेतुत्वात्... | २१११ |

| सूत्राणि । | पृष्ठसंख्या । | सूत्राणि । | पृष्ठसंख्या । |
|---|---|---|---|
| अप्रतिषेधो वा दर्शनादि- | | अपि वा धर्माविशेषात् .... | १९७१ |
| डायाम् .... .... ... | २०४१ | अपि वा परिसंख्या .... | २०२१ |
| अप्रतिषिद्धं वा प्रतिषिध्य .... | २०४१ | अपि वा प्रतिमन्त्रत्वात् ... | १८७१ |
| अप्रयोगाङ्गमिति चेत् ... | २१७९ | अपि वा प्रतिपत्तित्वात् .... | २२०१ |
| अप्राकृतत्वान्मैत्रावरुणस्य ... | २०३१ | अपि वा पौर्णमास्याम् .... | २०८९ |
| अप्राकृते तद्विकारात् .... | १७३१ | अपि वा फलकर्तृसंबन्धात् .... | २१९९ |
| अपि त्वसंनिपातित्वात् ... | १७७० | अपि वा यजतिश्रुतेः ... | ११९० |
| अपि तु वाक्यशेषत्वादि- | | अपि वा यजमानाः ... | २००९ |
| तरपर्युदासः .... | २०१९ | अपि वा विहितत्वात् .... | २०८९ |
| अपि तु वाक्यशेषः .... | २०५९ | अपि वेन्द्राभिधानत्वात् .... | २२०१ |
| अपि वाऽऽख्याविकारत्वा- | | अपि वा शब्दपूर्वत्वात् .... | ११५२ |
| त्तेन .... .... | १९४१ | अपि वा श्रुतिभूतत्वात् .... | १९०१ |
| अपि वाऽऽग्नेयवद् द्विशब्दत्वम् | २०३४ | अपि वा शेषभूतत्वात् ... | १८०८ |
| अपि वाऽऽज्यप्रधानत्वात् ... | १९४९ | अपि वा शेषभूतत्वात्तत्संस्कारः | १८१९ |
| अपि वाऽतद्विकारात् .... | १९९८ | अपि वा संख्यावत्त्वात् ... | १९६७ |
| अपि वाऽभिधानसंस्कार- | | अपि वा संप्रयोगे .... .... | २११३ |
| द्रव्यम् .... .... | १७९९ | अपि वाऽहर्गणेषु ... .... | १९७१ |
| अपि वा कर्मवैषम्यात् .... | १८९१ | अपूर्वत्वाद्व्यवस्था स्यात् ... | ११६१ |
| अपि वा कर्मपृथक्त्वात्ते- | | अपूर्वत्वात्तथा पत्न्याम् .... | १७७१ |
| षाम् ... ... | २१४१ | अपूर्वव्यपदेशाच्च.... .... | १८२२ |
| अपि वा कर्मपृथक्त्वात्ते- | | अपूर्वासु तु संख्यासु .... | १९५२ |
| षां च .... .... ... | २१४३ | अपूर्वतां तु दर्शयेत् ... | २०१९ |
| अपि वा चोदनैककालमेक- | | अपूर्वे च विकल्पः.... .... | ११२३ |
| कर्म्यम् .... ... ... | २२११ | अपूर्वे त्वविकारः .... .... | १७५४ |
| अपि वा तदधिकाराद्धि- | | अपूर्वे चार्थवादः .... ... | २०११ |
| रण्यवत् .... .... | १९०२ | अपूर्वे च प्रकृतौ ... .... | २२५१ |
| अपि त्ववयवार्थत्वाद्विभक्त- | १८९९ | अब्राह्मणे च दर्शनात् .... | २०२१ |
| अपि त्वन्यायसंबन्धात् .... | १७५० | अभक्षो वा कर्मभेदात् .... | २०३३ |
| अपि वा दानमात्रम् .... | २०१० | अभ्यस्येतार्थवत्त्वात् .... | २२५९ |
| अपि वा द्विसमवायः .... | १७६१ | अभावदर्शनाच्च .... ... | २२४० |

| सूत्राणि । | पृष्ठसंख्या । | सूत्राणि । | पृष्ठसंख्या । |
|---|---|---|---|
| अभावादतिरात्रेषु .... .... | १९६१ | अविभागाच्च ... ... | २२०१ |
| अभ्यासात्तु प्रधानस्य .... | १८७१ | अविरुद्धोपपत्तिरर्थापत्तेः ... | १८१७ |
| अभ्यासेऽपि तथेति चेत् .... | १७६८ | अविरोधो वा उपरिवासः .... | २२९६ |
| अभ्यासेन तु संख्यापूरणम् | १९५६ | अविशेषान्नेति चेत् .... | १९९७ |
| अभ्यासेनेतरा श्रुतिः .... | १७०९ | अविशेषेण यच्छास्त्रम् ... | २०६९ |
| अभ्यासे च तदभ्यासः .... | २००० | अश्वस्य चतुस्त्रिंशत्तस्य .... | १७७४ |
| अभ्यासो वा छेदनसंमार्गावदा-नेषु .... ... .... | २११९ | अशास्त्रत्वाच्च देशानाम् .... | २१४६ |
| | | अशास्त्रत्वात्तु नैवं स्यात् .... | २०२९ |
| अभ्यासो वा प्रयाजवदेकदेशः | १८१८ | अशास्त्रलक्षणत्वाच्च .... | ११२१ |
| अभ्यासो वाऽविकारात् ... | १७७३ | अशास्त्रलणाच्च ... | २२९१ |
| अभ्यासः सामिधेनीनाम् ... | ११७४ | अशिष्टेन च संबन्धात् .... | २०९२ |
| अभ्युदये दोहापनयः ... | १७८९ | अश्रुतित्वाच्च ... | १९९७ |
| अभ्युहश्चोपरिपाकार्थत्वात् | १८२१ | अश्रुतत्वान्नेति चेत् ... | ११०० |
| अयज्ञवचनाच्च .... .... | १९५९ | अश्रुतित्वान्नेति चेत् ... | १९९४ |
| अयाज्यत्वाद्रसानां भेदः ... | २२०६ | असति चासंस्कृतेषु ... | २२७९ |
| अवभृथे च तद्वत् ... ... | २१७७ | असिद्धिर्वाऽन्यदेशत्वात् .... | २२२७ |
| अवभृथे प्रधानेऽग्निविकारः.... | २१४७ | अस्थियज्ञोऽविप्रतिषेधात् .... | १८४६ |
| अवभृथे बर्हिषः .... .... | २०४७ | असंयोगात्तदर्थेषु .... | ११८८ |
| अवेष्टौ चैकतन्त्र्यम् ... | २१९४ | असंयोगाद्विधिश्रुतावेक- .... | १८८१ |
| अव्यक्तासु तु सोमस्य .... | १९९३ | असंयुक्ता तुल्यवदितराभिः | १८८४ |
| अवाच्यत्वात् ... ... | २१५१ | असंबन्धश्च कर्मणा .... | १७०४ |
| अविकारो वा प्रकृतिवच्चोद-नाम् ... .... ... | २२१८ | असंसृष्टोऽपि तादर्थ्यात् .. | २१२९ |
| | | असंशिरोनूकसक्थिप्रनिषेधश्च ... .... .... | २०२१ |
| अविकारो वाऽर्थशब्दानपा-यात् .... .... ... | १९३० | अहूनां चाश्रुतिभूतत्वात् ... | २१९८ |
| अविकारमेकेऽनार्षत्वात् ... | १७४६ | अहर्गणे च प्रत्यहम् ... | २१७८ |
| अविकारो वा बहूनामेककर्म-वत् .... .... .... | १७१९ | अहर्गणे विषाणाप्रासनम् .... | २१७१ |
| | | अहर्गणेऽन्त्यदिन एव .... | २१७३ |
| अविधानात्तु नैवं स्यात् ... | २१०१ | अहरङ्गं वांऽशुवत् .... | २००१ |
| अविधिश्चेत्कर्मणाम् ... | २१३१ | अहरन्ताच्च परेण ... | २००४ |

| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| अहीनवचनाच्च .... | १६१२ |
| अहीने दक्षिणाशास्त्रम् .... | २०१३ |
| आ. | |
| आख्या चैवं तदावेशात् .... | १७३३ |
| आगन्तुकत्वाद्वा स्वधर्मा .... | २२९७ |
| आगमेन वाऽभ्यासस्य .... | १९९४ |
| आग्रयणाद्वा पराकृशब्दः .... | १९६३ |
| आग्नेये कृत्स्नविधिः .... | २०१८ |
| आच्छादने त्वैकार्थ्यात् ... | १६१९ |
| आज्यसंस्था प्रतिनिधिः ... | १७९६ |
| आज्यभागवद्वा .... | २०२४ |
| आज्यभागयोर्वा .... .... | २०४७ |
| आज्यभागयोर्ग्रहणम् .... | २०४८ |
| आज्यं वा वर्णसामान्यात् ... ... ... | १६०५ |
| आघारे च दीर्घधारत्वात् .... | २२६५ |
| आदितो वा तन्न्यायत्वात् ... | १९४९ |
| आदितो वा प्रवृत्तिः .... | १९४८ |
| आनन्तर्यं च सांनाय्यस्य ... | २०८९ |
| आनुपूर्व्यवतामेकदेशग्रहणे .... .... .... | १९४७ |
| आनर्थक्यात्त्वधिकं स्यात् ... | १९१८ |
| आर्थपत्याच्च .... .... | १६९१ |
| आप्तिः संख्यासमानत्वात् .... | १८२९ |
| आमने लिङ्गदर्शनात् ... | १९१७ |
| आम्नानं परिसंख्यार्थम् .... | १९१० |
| आम्नायवचनं तद्वत् .... | २१९१ |
| आम्नातस्त्वविकारात् .... | १७७२ |
| आम्नातादन्यदधिकारे ... | १६९४ |
| आम्नायवचनाच्च... ... | २१८५ |
| आमिक्षोभयभाक्त्वात् .... | १६०८ |
| आरम्भणीया विकृतौ .... | २२४५ |
| आरम्भविभागाच्च .... | २२४६ |
| आरम्भस्य शब्दपूर्वत्वात् ... | २१०६ |
| आवापवचनं चाभ्यासे ... | १९९९ |
| आवृत्तिस्तु व्यवाये ... | २००१ |
| आवृत्त्या मन्त्रकर्म .... | १८७१ |
| आवेश्येरन् वाऽर्थत्वात् ... | १७३३ |
| आश्रितत्वाच्च ... .... | १७०५ |
| आसादनमिति चेत् ... | २१९० |
| इ. | |
| इज्याशेषात्स्विष्टकृदिज्येत .... | २०२६ |
| इतरप्रतिषेधो वा ... .... | २१४५ |
| इतरस्याश्रुतित्वाच्च.... ... | १६११ |
| इतरो वा तस्य .... .... | २२९० |
| इष्टिराजसूयचातुर्मास्येषु ... | २१४० |
| इष्टिरारम्भसंयोगात्.... .... | १८०३ |
| इष्टिरिति चैकवच्छ्रुतिः .... | २१४१ |
| इष्ट्यावृत्तौ प्रयाजवदावर्तेत | १६०६ |
| इष्टिषु दर्शपूर्णमासयोः ... | १९९१ |
| ई. | |
| ईहार्थाश्चाभावात् .. .... | १८९० |
| उ. | |
| उखायां काम्यनित्यसमुच्चयः | २२७९ |
| उत्कर्षाभावदर्शनम् .... .... | १९६१ |
| उक्तश्चार्थसंबन्धः ... ... | १६२८ |
| उक्तविकाराच्च ... .... | १९९४ |
| उक्तं च तत्त्वमस्य .... | १७१५ |
| उक्तं समवाये .... ... | १६२१ |
| उक्थ्यविच्छेदवचनत्वात् .... | १९६२ |

| सूत्राणि। | पृष्ठसंख्या। | सूत्राणि। | पृष्ठसंख्या। |
|---|---|---|---|
| उक्थ्याच्च वचनात् .... | १९६१ | उभयसाम्नि विश्वजिद्वद्विभागः .... .... | १९९७ |
| उक्थ्याग्निष्टोमसंयोगः ... | १९६३ | उभयसाम्नि नैमित्तिकम् .... | १९९९ |
| उत्कर्षः संयोगात् .... .... | २१८६ | उभयोरविशेषात् ... .... | १७४० |
| उत्कृष्येतैकसंयुक्तः ... | १७६२ | उभयोश्चाङ्गसंयोगः ... | २२१० |
| उत्कर्षे सूक्तवाकस्य .... | २१८८ | उभयोस्तु विधानात् .... | २०९३ |
| उत्तरस्य वा मन्त्रार्थित्वात् .... | १८७० | **ऋ.** | |
| उत्तरार्थस्तु स्वाहाकारः .... | १६२९ | ऋग्गुणत्वान्नेति चेत् .... | १६२३ |
| उत्तरासु न यावत् ... .... | २१२४ | ऋग्वा स्यादाम्नातत्वात् ... | १७७६ |
| उत्तरास्वश्रुतित्वात् .... | २१११ | ऋत्विग्दानं धर्ममात्रार्थम् .... | १८३९ |
| उत्सर्गाच्च भक्त्या .... .... | १७६२ | ऋजीषस्य प्रधानत्वात् ... | २०१८ |
| उत्सर्गस्य क्रत्वर्थत्वात् ... | १९०३ | **ए.** | |
| उत्पत्तिनामधेयत्वात् .... | १६२१ | एककर्मणि विकल्पोऽविभागः | १९९८ |
| उत्पत्तितादर्थ्याच्चतुरवत्तम् ... | २०७९ | एककर्मणि शिष्टत्वाद्गुणानाम् | २२१८ |
| उत्पत्तिर्वा प्रयोजकत्वात् .... | २१८१ | एकचस्थानि यज्ञे ... .... | १९८४ |
| उत्पत्तेस्तु निवेशः ... ... | २०९२ | एकत्वाद्वैकभागः ... .... | २०३२ |
| उदयनीये च तद्वत् .... | २११४ | एकत्वेऽपि गुणानपायात् ... | १७६३ |
| उदवसानीयः सत्रधर्मा ... | १८३९ | एकत्रिके तृचादिषु .... | १९४९ |
| उपगेषु शरवत् ... .... | १९१७ | एकद्रव्ये संस्काराणाम् .... | २२०८ |
| उपदेशाच्च साम्नः .... ... | १६९९ | एकदेशकालकर्तृत्वम् .... | २१३२ |
| उपधानं च तादर्थ्यात् .... | १८२९ | एकधेत्येकसंयोगात् .... | १७९९ |
| उपरवमन्त्रस्तन्त्रम् .... | २२१२ | एकधोपहारे सहत्वम् ... | १८३१ |
| उपरिष्टात्सोमानाम् .... | २१८९ | एकयूपं च दर्शयति .... | २११८ |
| उपवादश्च तद्वत् ... ... | २०६७ | एकवाक्यत्वाच्च .. .... | १८०७ |
| उपसत्सु यावदुक्तमकर्म ... | २०४९ | एकस्य वा गुणविधिः ... | २२१० |
| उपस्तरणाभिघारणयोः .... | १८२७ | एकस्य वा श्रुतिसामर्थ्यात .... | १९२३ |
| उपांशुयाजमन्तरा .... .... | २०८७ | एकस्मिन् वा विप्रतिषेधात् | १८२३ |
| उभयप्रदेशान्नेति चेत् .... | २०४९ | एकं तु समवायात् ... | १७६२ |
| उभयपानात् .... ... | १९४० | एकाग्निवच्च दर्शनम् .... | २२२२ |
| उभयसाम्नि चैवम् .... | १७३७ | एकार्थत्वान्नेति चेत् .... | २०१६ |

| सूत्राणि । | पृष्ठसंख्या । | सूत्राणि । | पृष्ठसंख्या । |
| --- | --- | --- | --- |
| एकार्थत्वादविभागः स्यात् ... | १७३४ | **क.** | |
| एकार्थास्तु विकल्पेरन् ... | २२९८ | कण्डूयने प्रत्यङ्गम् .... | २२११ |
| एकार्थत्वादविभागः .... | १८३४ | कपालविकारो वा ... .... | १८२० |
| एकाहाद्वा तेषां समत्वात् ... | १६१८ | कपालानि च कुम्भीवत् .... | २२०७ |
| एकेषां चाशक्यत्वात् .... | २२२१ | कपालेऽपि तथेति ... .... | २२७७ |
| एके तु कर्तृसंयोगात् .... | १९०१ | करिष्यद्वचनात् ... ... | २२१४ |
| एके तु श्रुतिभूतत्वात् ... | १८९७ | कर्तृभेदस्तथेति चेत् .... | २१९१ |
| एकेनापि समाप्येत .... | २१०८ | कर्तृविधेर्नानार्थत्वात् .... | २१०६ |
| एकैकशस्त्वविप्रतिषेधात् .... | १८४२ | कर्तृसंस्कारो वचनात् .... | २०१० |
| एकं वा चोदनैकत्वात् ... | १६०८ | कर्तुः स्यादिति चेत् .... | २०८४ |
| एकां पञ्चेति धेनुवत् .... | १८९९ | कर्म च द्रव्यसंयोगार्थम् ... | १८०७ |
| **ऐ.** | | कर्मणश्चैकशब्द्यात् .... | १८६७ |
| ऐककर्म्यादिति चेत् .... | २११० | कर्मणस्त्वप्रवृत्तित्वात् .... | १९९९ |
| ऐकशब्द्यान्नेति चेत् .... | २१०९ | कर्मणोस्तु प्रकरणे ... | २०८९ |
| ऐकशब्द्यात्तथाऽङ्गेषु ... | २१२४ | कर्मणोऽश्रुतत्वाच्च.... ... | २१३८ |
| ऐकसंख्यमेव स्यात् ... | १६१९ | कर्मण्यारम्भभाव्यत्वात् ... | २११२ |
| ऐकार्थ्याच्च तदभ्यासः ... | १७११ | कर्म वा विधिलक्षणम् .... | १७०२ |
| ऐकार्थ्याद्वा नियम्येत .... | १९९९ | कर्मस्वपीति चेत् .... .... | १९९८ |
| ऐकार्थ्याद्वा नियम्येत श्रुति- | २०५३ | कर्मसंतानो वा ... .... | २२६९ |
| ऐकार्थ्यादव्यवायः स्यात् ... | २१२८ | कर्माभावादेवम् ... .... | १६८९ |
| ऐकादशिनवत् .... .... | १९७८ | कर्मार्थत्वात्प्रयोगे .... .... | २१०९ |
| ऐकादशिनेषु ... .... | १९९२ | कामसंयोगात् ... .... | १९७७ |
| ऐन्द्रवायवस्याग्र- ... | १९७० | कामसंयोगे तु वचनात् ... | १९७१ |
| **ओ.** | | कामेष्टौ च दानशब्दात् ... | १८४४ |
| ओदनो वाऽन्नसंयोगात् .... | १८२० | काम्यानि तु न .... ... | १८९० |
| ओदनो वा प्रयुक्तत्वात् .... | १८२१ | कार्यत्वादुत्तरयोः ... ... | १९४१ |
| **औ.** | | कालभेदान्नेति .... .... | २१४० |
| औत्पत्तिके तु द्रव्यतः ... | १८९८ | कालभेदात्त्वावृत्तिः ... | २१४१ |
| औषधं वा विशदत्वात् .... | १६०३ | कालस्येति चेत् .... .... | १७३९ |
| | | कालान्तरेऽर्थवत्त्वम् .... | २२९९ |

| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| कालाभ्यासेऽपि .... ... | १६१९ |
| कार्त्स्न्यं वा .... ... | १७८० |
| कृत्स्नत्वात्तु तथा... .... | २०८४ |
| कृत्स्नविधानाद्वा .... ... | १९८८ |
| कृष्णलेष्वर्थलोपात् ... | १८२७ |
| क्रतुवद्वाऽनुमाने .... ... | २११६ |
| क्रतोश्च तद्गुणत्वात् ... | २०९३ |
| क्रत्वन्तरे वा ... ... | २०९४ |
| क्रत्वन्तरेषु ... .... | २१११ |
| क्रत्वर्थे तु ... ... | १८४९ |
| क्रत्वर्थायामिति ... .... | २१९६ |
| क्रमकोपश्च .... .... | २१२७ |
| क्रमादुपजनोऽन्ते .... ... | १९४८ |
| क्रयणश्रयण पुरोरुक्– .... | १६०६ |
| क्रयणेषु तु ... .... | २२७२ |
| क्रियाणामर्थविशेषत्वात् ... | २११९ |
| क्रियार्थत्वादितरेषु .... | १७८४ |
| क्रिया वा देवता .... ... | २२४१ |
| क्रिया वा मुख्यावदान– .... | १८२८ |
| क्रिया वा स्यात् .... .... | १७९९ |
| क्रिया स्याद्धर्ममात्राणाम् ... | १८९९ |
| क्रियेत वाऽर्थवादत्वात् ... | १८२७ |
| क्रियेरन् वाऽर्थनिर्वृत्तेः .... | १७३४ |
| क्वचिद्विधानान्नेति .... .... | २१३१ |
| **ग.** | |
| गणचोदनायां यस्य लिङ्गम्.... | १६१४ |
| गणादुपचयः .... ... | १५१७ |
| गणेषु द्वादशाहस्य .... | १९९४ |
| गते कर्मास्थियज्ञ– .... | १८५४ |
| गव्यस्य च तदादिषु ... | १९९४ |
| गानसंयोगाच्च .... .... | १६९९ |
| गायत्रीषु प्राकृतीनाम् .... | १६१८ |
| गुणकामेष्वाश्रितत्वात् ... | १९९७ |
| गुणकालविकाराच्च ... | २२१७ |
| गुणत्वेन देवताश्रुतिः ... | १६०१ |
| गुणमुख्यविशेषाच्च ... | १८२१ |
| गुणलोपे च मुख्यस्य .... | १८९९ |
| गुणशब्दस्तथेति चेत् ... | १६८३ |
| गुणादयज्ञत्वम् .... .... | १९६१ |
| गुणाद्वा द्रव्यशब्दः .... | १६२० |
| गुणानां च परार्थत्वात् .... | २०९३ |
| गुणार्थत्वादुपदेशस्य .... | २२६७ |
| गुणावेशश्च सर्वत्र ... ... | १६२६ |
| गुणेऽपीति चेत् .... .... | १८१९ |
| गुणो वा श्रयणार्थत्वात् ... | १७९२ |
| गुणो वा स्यात् ... .... | १८१४ |
| गृहपतिरिति च ... .... | २२८९ |
| गोत्ववच्च समन्वयः .... | १६२१ |
| ग्रहणं वा तुल्यत्वात् ... | २०७७ |
| ग्रहणं समानविधानम् .... | २०७८ |
| ग्रहणस्यार्थवत्त्वात्.... ... | २०९० |
| ग्रहणार्थं प्रयुज्येत... ... | १७०९ |
| ग्रहाणां देवतान्यत्वे ... | १९४२ |
| ग्रहाणां च संप्रतिपत्तौ ... | १८१९ |
| ग्रहार्थं च पूर्वमिष्टेः .... | २२६० |
| ग्रहाभावे च तद्वचनम् .... | १८१६ |
| **घ.** | |
| चतुर्थे चतुर्थेऽहनि ... | १९६७ |
| चतुर्धाकरणे च निर्देशात् .... | २२८७ |
| चरुर्हविर्विकारः ... .... | १८१९ |

| सूत्राणि । | पृष्ठसंख्या । | सूत्राणि । | पृष्ठसंख्या । |
| --- | --- | --- | --- |
| चरुशब्दाच्च ... .... | १६०३ | तत्काला त्वावर्तेत.... ... | २१७८ |
| चरौ वा लिङ्गदर्शनम् .... | १८२४ | तत्कालास्तु यूपकर्मत्वात् .... | २१६९ |
| चोदनानामनाश्रयाल्लिङ्गेन .... | १८९९ | तत्कालो वा प्रस्तरवत् ... | २१७२ |
| चोदनाप्रभुत्वाच्च ... | १८६६ | तत्पृथक्त्वं च दर्शयति ... | १८७७ |
| चोदनापृथक्त्वे .... ... | २२०१ | तत्प्रतिषिध्य प्रकृतिः ... | १७७९ |
| चोदना वा कर्मोत्सर्गात् .... | १७९६ | तत्प्रतिषेधे च तथाभूतस्य .... | १७८६ |
| चोदनालिङ्गसंयोगे .... | १९०९ | तत्प्रयुक्तत्वे च धर्मस्य .... | १६११ |
| चोदनालिङ्गसंयोगे तद्विकारः | १९१० | तत्प्रवृत्तिर्गणेषु .... ... | १९९३ |
| चोदनासमुदायात्तु... .... | १६७१ | तत्प्रवृत्त्या तु तन्त्रस्य ... | २२९४ |
| चोदनासु त्वपूर्वत्वात् .... | १९९१ | तत्संस्कारश्रुतेश्च ... .... | २०७९ |
| चोदनैकत्वाद्राजसूये .... | २१९० | तत्र दानं विभागेन .... | १८८९ |
| चोदिते तु परार्थत्वात् ... | १६८९ | तत्रान्यानृत्विजः .... ... | १८४२ |
| **छ.** | | तत्राभावस्य हेतुत्वात् ... | १६३२ |
| छन्दसि तु यथादृष्टम् .... | १७९१ | तत्राविप्रतिषिद्धौ द्रव्य- .... | १७०३ |
| छन्दोव्यतिक्रमाद्व्यूढे ... | १९८२ | तत्राहर्गणेऽर्थाद्धासः .... | २०१९ |
| **ज.** | | तत्रौषधानि चोद्यन्ते .... | १६३३ |
| जगत्साम्नि सामाभावा- | | तथाऽतिहविषोः ... | १६२८ |
| द्दृक्षः ... .... .... | १९६८ | तथाऽऽज्यभागाग्निरपीति .... | १८११ |
| जपाश्चाकर्मयुक्ताः .... | २२६९ | तथाऽभिघारणस्य .... | १८८१ |
| जातिनैमित्तिकं यथास्थानम् | १७४४ | तथाऽवदानम् .... | १८२६ |
| जात्यन्तरेषु भेदः .... ... | २२०७ | तथाऽऽशिरेऽपि ... | २१८३ |
| जुहोति चोदनानाम् .... | १६२७ | तथाऽऽरम्भसमवायाद्वा ... | १९३१ |
| जैमिनेः परतन्त्रापत्तेः ... | २२२२ | तथा कर्मोपदेशः .... | २१११ |
| ज्योतिष्टोम्यस्तु दक्षिणाः .... | २०१४ | तथा च लिङ्गदर्शनम् ... | १८२२ |
| **त.** | | तथा च लिङ्गदर्शनम् .... | १८९१ |
| तच्चोदना वेष्टेः ... ... | १६३१ | तथा च लिङ्गदर्शनम् .... | १९७४ |
| तच्छ्रुतौ चान्यहविष्ट्वात् .... | १६२१ | तथा च सोमचमसः ... | १९०२ |
| ततश्च तेन संबन्धः .... | १६९१ | तथा चान्यार्थदर्शनम् .... | १६०० |
| ततश्चावचनम् .... .... | १६८२ | तथा चान्यार्थदर्शनम् .... | १६१९ |
| ततोऽपि यावदुक्तम् ... | २०४० | तथा चान्यार्थदर्शनम् .... | २०९० |

| सूत्राणि । | पृष्ठसंख्या । | सूत्राणि | पृष्ठसंख्या । |
|---|---|---|---|
| तथा चान्यार्थदर्शनम् .... | २०८७ | तद्युक्तं च कालभेदात् .... | २२२८ |
| तथा चान्यार्थदर्शनम् .... | २१२४ | तद्देशानां वा .... | १६६६ |
| तथा चान्यार्थदर्शनम् .... | २१४१ | तदभावेऽग्निवदिति ... | १७३९ |
| तथा चान्यार्थदर्शनम् ... | २१३८ | तदभ्यासः समासु .... | १७१० |
| तथा चान्यार्थदर्शनम् ... | २१३२ | तदर्थमिति चेन्न .... | २०९२ |
| तथा चान्यार्थदर्शनम् .... | २२४८ | तदावृत्तिं तु .... | १६१६ |
| तथा चान्यार्थदर्शनम् ... | २२०२ | तदाऽवयवेषु स्यात् .... | २१४२ |
| तथा चान्यार्थदर्शनम् .... | २१९१ | तदुत्पत्तेर्वा प्रवचन— .... | २२६४ |
| तथा चान्यार्थदर्शनम् ... | २२०१ | तदुत्पत्तेस्तु निवृत्तिः ... | १७३२ |
| तथा चान्यार्थदर्शनम् .... | १८३८ | तदुक्तदोषम् .... | १७०१ |
| तथा चान्यार्थदर्शनम् .... | १७०९ | तदन्यद्रव्यं वचनात् ... | १७०३ |
| तथा चान्यार्थदर्शनं कामुकायनः ... .... | २१२८ | तद्युक्तस्येति चेत् .... | १६६१ |
| तथा तद्ग्रहणे ... | २०३९ | तद्वच्च देवतायाम् ... | २०८७ |
| तथा पय प्रतिषेधः .... | २१२५ | तद्देशानां वाऽग्रसंयोगात् .... | १९७२ |
| तथा पूर्ववति स्यात् .... | १६२३ | तद्धि तथेति चेत् .... | २१८० |
| तथा भूतेन संयोगात् .... | १८२८ | तन्त्रमध्ये विधानाद्वा .... | २२४२ |
| तथा व्रतमुपेतत्वात् ... | २२३० | तन्त्रमध्ये विधानाद्वा .... | २२१७ |
| तथा शरेष्वपि .... | १६२६ | तन्त्रिसमवाये चोदनातः .... | २२१५ |
| तथा स्यादध्वरकल्पायाम् .... | २१४२ | तन्नित्यवच्च ... | १६१९ |
| तथेतरस्मिन् ... | १६२५ | तन्न्यायत्वाददृष्टोऽपि ... | २२६३ |
| तथेतरस्मिन् ... | २२८१ | तन्न्यायत्वादशक्तेः .... | २१२८ |
| तथेतरस्मिन् .... | २१२२ | तस्मिन् सोमः ... | १६२८ |
| तथेतरास्मिन् ... | २०४८ | तस्मिन् पेषणम् .... | १८२४ |
| तथेह .... | २१४९ | तस्मिंश्च श्रपणश्रुतेः ... | १६०३ |
| तथेह ... | २१२२ | तस्य च पात्रदर्शनात् ... | १६०८ |
| तथेहापि स्यात् .... | १६२४ | तस्य धेनुरिति ... | १८९२ |
| तथैकार्थविकारे ... | २०५१ | तस्य च देवतार्थत्वात् ... | २२७९ |
| तथोत्तरस्याम् ... | १९२९ | तस्य वाऽप्यानुमानिकम् .... | २०६८ |
| तद्भूतस्थानादग्निवत् .... | २१७ | तस्याऽऽप्रयणाद्ग्रहणम् ... | १९६१ |
| | | तस्यां तु स्यात् .... | १८०६ |

| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| तस्यां तु वचनादैरवत् ... | १७७७ |
| तस्योभयथा ... | १९७७ |
| तादर्थ्याद्वा तदाख्यम् ... | १७९७ |
| ताम्रीणां प्रकरणात् .... | २०८८ |
| ताभ्यां वा सह .... | २०७९ |
| तासां च कृत्स्नवचनात् .... | १७९९ |
| तुल्यधर्मत्वात् .... | १९७४ |
| तुल्यवच्चाभिधाय ... | २०८० |
| तुल्या च प्रभुता गुणे ... | १८६८ |
| तुल्येषु नाधिकारः .... | १६६२ |
| तृचे वा लिङ्गदर्शनात् .... | १९८४ |
| तृचे स्याच्छ्रुतिनिर्देशात् ... | १७०९ |
| तृतीयसवने वचनात् ... | १९११ |
| तेन च कर्मसंयोगात् .... | १६०१ |
| तेन च संस्तवात् .... | २००४ |
| तेन त्वर्थेन यज्ञस्य .... | १६४३ |
| तेषु समवेतानाम् .... .... | २१३९ |
| तेषां चैकावदानत्वात् .... | १८२९ |
| तेषां तु वचनात् .... ... | १८४१ |
| तेषां वा द्व्यवदानत्वम् ... | २०२४ |
| तेषामप्रत्यक्षशिष्टत्वात् .... | १८०१ |
| त्रयस्तथेति चेत् .... ... | १९९२ |
| त्रयोदशरात्रादिषु .... ... | १६११ |
| त्रिकस्तृचे धूर्ये ... .... | १९५१ |
| त्रिवत्सश्च ... .... | १८९६ |
| त्रिवृति संख्यात्वेन ... | १९९६ |
| त्रिवृद्वदिति चेत् .... ... | १९९९ |
| त्र्यङ्गैर्वा शरवद्विकारः .... | २०२७ |
| त्र्यनीकायां न्यायोक्तेषु .... | १९७५ |

| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| **द.** | |
| दधि वा स्यात् .... .... | १९४९ |
| दधि संघातसामान्यात् .... | ११०९ |
| दध्नस्तु गुणभूतत्वात् .... | १९४४ |
| दध्नः स्यान्मूर्तिसामान्यात् .... | ११०८ |
| दर्विहोमो यज्ञाभिधानम् ... | १६२६ |
| दर्शनमैष्टिकानाम् .... .... | १९९० |
| दर्शनाच्चान्यपात्रस्य ... | १६२८ |
| दर्शयति च .... ... | १७०७ |
| दशपेये क्रयप्रतिकर्षात् ... | २११० |
| दशमविसर्गवचनात् ... | २००९ |
| दशमेऽहनीति च .... .... | २००९ |
| दक्षिणायुक्तवचनाच्च ... | १८३६ |
| दक्षिणेऽग्नौ .... ... | २१४८ |
| दातुस्त्वविद्यमानत्वात् .... | २०३० |
| दाने पाकोऽर्थलक्षणः .... | १८८० |
| दीक्षाणां चोत्तरस्य .... | २१११ |
| दीक्षितादीक्षितव्यपदेशः .... | २०१२ |
| दीक्षितस्य दानहोम— .... | २०१८ |
| दीक्षोपसदां च .... ... | २२०० |
| दृष्टः प्रयोग इति चेत् ... | ११२४ |
| दृष्टः प्रयोग इति चेत् ... | २११२ |
| देवतया वा नियम्येत ... | १६१३ |
| देवता तु तदाशीष्ट्वात् .... | १७११ |
| देवतायाश्च हेतुत्वम् ... | १८११ |
| देवतायास्त्वनिर्वचनम् .... | २०८८ |
| देवता वा प्रयोजयेत् .... | १६४९ |
| देशबद्धमुपांशुत्वम् .... | १६१२ |
| देशापृथक्त्वात् .... ... | २२३७ |
| देक्षस्य चेतरेषु .... ... | १९९२ |

| सूत्राणि । | पृष्ठसंख्या । |
|---|---|
| द्यावोस्तथेति चेत् .... ... | १७९४ |
| द्रवत्वं चाविशिष्टम् ... | १६०८ |
| द्रव्यत्वेऽपि समुच्चयः ... | २२७६ |
| द्रव्यदेवतं तथेति ... .... | २१३९ |
| द्रव्यदेवतवत् .... ... | २१४७ |
| द्रव्यविकारं तु पूर्ववत् ... | २२७९ |
| द्रव्यविधिसंनिधौ .... ... | १८८१ |
| द्रव्यसंख्याहेतुसमुदायम् .... | १६९७ |
| द्रव्यस्य चाकर्मकाल— ... | २१६६ |
| द्रव्यान्तरवद्वा .... .... | २२१० |
| द्रव्यान्तरे कृतार्थत्वात् .... | २२०९ |
| द्रव्यान्तरे निवेशात् .... | १६२१ |
| द्रव्येष्वारम्भगामित्वात् .... | १९३१ |
| द्रव्योपदेशाद्वा ... .... | १६२७ |
| द्वादशाहस्य व्यूढच्छन्दस्त्वम् | १९७६ |
| द्वादशाहस्य सत्रत्वम् .... | २०१२ |
| द्वादशाहे तत्प्रकृतित्वात् ... | २१२७ |
| द्वादशाहे तु वचनात् .... | २०१४ |
| द्विपुरोडाशायाम् ... ... | २०९१ |
| द्विभागः स्याद्द्विकर्मत्वात् .... | २०२२ |
| द्विरात्रादीनाम् .... .... | १६११ |
| द्वैध्ये चाचोदनात् ... .... | १८४९ |
| द्वैधं वा तुल्यहेतुत्वात् .... | १६९४ |
| **ध.** | |
| धर्ममात्रे त्वदर्शनात् ... | २११९ |
| धर्मस्यार्थकृतत्वात् .... | १७२९ |
| धर्माद्वा स्यात् .... ... | २०८८ |
| धर्मानुग्रहाच्च .... .... | १६०३ |
| धर्मानुग्रहाच्च ... .... | १६०५ |
| धर्मानुग्रहाच्च ... .... | १६०९ |
| धारणार्थत्वात्सोमे ... ... | २२२९ |
| धारणे च परार्थत्वात् .... | १७८३ |
| धारासंयोगाच्च ... .... | १९७१ |
| धुर्येष्वपीति .... ... | १९९९ |
| धेनुवच्चाश्वदक्षिणा .... | १९०० |
| ध्रौवाद्वा सर्वसंयोगात् .... | २०८७ |
| **न.** | |
| न कर्मसंयोगात् ... .... | १९४१ |
| न कर्मसंयोगात् .... .... | २२३४ |
| न कर्मसंयोगात् .... ... | २२३६ |
| न कर्मसंयोगात्प्रयोजनम् .... | २१०९ |
| न कर्मणः परार्थत्वात् .... | २२७७ |
| न कालभेदात् ... ... | २२०१ |
| न कृत्स्नस्य पुनः .... ... | २१८१ |
| न गुणार्थत्वात् ... .... | २२३२ |
| न गुणार्थत्वात्प्राप्ते .... | २०८४ |
| न गुणादर्थकृतत्वाच्च ... | १७१८ |
| न चाङ्गविधिरनङ्गे .... | १८६७ |
| न चानङ्गं सकृच्छ्रुतौ .... | २०९१ |
| न चान्येनाऽऽलभ्येत ... | १८३६ |
| न चाविशेषाद्व्यपदेशः .... | १८७७ |
| न चेदन्यं प्रकल्पयेत् ... | २०६३ |
| न चोदनाविविशेषत्वात् ... | २१३९ |
| न चोदनापृथक्त्वात् ... | २१८८ |
| न चोदनाभिसंबन्धात् .... | १८९८ |
| न चोदनैकत्वात् .... ... | २०९९ |
| न चोदितत्वात् .... .... | १९९८ |
| न चोदनैकवाक्यत्वात् .... | २१९८ |
| न तत्प्रधानत्वात् ... ... | १९९९ |
| न तदाशीष्ट्वात् ... .... | १८११ |

